# विवेक–मनीषा




Published on the occasion of
150th Birth Anniversary of Swami Vivekananda

*This book is published with financial assistance
from the Ministry of Culture, Government of India*

# विवेक-मनीषा

Published on the occasion of
150th Birth Anniversary of Swami Vivekananda






रामकृष्ण मिशन इनस्टिटिउट अव कालचार
गोलपार्क, कलकाता - ७०० ०२९

# प्रकाशक-निवेदनम्

स्वामिविवेकानन्दस्य सार्द्धशतवर्षीयजन्मजयन्तीमुपलक्ष्य कलकातास्थ-रामकृष्ण-मिशन-इनस्टिटिउट्-अव्-कालचाराख्यसंस्था नानापरिकल्पना-रूपायणतत्परा समास्ते। स्वामिमहोदयानामतिप्रियविषयः संस्कृत-भाषानुशीलनं नाम। इमामृद्धां भाषामाश्रित्य स्तोत्राणि गीतानि पत्राणि चानल्पानि अत्रभवद्भिर्विरचितानि। एतदुद्दिश्यात्र ग्रन्थे कतिपयसंस्कृतस्तोत्रादीनि सहायीकृत्य भाषान्तरे विद्यमाना प्रबन्धादयो देवभाषानुवादमुखेन सहृदयानां समीक्षकाणां कृते समुपन्यस्यन्ते। अस्य ग्रन्थस्य प्रकाशने उद्बोधनकार्यालयात् प्रकाशितः 'स्वामी विवेकानन्देर वाणी ओ रचनासंकलन' इति ग्रन्थः सर्वथाऽनुसृतः। ग्रन्थप्रकाशने भारतसरकारगतसंस्कृतिमन्त्रकप्रदत्तार्थानुकूल्यं सर्वथा सश्रद्धं स्वीक्रियते।

प्रबन्धादीनामनुवादकर्मणि सहायं कुर्वाणाः सर्वश्रीभूषिताः भारती-गङ्गोपाध्याय-सङ्घमित्रासेनगुप्त-साविरालि-विश्वरूपघोष-पीताम्बर-निराला-विप्लवकोटाल-सन्तुसिंह-राकेशदासप्रमुखाः धन्यवादार्हाः। पुनर्महामूल्यस्यास्य ग्रन्थस्य रूपादिचित्रणेऽतिनिपुणाः सीतानाथआचार्य-निखिलेशचक्रवर्त्ति-तन्मयभट्टाचार्याः सकृतज्ञं स्मर्य्यन्ते। आशास्महे सुधीजनसविधे निश्चिततया ग्रन्थोऽयं समादृतो भवेदिति शम्।

**स्वामिसुपर्णानन्दस्य**

# सूचीपत्रम्

# स्वामिविवेकानन्द-विरचित-स्तोत्राणि

## अम्बास्तोत्रम्

का त्वं शुभे शिवकरे सुखदुःखहस्ते
आघूर्णितं भवजलं प्रबलोर्मिभंगैः ।
शान्तिं विधातुमिह किं बहुधा विभग्नां
मातः प्रयत्नपरमासि सदैव विश्वे ॥

सम्पादयन्त्यविरतं त्वविरामवृत्ता
सा वै स्थिता कृतफलं त्वकृतस्य नेत्री ।
सा मे भवत्वनुदिनं वरदा भवानी
जानाम्यहं ध्रुवमियं धृतकर्मपाशा ॥

किं वा कृतं किमकृतं क्व कपाललेखः
किं कर्म वा फलमिहास्ति हि यां विना भोः ।
इच्छागुणैर्नियामिता नियमाः स्वतन्त्रै-
र्यस्याः सदा भवतु सा शरणं ममाद्या ॥

सन्तानयन्ति जलधिं जनिमृत्युजालं
सम्भावयन्त्यविकृतं विकृतं विमग्नम् ।
यस्या विभूतय इहामितशक्तिपालाः
नाश्रित्य तां वद कुतः शरणं व्रजामः ॥

मित्रे रिपौ त्वविषमं तव पद्मनेत्रं
स्वस्थेऽसुखे त्ववितथस्तव हस्तपातः ।
छायामृतेस्तव दया त्वमृतं च मात-
र्मुञ्चन्तु मां न परमे शुभदृष्टयस्ते ।।

क्वाम्बा शिवा क्व गृणनं मम हीनबुद्धे-
र्दोर्भ्यां विधर्तुमिह यामि जगद्विधात्रीम् ।
चिन्त्यं श्रिया सुचरणं त्वभयप्रतिष्ठं
सेवापरैरभिनुतं शरणं प्रपद्ये ।।

या मा चिराय विनयत्यतिदुःखमार्गै-
रासिद्धितः सकलितैर्ललितैर्विलासैः।
या मे मतिं सुविदधे सततं धरण्यां
साम्बा शिवा मम गतिः सफलेऽफले वा ।।

# शिवस्तोत्रम्

ॐ नमः शिवाय

निखिलभुवनजन्मस्थेमभङ्गप्ररोहाः
अकलितमहिमानः कल्पिता यत्र तस्मिन् ।
सुविमलगगनाभे त्वीशसंस्थेऽप्यनीशे
मम भवतु भवेऽस्मिन् भासुरो भावबन्धः ॥

निहतनिखिलमोहेऽधीशता यत्र रूढा
प्रकटितपरप्रेम्णा यो महादेवसंज्ञः ।
अशिथिलपरिरम्भः प्रेमरूपस्य यस्य
हृदि प्रणयति विश्वं व्याजमात्रं विभुत्वम् ॥

वहति विपुलवातः पूर्वसंस्काररूपः
विदलति बलवृन्दं घूर्णितेवोर्मिमाला ।
प्रचलति खलु युग्मं युष्मदस्मत्प्रतीतम्
अतिविकलितरूपं नौमि चित्तं शिवस्थम् ॥

जनकजनितभावो वृत्तयः संस्कृताश्च-
अगणनबहुरूपा यत्र चैको यथार्थः ।
शमितविकृतिवाते यत्र नान्तर्बहिश्च
तमहह हरमीडे चित्तवृत्तेर्निरोधम् ॥

गलिततिमिरमालः शुभ्रतेजःप्रकाशः
धवलकमलशोभः ज्ञानपुञ्जाट्टहासः ।
यमिजनहृदिगम्यो निष्कलो ध्यायमानः
प्रणतमवतु मां सः मानसो राजहंसः ।।

दुरितदलनदक्षं दक्षजादत्तदोषं
कलितकलिकलङ्कं कम्रकह्लारकान्तम् ।
परहितकरणाय प्राणप्रच्छेदप्रीतं
नतनयननियुक्तं नीलकण्ठं नमामः ।।

# श्रीरामकृष्णस्तोत्राणि

## (१)

ॐ ह्रीं ऋतं त्वमचलो गुणजित् गुणेड्यः
**न**-क्तन्दिवं सकरुणं तव पादपद्मम्।
**मो**-हङ्कषं बहुकृतं न भजे यतोऽहं
तस्मात्त्वमेव शरणं मम दीनबन्धो।।

**भ**-क्तिर्भगश्च भजनं भवभेदकारि
**ग**-च्छन्त्यलं सुविपुलं गमनाय तत्त्वम्।
**व**-क्त्रोद्धृतोऽपि हृदये न मे भाति किञ्चित्
तस्मात्त्वमेव शरणं मम दीनबन्धो।।

**ते**-जस्तरन्ति त्वरितं त्वयि तृप्ततृष्णाः
**रा**-गं कृते ऋतपथे त्वयि रामकृष्णे।
**म**-र्त्यामृतं तव पदं मरणोर्मिनाशं
तस्मात्त्वमेव शरणं मम दीनबन्धो।।

**कृ**-त्यं करोति कलुषं कुहकान्तकारि
**ष्णा**-न्तं शिवं सुविमलं तव नाम नाथ।
**य**-स्मादहं त्वशरणो जगदेकगम्य
तस्मात्त्वमेव शरणं मम दीनबन्धो।।

(२)

आचण्डालाप्रतिहतरयो यस्य प्रेमप्रवाहः

लोकातीतोऽप्यहह न जहौ लोककल्याणमार्गम्।

त्रैलोक्येऽप्यप्रतिममहिमा जानकीप्राणबन्धः

भक्त्या ज्ञानं वृतवरवपुः सीतया यो हि रामः।

स्तब्धीकृत्य प्रलयकलितं वाहवोत्थं महान्तं

हित्वा रात्रिं प्रकृतिसहजामन्धतामिस्रमिश्राम्।

गीतं शान्तं मधुरमपि यः सिंहनादं जगर्ज

सोऽयं जातः प्रथितपुरुषो रामकृष्णस्त्विदानीम्।।

(३)

नरदेव देव जय जय नरदेव

शक्तिसमुद्रसमुत्थतरङ्गं

दर्शितप्रेमविजृम्भितरङ्गं

संशयराक्षसनाशमहास्त्रं

यामि गुरुं शरणं भववैद्यं

नरदेव देव जय जय नरदेव।।

अद्वयतत्त्वसमाहितचित्तं

प्रोज्ज्वलभक्तिपटावृतवृत्तं

कर्मकलेवरमद्भुतचेष्टं

यामि गुरुं शरणं भववैद्यं

नरदेव देव जय जय नरदेव।।

(४)

सामाख्याद्यैर्गीतिसुमधुरैर्मेघगम्भीरघोषै-
यज्ञध्वानि-ध्वनितगगनैर्ब्राह्मणैर्ज्ञातवेदैः।
वेदान्ताख्यैः सुविहित-मखोद्भिन्न-मोहान्धकारैः
स्तुतो गीतो य इह सततं तं भजे रामकृष्णम्।।

(५)

स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे।
अवतारवरिष्ठाय रामकृष्णाय ते नमः।।

# पद्यावलिः

## प्रबुद्ध-भारतं प्रति

भूयोऽपि जागृहि न मृत्युरियं हि निद्रा
सञ्चारणाय हृदये नवजीवनस्य।
ध्यानार्थिनेऽधिकतरोन्नतलक्ष्यभाजे
विश्राममर्पयितुमब्जदृशोर्युगाय।।
हे सत्य! पश्य ननु विश्वजनो भवन्तम्
आस्ते प्रतीक्ष्य; न हि तेऽस्ति कदापि मृत्युः।।
भाषस्व विश्वम् — अथ न स्वपनं शुभं ते
उत्तिष्ठ जागृहि धृतं स्वपनेन विश्वम्।
उत्सूमाल्यमिह सीव्यति कर्म नित्यम्
उच्चावचैर्हि कुसुमैर्वत भावनायाः।।

गर्भेऽसतः समुदितैरपमूलवृन्तैः
श्वासानिलेन लघुनापि लयं प्रयान्ति।
सत्यस्य तानि वितते वत तत्र शून्ये
सृष्टेर्यदादिसमयेऽलभतात्मसत्ताम्।।

भीमुक्तमेधि भयहीनतया च तिष्ठ
सत्याग्रहं कुरु समाश्रय सत्यभावम्।

एकात्मकत्वमुपयाहि मिलदृतेन
स्वप्नो मृषा विलयमेतु च कर्मजन्यः॥
प्रारिप्ससे यदि पुनः स्वपनस्य लीलां
तां पश्य सत्यविषये गतिरस्ति यस्याः।
निष्कामकर्मविषयं स्वपनं तवास्तां
प्रेमापि सीमरहितो भवतु त्वदीयः॥

# जननी काली

निर्वाति निःशेषमुडुप्रपञ्चो
मेघोऽपि मेघान्तरमावृणोति।
तमिस्रराजिर्ध्वनति स्फुरन्ती
गर्जत्यहो घूर्णितवायुवेगः।।

वन्दीगृहाभ्यन्तरतः प्रमत्ताः
प्राणा बहिर्भूय च लक्षलक्षम्।
समूलमुत्पाट्य तरून् प्रयान्ति
फुत्कारवेगेन निरस्य मार्गे।।

युद्धाय संनह्यति वारिराशि-
स्तरङ्ग आक्रामति शैलश्रृङ्गम्।
नभस्तलं स्प्रष्टुमना विकाश-
हासं विधत्ते तडिदुग्ररूपा।।

तया प्रकाशं परितो व्रजन्ति
मृत्यूचितं बिभ्रति कालिमानम्।
छायाशरीराण्यपि लक्षलक्षं
दुःखस्य राशीन् भुवने विकीर्य।।

नृत्यन्ति तान्युन्मदताण्डवेन
समेहि मातर्मर्ममृत्युरूपे।

करालि! नामापि च ते करालं
प्रश्वास-निःश्वासगतश्च मृत्युः।।
सञ्चारणं ते चरणस्य भीमं
क्षणे क्षणे नाशयति त्रिलोकीम्।
काली ह्यसि त्वं प्रलयैकरूपा
मातस्त्वमाविर्भव मत्समक्षम्।।
यः साहसेनेच्छति दुःख-दैन्ये
स्वबाहुपाशेन वृणोति मृत्युम्।
मुदान्वितः पश्यति कालनृत्यं
तत्सन्निधौ गच्छति मातृरूपा।।

# जुलाइमासस्य चतुर्थो दिवसः

विलीयते पश्य पुरः सुनील-
पयोदपुञ्जः सुविषादमूर्तिः।
क्षपान्धकारं प्रविधाय सान्द्रं
धरासु राशीकृत आस यः पुरा।।

स्पर्शेन तावत्तव मोहनेन
विनिद्रमेतज्जगदस्ति पश्य।
विहङ्गसङ्घो विदधाति तानं
विनीतनिद्रः प्रतिपादपाग्रम्।।

दलानि पौष्पाणि समानयन्ति
नीहारभूषं मुकुटं हि तारम्।
सुस्वागतं तुभ्यममूनि कामं
दोदुल्यमानानि निवेदयन्ति।।

सरांसि च प्रेमभरेण नेत्रा-
ण्युन्मीलयन्त्यम्बुजनुःशतानि।
तवैव कर्तुं वरणं यतन्ते
निजाभिरुत्सीमगभीरताभिः।।

एहि त्वमालोकनराधिराज
त्वदर्थमाह्लादमदोऽन्तरुत्थम्।

हे सूर्य! विस्तारयसि त्वमद्य
निर्वाणमुक्तिं प्रतिदिग्विभागम्।।

आसीद् धरा त्वामनुपालयन्ती
कथञ्च कालान् कति चेति चिन्त।
तवैव सन्धानकृतेऽनुदेशं
जहुर्गृहान् हा कति नानुकालम्।।

प्रीतीः प्रियाणामवधीर्य मेजु-
र्निर्वासिताः काननमादिमं ते।
विदारयन्तो जलधिं सुभीमं
पदे पदे जीवनमृत्युभीताः।।

अनन्तरं तद्दिनमागतं शुभं
यदा तु सर्वं सफलत्वमागतम्।
ताः साधना-प्रेम-समर्चन-क्रिया-
स्तदात्मदानञ्च वदा त्वमग्रहीः।।

पूर्णमासीत् सफलं सुसार्थकं
तदोदतिष्ठस्त्वमपाप शुभ्र।
आलोकराशिं वितरीतुकामो
विश्वस्य सर्वस्य हि मानवेभ्यः।।

चल प्रभो त्वं चल तावदेव
तदीय-माध्यन्दिन-तीक्ष्णभाभिः।

विप्लावितं स्याद् भुवनं न यावत्
न च प्रभा सा निखिले विकीर्णा।।
न चापि नार्यश्च नराश्च सर्वे
समुन्नमय्य स्वशिरांसि वाढम्।
छिन्नं प्रपश्यन्ति न श्रृङ्खलं स्वं
न हासवज्जीवनमाप्नुवन्ति।।

# आशिषः

मातुर्ममत्वमथ वीरजनस्य चित्तं
या माधुरी मलयपर्वतगन्धवाहे।
निर्बाधकर्चिरनलस्य यदार्यवेद्यां
पुण्योज्ज्वलं ज्वलनमीक्षणलोभनीयम्।।
यच्चाप्यतीत-महता मनसाऽप्यगम्यम्—
एतानि सन्तु निखिलानि तवैव भद्रे!
आगामि-भारतभुवो भवितां जनानां
दासी सखी प्रभुरपि स्वयमेव भूयाः।।

# आह्वानम्

किन्नाम रोदिषि सखे त्वयि सर्वशक्तिरामन्त्रयस्व भगवन् भगदं स्वरूपम्।

त्रैलोक्यमेतदखिलं तव पादमूले आत्मैव हि प्रभवते न जडः कदाचित्।।

कुर्मस्तारकचर्वणं त्रिभुवनमुत्पाटयामो बलात्।

किं भो न विजानास्यस्मान्, रामकृष्णदासा वयम्।।

क्षीणाः स्म दीनाः सकरुणा जल्पन्ति मूढा जना

नास्तिक्यन्त्विदन्तु अहह देहात्मवादातुराः।

प्राप्ताः स्म वीरा गतभया अभयं प्रतिष्ठां यदा

आस्तिक्यन्त्विदन्तु चिनुमः रामकृष्णदासा वयम्।।

पीत्वा पीत्वा परमममृतं वीतसंसाररागाः

हित्वा हित्वा सकलकलहप्रापिणीं स्वार्थसिद्धिम्।

ध्यात्वा ध्यात्वा गुरुवरपदं सर्वकल्याणरूपम्

नत्वा नत्वा सकलभुवनं पातुमामन्त्रयामः।।

प्राप्तं यद्वै त्वनादिनिधनं वेदोदधिं मथित्वा

दत्तं यस्य प्रकरणे हरिहरब्रह्मादिदेवैर्बलम्।

पूर्णं यत्तु प्राणसारैर्भौमनारायणानां

रामकृष्णस्तनुं धत्ते तत्पूर्णपात्रमिदं भोः।।

# संन्यासिनो गीतिः

दूरादैहिकरूपशून्यगीरितः प्रोत्थं घनारण्यतो,
शान्तं यद्धनकामकीर्तिभिरपि व्याहन्यतेऽद्यापि नो ।
सत्यं ज्ञानसुखप्रवाहसहितं, नित्यं यदुच्चस्वरै-
र्गीतं तन्ननु गीयतां स्थिरमते ! ॐतत्सदोमित्यदः ।।

भ्रातर्नाशय बन्धकं स्वनिगडं हैमं भवेद्वायसं
प्रेमेर्षासदसत्स्वरूपमखिलं द्वन्द्वं परित्यज्यताम् ।
दासौ पूजितदण्डितावपि समौ यत्कांचनं बन्धनं
स्थेयो धीरयतेस्ति गायतु भवानोंतत्सदोमित्यदः ।।

या त्वज्ञानमरीचिकान्धतमसं संवर्धयन्ती भृशं
मृत्योर्मृत्युमभीक्ष्णमानयति या तामैहिकेहां त्वजेः ।
'विश्वं जेतुमलं कृतात्मविजयो' जानन्निदं दुःखितो
मा भूर्धीरयतेऽद्य गायतु भवानोंतत्सदोमित्यदः ।।

'भोग्यं कर्मफलं' ब्रुवन्ति नियतं कार्यं निदानात्सतः
हेतोः सत्फलमेत्य सदसतोः बाधो न विध्याश्रयः ।
रूपं बन्धनवत् तथापि नितरां त्वं नामरूपातिगो
मुक्तात्मा, ननु गीयतां स्थिरयते! ॐ तत्सदोमित्यदः ।।

यन्मित्रं जननी पिताथ तनयस्तत्स्वप्नतुल्यं वृथा
माता कस्य सुतोऽथ मित्रमथवाऽलिङ्गः स एकोऽस्ति चेत् ।

सर्वः सर्वगतः स एव न परं किञ्चित्ततो विद्यते
सत्त्वं धीरयतेऽसि, गायतु भवानोंतत्सदोमित्यदः ।।

एको लाञ्छननामरूपरहितो मुक्तस्तथा चिन्मयो
माया यं समुपाश्रितावसृजति स्वप्नेन तुल्यं जगत् ।
साक्षी सत्त्रिगुणात्मकप्रकृतिवद्रूपेण संलक्ष्यते
स त्वं धीरयतेऽसि, गायतु भवानोंतत्सदोमित्यदः ।।

भ्रातर्मुक्तिमिमां क्व वा मृगयसे ? नायं न लोकोऽपर-
स्तद्दाता न च लभ्यतेऽत्र भवता शास्त्रे तथा मन्दिरे ।
हस्तेनाकलिता त्वयैव रशना याकर्षति त्वामिमां
त्यक्त्वा धीरमतेऽथ गायतु भवानोंतत्सदोमित्यदः ।।

ब्रूयाः स्वस्तिवचः समस्तजगते मत्तो न काचिद्व्यथा
भूयात्प्राणिषु तुंगनीचसमनुद्यूतोऽस्मि नित्यं विभुः ।
आशा साध्वसनाकमृत्युनिरयावल्यामनास्थो गलद्-
बन्धो धीरमतेऽथ गायतु भवानोंतत्सदोमित्यदः ।।

कीदृग्गच्छति जीवने तव तनुर्मा चिन्तितो भूः सुहृत्
कामं कर्मवशादियं विचरतु, स्यास्तुल्यनिन्दास्तुतिः ।
एकत्वे सति कोऽस्तु पूजकजनः पूज्योऽथवा निन्दकः
शान्तो धीरमतेऽद्य गायतु भवानोंतत्सदोमित्यदः ।।

लोभे लाभविलासकीर्तिकलिते सत्यं कुतो लभ्यते
नारीं पश्यति यः कलत्रमिति स प्राप्नोति किं पूर्णताम्?
मर्त्यः क्रोधममत्वयुग्मवशगो मुक्तो न मायाभयात्

त्यक्त्वैतन्ननु गीयतां स्थिरयते! ॐ तत्सदोमित्यदः।।

वर्तस्वेह निराश्रयस्तव निवासार्हं न किञ्चित्सखे !

आकाशं पटलं तृणं च शयनं भक्ष्यं तथा याचितम् ।

अन्नं पानमदूषणं किल भवेदात्मज्ञ ! यत्प्राप्यते

यान्स्वाधीनधुनीव गायतु यतेः ॐ तत्सदोमित्यदः ।।

द्वित्रा एव भवन्ति तत्त्वनिरता अन्ये द्विषन्तो हस-

न्त्येतान्प्रापय भासमन्धतमसात्प्रोद्धृत्य मायावृतेः ।

देशाद्देशमवाप्य दुःखसुखयोस्तुल्यः स्वतन्त्रो भ्रमन्

गीतं धीरयतेऽद्य गायतु भवानोंतत्सदोमित्यदः ।।

कालेनोद्भवकर्मबन्धनवलादात्मा विमुक्तो भवे-

न्नोत्पत्तिर्न भवान्न चाहमथवा मर्त्यो न वापीश्वरः।

जातः 'सर्वमहं' तथा'खिल'महं स्वानन्दसान्द्रो विभु-

र्जानन् 'तत्त्वमसी'ति गायतु यते ॐ तत्सदोमित्यदः।।

साहित्याचार्य-अध्यापक-एम० ए०-भण्डारकरोपाह्वस्त्र्यम्बकशर्मणा

संस्कृतशलोकेषु अनूदिता ।।

# जीवन्मुक्तगीतिः

चेत्ताडितोऽस्ति भुजगः कुरुते फणां स्वां
वह्निर्ज्वलत्यतितरां चलितेन्धनः सन्।
व्योमान्तरं च भवति प्रतिनादयुक्तं
मर्माहताकुपितकेसरिगर्जितेन।।

विद्युद्विदारितहृदम्बुदराजिरम्भः
पूरेण पूरिततलां जगतीं विधत्ते।
पर्याकुलं भवति चेन्नितरां तवान्त-
स्तत्त्वं ध्रुवं प्रकटयन्ति महन्महान्तः।।

म्लानं मनो भवतु, मन्दतरा च दृष्टिः,
प्रेम प्रतारकमथाफलमस्तु सख्यम्।
आपच्छतं क्षिपतु दैवगतिः स्वकीयं
सान्द्रं तमोऽप्यवरुणद्धुसमृद्धिमार्गम्।।

कोपाहितभ्रुकुटिभङ्गपदं विहन्तुं
कुर्याद्यदि प्रकृतिरद्य न विस्मरेस्त्वम्।
दिव्योऽसि याहि सुहृदग्रत एव नित्यं
नो वामदक्षिणदिशौ पुरतस्तु लक्ष्यम्।।

देवोऽपि नास्मि मनुजो न पशुस्तथाहं
नारी न चास्मि च पुमान्न मनः शरीरम्।

शास्त्राणि विस्मयपराणि मम स्वरूपं
नालं प्रकाशयितुमद्य यतोऽस्मि सोऽहम्।।

पूर्वं दिवाकरनिशाकरजन्मतोऽपि
प्राग्धूमकेतुगणतारकवृन्दसूतेः।
दिक्कालयोरपि यदा न जनिस्तदानी-
मासं तथा'ह'मधुना भविता च नित्यम्।।

भूः शोभना, किरणभास्वरभास्करोऽपि
चन्द्रः प्रकाशमधुरो वियदुज्ज्वलं च।
हेतोरधीनमखिलं विचरत्यभीक्ष्णं
बन्धेन जीवति पुनर्विलयं प्रयाति।।

विस्तार्य कञ्चुकमिव स्वमसत्यजालं
तेषामुपर्यथ च तानि दृढं गृहीत्वा।
भूस्वर्गलोकनिरयान्सदसच्च चित्तं
चित्रं सदा वयति नैकविचारसूत्रैः!।।

दिक्कालकार्यकरणादिकमेव सर्वं
जानीहि मित्र! बहिरावरणं न सत्यम्।
अस्मीन्द्रियादपि परो मनसो विचाराद्
द्रष्टाखिलस्य जगतः खलु साक्षिरूपः।।

द्वैतं बहुत्वमसदस्ति सदेकमेवं
मय्येव विश्वमखिलं ह्यहमेव सर्वम्।

द्वेषो न चास्ति मयि नापि विभिन्नभावो
मत्तो यतोऽस्ति न परं प्रियतामयोऽहम्।।
स्वप्नं त्वजेस्त्वमिह बन्धनमुक्तिहेतोः
गूढं निबोध तव नास्ति भयावकाशः।
छाया ममैव किमु साध्वसकारणं स्यात्?
'सोऽहं' न चान्यदिति चिन्तय नित्यमेव।।

साहित्याचार्य-एम०ए०-अध्यापकभण्डारकरोपाह्वस्त्र्यम्बकशर्मणा
संस्कृतश्लोकेषु अनूदिता।

अल्मोड़ा

ॐ नमो भगवते रामकृष्णाय।

यस्य वीर्येण कृतिनो वयं च भुवनानि च।
रामकृष्णं सदा वन्दे शर्वं स्वतन्त्रमीश्वरम्।।

'प्रभवति भगवान् विधि' रित्यागमिनः अप्रयोगनिपुणाः प्रयोगनिपुणाश्च पौरुषं बहुमन्यमानाः। तयोः पौरुषेयापौरुषेयप्रतीकारबलयोः विवेकाग्रहनिबन्धनः कलह इति मत्वा यतस्वायुष्मन् शरच्चन्द्र आक्रमितुम् ज्ञानगिरिगुरोर्गरिष्ठं शिखरम्।

यदुक्तं 'तत्वनिकषग्रावा विपदि'ति उच्येत तदपि शतशः 'तत्त्वमसि'-तत्त्वाधिकारे। इदमेव तन्निदानं वैराग्यरुजः। धन्यं कस्यापि जीवनं तल्लक्षणाक्रान्तस्य। अरोचिष्णु अपि निर्दिशामि पदं प्राचीनं— 'कालःकश्चित् प्रतीक्ष्यताम्' इति। समारूढक्षेपणीक्षेपणश्रमः विश्राम्यतां तन्निर्भरः। पूर्वाहितो वेगः पारं नेष्यति नावम्। तदेवोक्तं—'तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति,' 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यत्र त्यागेन वैराग्यमेव लक्ष्यते। तद्वैराग्यं वस्तुशून्यं वस्तुभूतं वा। प्रथमं यदि, न तत्र यतेन केनापि कीटभक्षितमस्तिष्केन विना, यद्यपरं तदेदम् आपतति—त्यागः मनसः संकोचनम् अन्यस्मात् वस्तुनः पिण्डीकरणं च ईश्वरे वा आत्मनि। सर्वेश्वरस्तु व्यक्तिविशेषो भवितुं नार्हति, समष्टिरित्येव ग्रहणीयम्। आत्मेति वैराग्यवतो जीवात्मा इति नापद्यते, परन्तु सर्वगः सर्वान्तर्यामी सर्वस्यात्मरूपेणावस्थितः सर्वेश्वर एव लक्ष्यीकृतः। स तु समष्टिरूपेण

सर्वेषां प्रत्यक्षः। एवं सति जीवेश्वरयोः स्वरूपतः अभेदभावात् तयोः सेवाप्रेमरूपकर्मणोरभेदः। अयमेव विशेषः—जीवे जीवबुद्ध्या या सेवा समर्पिता सा दया, न प्रेम, यदात्मबुद्ध्या जीवः सेव्यते, तत् प्रेम। आत्मनो हि प्रेमास्पदत्वं श्रुतिस्मृतिप्रत्यक्षप्रसिद्धत्वात्। तत् युक्तमेव यदवदत् भगवान् चैतन्यः—प्रेम ईश्वरे, दया जीवे इति। द्वैतवादित्वात् तत्र भगवतः सिद्धान्तः जीवेश्वरयोर्भेदविज्ञापकः समीचीनः। अस्माकं तु अद्वैतपराणां जीवबुद्धिर्बन्धनाय इति। तदस्माकं प्रेम एव शरणं, न दया। जीवे प्रयुक्तः दयाशब्दोऽपि साहसिकजल्पित इति मन्यामहे। वयं न दयामहे, अपि तु सेवामहे; नानुकम्पानुभूतिरस्माकम्, अपि तु प्रेमानुभवः स्वानुभवः सर्वस्मिन्।

सैव सर्ववैषम्यसाम्यकरी भवव्याधिनीरुजकरी प्रपञ्चावश्यम्भाव्यत्रि-तापहरणकरी सर्ववस्तुस्वरूपप्रकाशकरी मायाध्वान्तविध्वंसकरी आब्रह्मस्त-म्बपर्यन्तस्वात्मरूपप्रकटनकरी प्रेमानुभूतिवैराग्यरूपा भवतु ते शर्मणे शर्मन्।

इत्यनुदिवसं प्रार्थयति त्वयि धृतचिरप्रेमबन्धः

विवेकानन्दः।

अल्मोड़ा

कल्याणवरेषु —

अवागमं कुशलम् तत्रत्यानां वार्ताञ्च सविशेषां तव पत्रिकायाम्। ममापि विशेषोऽस्ति शरीरस्य, शेषो ज्ञातव्यो भिषक्प्रवरस्य शशिभूषणस्य सकाशात्। ब्रह्मानन्देन संस्कृतया एव रीत्या चलत्वधुना शिक्षा, यदि पश्चात्परिवर्तनमर्हेत्तदपि कारयेत्। सर्वेषां सम्मतिं गृहीत्वा तु करणीय-मिति न विस्मर्तव्यम्।

अहमधुना अल्मोड़ानगरस्य किञ्चिदुत्तरं कस्यचिद्वणिज उपवनोपदेशे निवसामि। सम्मुखे हिमशिखराणि हिमालयस्य प्रतिफलितदिवाकरकरैः पिण्डीकृतरजतानि इव भान्ति प्रीणयन्ति च। अव्याहतवायुसेवनेन, मितेन भोजनेन, समधिकव्यायामसेवया च सुदृढं सुस्थञ्च सञ्जातं मे शरीरम्। योगानन्दः खलु समधिकमस्वस्थ इति श्रृणोमि, आमन्त्रयामि तदीय-मागमनमत्रैव। विभेत्यसौ पुनः पार्वत्याज्जलाद्वायोश्च। 'उषित्वा कतिपय-दिवसानत्रोपवने यदि न तावद्विशेषापगमो व्याधेर्गच्छ त्वं कलिकाताम्' इत्यहमद्य तमलिखम्। यथाभिरुचि करिष्यति सः।

अच्युतानन्दः प्रतिदिनं सायाह्ने अल्मोड़ानगर्यां गीतादिशास्त्रपाठं जनानाहूय करोति। बहूनां नगरवासिनां स्कन्धावारसैन्यानां च समागमोऽस्ति, तत्र प्रत्यहं सर्वेष्वसौ प्रीणाति चेति श्रृणोमि। 'यावानर्थ' इत्यादि— श्लोकस्य यो वङ्गार्थस्त्वया लिखितो, नासौ मन्यते समीचीनः। 'सति जलप्लाविते उदपाने नास्ति अर्थः प्रयोजनम्' इत्यसावर्थः। विषमोऽय-मुपन्यासः, किं संप्लुतोदके सति जीवानां तृष्णा विलुप्ता भवति?

यद्येवं भवेत्प्राकृतिको नियमः, जलप्लाविते भूतले सति जलपानं निरर्थकं केनचिदपि वायुमार्गेणाथवान्येन केनापि गूढेनोपायेन जीवानां तृष्णानिवारणं स्यात्, तदासावपूर्वोऽर्थः सार्थको भवितुमर्हेन्नान्यथा।

शंकर एवावलम्बनीयः।

इयमपि भवितुमर्हति —

सर्वतः संप्लुतोदकेऽपि भूतले यावानुदपाने अर्थः तृष्णातुराणां (अल्पमात्रं जलमलं भवेदित्यर्थः), — 'आस्तां तावज्जलराशिः, मम प्रयोजनम्, स्वल्पनापि जलेन सिद्ध्यति'—एवं विजानतो ब्राह्मणस्य सर्वेषु वेदेषु अर्थः प्रयोजनम्। यथा संप्लुतोदके पानमात्रप्रयोजनं तथा सर्वेषु वेदेषु ज्ञानमात्रप्रयोजनम्।

इयमपि व्याख्या अधिकतरं सन्निधिमापन्ना ग्रन्थकाराभिप्रायस्य —

उपप्लावितेऽपि भूतले, पानाय उपादेयं पानाय हितं जलमेव अन्विष्यन्ति लोका नान्यत्। नानाविधानि जलानि सन्ति भिन्नगुण-धर्मपरा, उपप्लाविते ऽपि भूमेस्तारतम्यात्। एवं विजानन् ब्राह्मणोऽपि विविधज्ञानोपप्लाविते वेदाख्ये शब्दसमुद्रे संसारतृष्णानिवारणार्थं तदेव गृह्णीयात् यदलं भवति निःश्रेयसाय। ब्रह्मज्ञानं हि तत्।

इति शं साशीर्वादं विवेकानन्दस्य।

# संस्कृतशिक्षाविषये

प्रसङ्गतः संस्कृतशिक्षां प्रति स्वामिमहाराजस्याकर्षणप्रकर्षबिषये किञ्चद् ब्रूमः। संस्कृतभाषाज्ञानं विना शास्त्रज्ञानार्जनं न सम्भवपरम्। ततः संस्कृतशिक्षायाः संप्रसारणार्थं स्वामिमहोदयः शिष्यान् सर्वदोप-दिदेश। यथा 'भारतवर्षस्य भविष्यत्'-संज्ञके भाषणे — 'सर्वेषां स्वस्वमातृभाषया भावशिक्षादानमेकान्तावश्यकम्; संस्कृतशिक्षा च युगपत् प्रदातव्या; यतः संस्कृतशब्दानां ध्वनिमात्रं जातये ददाति ज्ञानं गौरवं सामर्थ्यञ्च। प्रख्यातानां रामानुज-चैतन्य-कवीराणां प्रयत्नावली भारतीयाधस्तनजनानां प्रगतये दर्शयति स्म तेषां महात्मनां साधूनां जीवितसमये समुत्कृष्टानि फलानि किल; तथापि कथमेतेषां महाशिक्षादातॄणां जीवनावसानस्य शताब्द्यभ्यन्तरे शिक्षाफलं तेषां लोपं यातम्—तद्विषये कारणं व्याख्यानेन प्रमाणीकर्तव्यम्। अस्य रहस्यमिदम् — नूनम् अधस्तनजनानां समुन्नतिस्तैर्विहिता; निश्चितं तेषां सर्वाङ्गीणप्रयत्न आसीद्यदेषां समुन्नयनमवश्यमेव कार्यमिति; किन्तु ते सर्वजनेषु संस्कृतशिक्षायाः सम्प्रसारणार्थं कंचन सफलप्रयत्नं न कृतवन्तः। सुमहान् बुद्धदेवोऽपि साधारणजनस्य संस्कृतशिक्षां निरोध्य महान्तं प्रमादं चकार। तत्रभवान् सुतरां त्वरितं फलमियेष; ततोऽनुवादमुखेन तत्काले प्रचलितया 'पालि'भाषया प्रचारकार्यं विदधे। साधारणजनस्य भाषां महान् स व्यवजहार, जनास्तां बुबुधिरे इत्यत्रास्ते सौष्ठवम्। साधनञ्च तदासीन्महत्—यतस्तेन भावधारा त्वरितं सम्प्रससार दूरं

सुदूरं च; किन्तु तेन सह संस्कृतस्य सम्प्रचारणमप्यासीन्नितान्तकाम्यम्। साधितेऽपि ज्ञानस्य विस्तारे, तस्य गौरवहानिरजायत। प्रकम्पनसहनक्षमा आत्मगूढकृष्टिर्न तु बहिर्दृष्टफलज्ञानस्तूपः। . . . सभ्यतावदेतादृग् ज्ञानमपि केवलं त्वगन्तरितम्—अत्यल्पघर्षणादेवास्याभ्यन्तरादाविरेति प्राचीनवर्वरः। ईदृशी जायते घटनापरम्परा—विपदपि तत्र। मातृभाषासु साधारणजनेभ्यः शिक्षा दातव्या भावविस्तारार्थं, तेन ते संवादसंग्रहं करिष्यन्ति। किन्तु इतोऽप्यधिकं प्रयोजनम्—आत्मगूढकृष्टिस्तेषां संसाधनीया। युष्माभिस्तथा कर्तुं न शक्यते चेत् साधारणजनानां समुन्नतावस्थायाः स्थायित्वमपि न सिध्यति। अनेन अन्या काचन जातिः संजनिष्यते, या संस्कृतभाषा-ज्ञान-सुविधाहेतोरेषामुपरि स्थिता करिष्यति कर्तृत्वमनीप्सितम्।

'भो अधोजातिसंभूता जनाः! युष्माकं संरक्षणस्य युष्माकमात्मोन्नतेः केवलोपायः संस्कृतपठनम्; उच्चजातिसम्भूतैः सह संग्रामस्तान् प्रति मसीवर्षणम् आन्दोलनफेनोद्वमनं च न केवलं निरर्थकम् अशुभदायकं—परन्तु तेन घटते संग्रामः विवादश्च—ततो दौर्भाग्याद् भेदजर्जरितेयं जातिरधिकादधिकतरं भेदमवाप्स्यति। जातिविधिसमीकरणस्य केवलोपायः कृष्टेर्यथायथमासादनम्, उच्चतरजातिसमूहबलाधायिकायाः शिक्षाया ग्रहणञ्च। तथा कृते युष्माकमभीष्टं युष्माभिरासादितमेव।' इति।

अतः परमपि वयं द्रक्ष्यामः किल जीवनस्य बहुमूल्यवदन्तिमदिवसेऽपि स्वामिमहोदयो वेदविद्याप्रचारार्थं संस्कृतशिक्षायाः संप्रसारणार्थं च न केवलमुपदिदेश, परं तदर्थं कर्मसाधनव्यपदेशेन सुदीर्घसमयं व्ययितवांश्च। यथा नारीणां सर्वोत्तमहितसाधनार्थं नारीमठस्थापन-

परिकल्पनासीत् स्वामिमहाराजस्य, तथा भारतीयसर्वजातीनां समुन्नति-विधानार्थं परस्परभेदविसंवादप्रशमनार्थं च संस्कृतशिक्षातद्विप्रसारक-वेदमहाविद्यालयसंस्थापनमासीत् स्वामिमहाराजस्यान्तरिकध्यानगर्भित-परमाभिलाषः। आशासे परिकल्पित-विवेकानन्द-विश्वविद्यालयसंस्था-पनद्वारा स्वामिमहाराजस्याशय एषोंऽशतोऽपि परिपूर्तिमेष्यतीति।

# अभ्यर्थनाया उत्तरम्

अपि आमेरिकावासिनो भगिन्यः भ्रातरश्च! अद्य भवन्तः अस्मभ्यं यादृशीम् आन्तरिकीं सादरञ्च अभ्यर्थनां ज्ञापयन्ति, तस्योत्तरं दातुं प्रवृत्तः सन् मम हृदयमनिर्वचनीयम् आनन्दाप्लुतं भवति। पृथिव्या मध्ये सर्वापेक्षया प्राचीन-सन्न्यासि-समाजपक्षतः अहं भवद्भ्यो धन्यवादं ज्ञापयामि। यः खलु सर्वधर्मस्य प्रसूतिस्वरूपः, तस्य नाम्ना अहं भवद्भ्यो धन्यवादं ज्ञापयामि। अखिलजातिसम्प्रदायान्तर्भूतानां बहुकोटि-हिन्दुनरनारीणां पक्षमवलम्ब्य अहं भवद्भ्यो धन्यवादं ददामि।

अस्मिन् सभामञ्चे तेभ्यो वक्तृभ्योऽपि अहं धन्यवादं ज्ञापयामि, ये खलु प्राच्यदेशीयान् प्रतिनिधीन् उद्दिश्य एवं मन्तव्यं कृतवन्तो यत् अतिदूरदेशवासिजातीनां मध्यतो ये तावत् अत्र समागताः तेऽपि विभिन्नेषु देशेषु परमतसहिष्णुताया भावप्रचारस्य गौरवमर्जितुं शक्नुवन्ति। यो धर्मो विश्वाय चिरं परमतसहिष्णुतायाः सर्वविधमत-स्वीकारस्य च शिक्षां ददाति, तद्धर्मभुक्तत्वादहमात्मानं गौरवान्वितं मन्ये। न खलु वयं सर्वधर्मसहिष्णवः, किञ्च समेषां धर्माणामेव सत्यत्वमस्माभिरुरीक्रियते विश्वस्यते च। यस्य धर्मस्य पवित्रसंस्कृत-भाषायाम् आङ्गलात्मकः 'एक्सक्लुशन्'-शब्दो (भावार्थः—बहिष्कारणं परिवर्जनमिति) नानुवादार्हः तद्धर्मभुक्तत्वात् मया गर्वः अनुभूयते। या जातिर्जगतः समेषां धर्माणां सर्वासां जातीनाञ्च निपीडितेभ्य

आश्रयप्रार्थिभ्यश्च चिरम् आश्रयं ददाति, तज्ज्ञात्यन्तर्भुक्तत्वात् अहम् आत्मानं गौरवान्वितं मन्ये। अहं भवद्भ्य एतत् वाक्यं वक्तुं गर्वम् अनुभवामि यत् वयमेव यहुदीनां विशुद्धवंशधराणाम् अवशिष्टमंशं सादरं हृदि धारयामः। यस्मिन् वर्षे रोमानजातीनां भृशमुत्पीडनेन तेषां पवित्राणि मन्दिराणि विध्वस्तानि, तस्मिन्नेव वर्षे ते दक्षिणभारतवर्षे अस्माकं मध्ये आश्रयलाभार्थं समागताः। जरथ्रुष्टानुगामिनां महापारसीकजातीनाम् अवशिष्टांशं ये धर्मावलम्बिन आश्रितवन्तः, अद्यावधिः ये धर्मावलम्बिनस्तान् प्रतिपालयन्ति अहं तदन्तर्भुक्तः।

बहुकोटिनरनार्यो यत् स्तोत्रं प्रतिदिनं पठन्ति, यं स्तवमहम् आशैशवात् पठामि, तस्य काश्चित् पङ्क्तीः उद्धृत्य भवतां सविधे अहं वदामि —

'रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्।
नृणामेको गम्यस्त्वमसि पयसामर्णव इव।।' इति।[१]

—तथा च विभिन्ना नद्यो विभिन्नस्थानात् उद्भवन्ति, किन्तु ताः सर्वा एव यथा एकस्मिन्नेव समुद्रे तासां जलानि विसृज्य मेलयन्ति, तथा हे भगवन्, स्वस्वरुचीनां वैचित्र्यात् ऋजुमार्गं कुटिलमार्गं वावलम्ब्य ये चलन्ति, समेषां तेषां त्वमेव केवला गतिः।

पृथिव्याम् एतावत् कालपर्यन्तम् अनुष्ठितेषु महासम्मेलनेषु अन्यतमं श्रेष्ठं महासम्मेलनम् इयं धर्ममहासभा गीता-प्रचारितस्य तस्य अपूर्वमतस्यैव सत्यत्वं प्रतिपादयति, तां वाणीमेव उद्घोषयति :

'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः।।' इति।[२]

—तथा च यो यं भावमाश्रित्य आगच्छति, अहं तं तेन भावेनैव अनुगृह्णामि। भोः अर्जुन! मनुष्याः सर्वतोरूपेण मम मार्गेणैव चलन्ति।

साम्प्रदायिकतायाः अन्धतायाश्च भयावहपरिणामरूपा या धर्मोन्मत्तता सा एनां सुन्दरीं पृथिवीं बहुकालं व्याप्य अधिकरोति। ताश्च पृथिवीं हिंसापूर्णां कुर्वन्ति, पुनः पुनः एतां नरशोणितैः सिञ्चन्ति, सभ्यतां ध्वंसयन्ति, समग्रजातिं हताशया निमज्जन्ति। एतासां भीषण-पिशाचानाम् अविद्यमानत्वे सति अद्यतनो मानवसमाजः पूर्वापेक्षया अधिकतरः उन्नतः स्यात्। किन्तु एतासां मृत्युकालः समुपस्थितः; अहं सर्वतोभावेन आशंसे यत् अस्या धर्ममहासमितेः सम्मानार्थमद्य यो घण्टाध्वनिर्निनादितः, स ध्वनिरेव सर्वविधाया धर्मोन्मत्ततायाः, असिना लेखनीमुखेन चानुष्ठितस्य सर्वप्रकारस्य निर्यातनस्य, एकलक्ष्याभि-गामिषु जनेषु विद्यमानस्य च सर्वविधस्य असद्भावस्य सम्पूर्णावसानरूपां वार्तां घोषयतु।

# भ्रातृभावः

अहं भवतः एकां क्षुद्रां कथां वच्मि। अधुनैव यः सुवक्ता तस्य भाषणं समाप्नोति, तस्य भाषणं भवन्तः सर्व एव श्रृण्वन्ति— 'आगच्छन्तु वयं परस्परं निन्दावादात् विरता भवामः' इति। मनुष्येषु सर्वदा एवंविधो मतभेदः स्थास्यति इति सञ्चिन्त्य वक्ता अतीव दुःखितः। अहं भवतः उपाख्यानमेकं वदामि, तेनैवावगम्यते—अस्य मतभेदस्य किं तावत् कारणमिति।

कश्चित् भेकः एकस्मिन् कूपे उषितवान्। स बहुकालं तत्रैव स्थितः। यद्यपि तस्मिन् कूपे एव तस्य जन्म तत्रैव च स वर्धयति, तथापि असौ भेकः आकृत्या अतीव क्षुद्र आसीत्। अवश्यं तदा वर्तमानकालिकाः क्रमविकाशवादिनः केऽपि नासन्, तस्मात् वक्तुमशक्यं यत् अन्धकारे कूपे चिराय वासार्थं स भेको विकलदृष्टिः सञ्जातो न वा, वयं तु उपाख्यानसौकर्यार्थं स चक्षुष्मान् आसीत् इति मन्यामहे। अपि तु स प्रतिदिनं यादृशेन उत्साहेन कूपस्य जलं कीटवर्जितं जीवाणुमुक्तं च कृतवान्, तादृश उत्साहः आधुनिकानां कीटाणुतत्त्वविदामपि श्लाघाया विषयः। एवं क्रमेण स स्थूलमसृणतनुर्जातः। एकदा घटनाक्रमेण समुद्रतीरवर्ती कश्चित् भेक आगत्य तस्मिन् कूपे पतितः।

कूपमण्डूकेन पृष्टः — 'कुत आयातः?'

—'समुद्रतः समागतः।'

'समुद्रः? स कियान् दीर्घः? किं स मम कूप इव दीर्घः?' एवमुक्त्वा कूपमण्डूकः कूपस्य प्रान्तरादेकात् प्रान्तरान्तरं लम्फितवान्। तेन समुद्रमण्डूक उक्तवान्, 'भोः भ्रातः, त्वमनेन क्षुद्रेण कूपेन समं समुद्रं कथं तुलयसि?'

इदं श्रुत्वा कूपमण्डूकः पुनर्लम्फनमेकं दत्त्वा अपृच्छत्, 'किं तव समुद्र एतादृशो दीर्घः?'

'समुद्रेण समं कूपं तुलयित्वा त्वं किं मूर्खवत् प्रलपसि?' तदुत्तरे कूपमण्डूकेन प्रोक्तः, 'मम कूप इव दीर्घ इति किमपि भवितुं नार्हति। पृथिव्याम् एतस्माद् बृहत् किमपि स्थातुं नार्हति। नूनमेव असौ मिथ्यावादी, अत एनमपसारय।' इति।

अये भ्रातरः, एवंविधः सङ्कीर्णो भाव एव अस्माकं मतभेदस्य कारणम्। अहमेको हिन्दुः—अहं ममात्मनः क्षुद्रे कूपे उपविष्टः, तमेव च समग्रजगद्रूपेण कल्पयामि। ख्रीष्टधर्मावलम्बी तस्यात्मनः क्षुद्रे कूपे उपविष्टः तमेव च समग्रं जगदिति चिन्तयति। महम्मदीयोऽपि स्वस्य क्षुद्रे कूपे उपविष्टः तं कूपञ्च समग्रजगद्रूपेण भावयति। अयि आमेरिकावासिनः, भवन्तः अस्माकम् एतेषां क्षुद्राणां जगताम् अर्गलभञ्जनाय विशेषा यत्नशीला भवन्ति, तस्मात् भवन्तो धन्य-वादार्हाः। आशंसे, भविष्यति ईश्वरो भवताम् एतद्महदुद्देश्यसम्पादनाय सहायतां करिष्यति।

# हिन्दुधर्मः

हिन्दुर्जरथ्रुष्टीय यहुदी चेति त्रयो धर्मा एव प्रागैतिहासिकयुगतो वर्तमानकालपर्यन्तम् अस्यां पृथिव्यां प्रचलिताः सन्ति। एतेषां धर्माणां मध्ये प्रत्येकमेव धर्मः प्रचण्डमाघातं सहते, तथापि एते लुप्ता न भूत्वा अधुनापि जीविताः। एतेन प्रमाणितो भवति यत् एषां मध्ये महती शक्तिर्निहितास्ति। किन्तु एकतो यदा यहुदीधर्मः तत्प्रसूतं ख्रीष्टधर्मम् आत्मीकर्तुं नालं, किञ्च स्वयमेव अमुना सर्वजयिधर्मेण स्वजन्मभूमेर्विताडितः, अत्यल्पसंख्यकाः पारस्यवासिनश्चाधुना महतां जरथ्रुष्टीयधर्माणां साक्षिस्वरूपाः सन्तः विराजन्ते। अन्यतो भारतवर्षे सम्प्रदायेभ्यः परं सम्प्रदायाः समुत्थिताः, मन्यते यत् वेदोक्तधर्मस्य भित्तिपर्यन्तमपि कम्पते; किन्तु प्रचण्डभूकम्पनावसरे अर्णवाम्बूनि यथा किञ्चित् पश्चाद् गत्वा सहस्रगुणैः प्रवलवेगैः सर्वग्रासिना वन्यारूपेण प्रत्यागच्छन्ति, तथैषां जननीस्वरुपा वेदोक्तधर्मा अपि प्रथमतः किञ्चिद् पश्चादासीनाः सन्त आन्दोलनस्य अग्रगत्यां समाप्तायामेतान् सम्प्रदायान् सर्वतः आत्मीकृत्यात्मनो विराड्देहं पुष्णन्ति।

विज्ञानस्य अत्याधुनिकी आविष्क्रिया वेदान्तस्य यत् महोच्चाध्यात्मिकभावस्य प्रतिध्वनिमात्रका, तत्सर्वोत्कृष्टवेदान्तज्ञानादारभ्य निम्नस्तरीयमूर्तिपूजनं तथानुषङ्गिकविविधपौराणिकोपाख्यानपर्यन्तं सर्वेषामेव, किञ्च बौद्धानाम् अज्ञेयवादा आर्हतानां निरीश्वरवादाः—एतेषामपि स्थानं हिन्दुधर्मे निहितम्।

अधुना प्रश्नो भवितुमर्हति एते सर्वे बहुधा विभिन्ना भावाः कस्मिन् साधारणे केन्द्रे संहता भवन्ति? कां साधारणीं भित्तिमाश्रित्य एते आपातविरोधिनो भावा अवतिष्ठन्ते? अधुनाहं प्रश्नमेनं मीमांसितुं यथासाध्यं चेष्टिष्ये।

आप्तवाक्यवेदेभ्यो हिन्दवस्तेषां धर्मान् लभन्ते। तेषां नये वेदा अनादयोऽनन्ताश्च। पुस्तकमेकम् अनादि अनन्तञ्च इत्युक्ते सति श्रोतॄणां सविधे तस्य हास्यत्वमेव आपतितमिति चेन्न वेदशब्देन कोऽपि पुस्तकविशेषोऽत्र नावगम्यते। भिन्ना व्यक्तयो विभिन्ने समये यदाध्यात्मिकानि सत्यानि आविष्कृतवत्यः सर्वेषां तेषां सञ्चितभाण्डारस्वरूपा एव वेदाः। आविष्कृतात् प्रागपि माध्याकर्षणस्य नियमा यथा सर्वत्रैव विद्यमाना आसन् समुदायस्य मनुष्यसमाजस्य विस्मृतावपि यथा एते (नियमाः) स्थास्यन्ति तथैव आध्यात्मिकजगतो नियमा अपि। आत्मना सह आत्मनो यो नैतिक आध्यात्मिकश्च सम्बन्धः, प्रत्येकं जीवात्मना सह सर्वेषां पितृस्वरूपस्य परमात्मनो यो दिव्यः सम्बन्ध इत्याविष्कृतात् पूर्वमपि ते (सम्बन्धाः) आसन् सर्वेषु विस्मृतेष्वपि एते (सम्बन्धाः) स्थास्यन्ति।

एतेषाम् आध्यात्मिकसत्यानामाविष्कर्तार एव ऋषिपदवाच्याः। वयं तु तेभ्यः सिद्धत्वेन पूर्णत्वेन वा भक्तिं निवेदयामो मन्यामहे च। अहमेतान् श्रोतॄन् सानन्दं वच्मि यत् अत्युन्नातानाम् ऋषीणां मध्ये काश्चन नार्य्योऽप्यासन्।

अत्रैवं वक्तुं शक्यते यत् उक्ता आध्यात्मिका नियमा नियमरूपेण अनन्ता भवितुमर्हन्ति, किन्तु अवश्यमेव तेषामादिरस्ति। वेद आह

सृष्टिरनाद्यनन्तरूपा। विज्ञानेनापि प्रमाणितं यत्, विश्वशक्तेः समष्टिः सर्वदा समपरिमाणम्। अतो यदि एतादृशः कश्चन समयः कल्पयितुं शक्यते, यदा किञ्चिदपि नासीत्, तर्हि एताः सर्वा व्यक्ताः शक्तयस्तदा कुत्रासन्? कश्चित् प्राह एता अव्यक्तावस्थायाम् ईश्वरे एव निहिता आसन्। तथाहि वक्तुं शक्येत ईश्वरः क्वचित् सुप्तो निष्क्रियो वा क्वचिच्च सक्रियो गतिशीलो वा; अर्थात् स विकारशीलः! किञ्च विकारशीलपदार्थमात्रमेव मिश्र-पदार्थः मिश्रपदार्थमात्रञ्चैव ध्वंससंज्ञ-कपरिवर्तनाधीनम्। तथात्वे ईश्वरस्यापि मृत्युः स्यात्; किन्तु तत्तु असम्भवि। तस्मात् एतादृशः समयः कदापि नासीत्, यदा सर्गो नासीत्; अतः सृष्टिरनादिरूपैव।

केनचित् उपमाद्वारेण बोधयितुमिष्यते चेत् वक्तुं शक्येत—सृष्टिः स्रष्टा चेति द्वयम् अनाद्यनन्तरूपं समान्तरालरेखावत्। ईश्वरः शक्तिस्वरूपः—नित्यसक्रियो विधाता; तस्यैव निर्देशेन विश्रृङ्खल-प्रलयावस्थातः एकैकशः श्रृङ्खलापूर्णं जगत् संसृष्टम्। कियत्कालं चालितं, पुनश्च ध्वंसत्वं सञ्जातम्। हिन्दुबालकः गुरुणा समं प्रतिदिनमावृत्तिं करोति—

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।' इति।[३]

अस्यार्थः—विधाता पूर्वपूर्वकल्पभूतौ सूर्यचन्द्राविव एतौ सूर्यचन्द्रौ सृष्टवान्। एतच्चाधुनिकविज्ञानसम्मतम्।

अहमत्र दण्डायमानः। यदि नेत्रे निमील्य मम सत्तासम्बन्धस्य चिन्तनाय चेष्टे—अहमहमहमिति, तर्हि—मम मनसि कस्य भावस्य

उदयो भवति? एतद्देहमेवाहम्—अयं भाव एव मनसि आयाति। तर्हि किमहमचेतनसमष्टिं विहाय नान्यो भवामि? वेदाः प्राहुः— न, अहं देहस्थित आत्मा—नाहं देह इति। देहो मरिष्यति, किन्तु नाहं मरिष्यामि। अहमस्मिन् शरीरे एवास्मि, किन्तु यदेदं शरीरं मरिष्यति तदाप्यहं जीविष्यामि, किञ्च शरीरस्यास्य जन्मनः पूर्वमपि अहमासम्। नात्मा शून्यतः सृष्टः, यतो हि 'सृष्टि'-शब्दस्यार्थो विभिन्नानां द्रव्याणां संयोगः, भविष्यति एते (संयोगाः) निश्चयमेव पुनरपि विच्छिन्ना भवेयुः। अतः आत्मनः सृष्टपदार्थत्वे सति तस्य मरणशीलत्वमपि प्रसज्येत। तस्मात् नात्मा सृष्टपदार्थः।

कोऽपि आजन्मनः सुखं भुङ्क्ते—शरीरं सुस्थं सुन्दरञ्च, मन उत्साहपूर्णम्, कस्यापि अभावो नास्ति; अपरः कोऽपि आजन्मनो दुःखं भुङ्क्ते—कस्यापि करचरणादिकं नास्ति, कोऽपि वा जडबुद्धिः अतिकष्टे च जीवनं यापयति। यतो हि सर्वे एव एकेन न्यायपरायणेन करुणामयेन च ईश्वरेण सृष्टाः, अतः किमर्थं कोऽपि सुखी कोऽपि वा दुःखी भवेत्? भगवान् कथं पक्षपाती स्यात्? यद्युच्यते ये तावत् अस्मिन् जन्मनि दुःखं भुञ्जते परजन्मनि ते सुखिनो भवेयुः, तर्हि अवस्थायाः किञ्चिदपि उन्नयनं न साधितम्। दयामयस्य न्यायपरायणस्य च ईश्वरस्य राज्ये कथमेकोऽपि जनो दुःखं भुञ्जीत?

द्वितीयतः सृष्टिकर्तुरीश्वरस्य धारणाद्वारा सृष्टेरसङ्गतयो न व्याख्यायन्ते, किन्तु साधारण्येन कस्यचित् सर्वशक्तिमतः पुरुषस्य निष्ठुरा आदेशाः प्रकाशिताः। अतः स्वीकार्य्यं यत् सुखी वा दुःखी वा भूत्वा जन्मग्रहणात् प्राक् निश्चयमेव बहुविधानि कारणानि आसन्, येषां

प्रभावेन जन्मनः परं मनुष्याः सुखिनो दुःखिनो वा भवन्ति; तेषां स्वेषां पूर्वजन्मनां कार्याणि एव तानि कारणानि।

देहमनसोः प्रवणता मातापित्रोः देहमनसोः प्रवणताया उत्तराधिकारसूत्रेण न लभते किम्? दृश्यते यत्, द्वे सत्ते समान्तरालरेखायां वर्तमाने—एकं मनः, अपरश्च स्थूलः पदार्थ इति। यदि अचेतनैः अचेतनविकारैश्चास्माकमन्तर्निहिताः सर्वे भावा यथार्थतया व्याख्याताः स्युः, तर्हि आत्मनः अस्तित्वं स्वीकर्तुम् आवश्यकतावसरो नास्त्येव। किन्तु अचेतनेभ्यः चिन्ताः समुद्भूताः—एतत्तु प्रमाणयितुं न शक्यते, यदि च दार्शनिकमार्गत एकत्ववादोऽपरिहार्यो भवति, तर्हि आध्यात्मिक एकत्ववादोऽवश्यमेव युक्तिसङ्गतः; किञ्च अचेतनवाद्येकत्ववादात् असौ न स्वल्पो वाञ्छनीयः; किन्तु वर्तमानप्रसङ्गे एतद्द्वयस्य कस्यापि प्रयोजनं नास्ति।

वयमस्वीकर्तुं न समर्था यत् शरीरमात्रमेव उत्तराधिकारसूत्रेण कति प्रवणता लभते, किन्तु ताः प्रवणताः सम्पूर्णतो दैहिकाः। एतया दैहिकप्रवणतया एव मनसो विशेषप्रवणता व्यज्यते। मनस एतादृशविशेषप्रवणतायाः कारणं पूर्वानुष्ठितं कर्म। कश्चित् विशेषप्रवणतासम्पन्नो जीवः सदृशं वस्तु प्रति आकर्षणस्य नियमानुसारम् एतादृशे एकस्मिन् शरीरे जनिष्यते, यत्तु तस्य अमुष्याः प्रवणताया विकाशाय सर्वश्रेष्ठः सहायः। एतच्च सम्पूर्णरूपेण विज्ञानसम्मतं यतो हि विज्ञानमपि अभ्यासेन सर्वं व्याख्यातुं चेष्टते, अभ्यासश्च पुनः पुनरनुष्ठानस्य फलम्। अतः अनुमातुं शक्यते यत् नवजातप्राणिनां स्वभावोऽपि तेषां पुनः पुनरनुष्ठितकर्मणां फलम्; यस्माच्च तैर्वर्तमाने जीवने तेषां लाभोऽसम्भवः। अतः अवश्यमेव पूर्वजीवनत एते समागताः।

अन्योऽपि प्रश्नः समुदेति। उरीक्रियते यत् पूर्वजन्म अस्ति, किन्तु पूर्वजीवनस्य विषयाः किमर्थम् अस्माभिर्न स्मर्यन्ते? अनायासेनैव एतद् बोद्धुं शक्यते। साम्प्रतं तु मया आङ्गलभाषया प्रवचनं प्रदीयते, किन्तु न मे एषा मातृभाषा। वस्तुतस्तु इदानीं मम चेतनमनसि मातृभाषाया एकमपि अक्षरं नास्ति। किन्तु यद्यहं स्मर्तुं चेष्टे, तर्हि तत् प्रबलवेगेन मनसि उत्थितम्। अत्रास्मिन् विषये बुध्यते यत् मनःसमुद्रस्य ऊर्ध्वभाग एव चेतनभावोऽनुभूयते अस्माकञ्च पूर्वार्जिता अभिज्ञताः तत्समुद्रस्य गभीरे प्रदेशे सञ्चिताः तिष्ठन्ति। चेष्टस्व साधय च, सर्वा एव ता अभिज्ञता उपरि आगच्छन्ति, किञ्च पूर्वजन्मविषयानपि त्वं ज्ञातुं शक्नोषि।

पूर्वजन्मविषये एतदेव साक्षात् परीक्षामूलकञ्च प्रमाणम्। कार्यक्षेत्रे सत्यताया निर्णयत्वे सति कोऽपि मतवादः सम्पूर्णभावेन प्रमाणितो भवति ऋषिभिश्च निखिले जगति सदर्पमुद्घोष्यते—स्मृतिसागरस्य गभीरतमः प्रदेशः कथम् आलोडनीयः तत् रहस्यमस्माभिराविष्कृतम्। साधयत यूयमपि पूर्वजन्मनः सर्वा वार्ताः स्मर्तुं शक्नुयात।

अतो दृश्यते यत्, हिन्दवः स्वेषु आत्मत्वेन विश्वसन्ति।

'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न च शोषर्यात मारुतः।।' इति।[४]

—हिन्दवो विश्वसन्ति स आत्मा एतादृशं किञ्चित् वृत्तं, कुत्रापि यस्य परिधिर्नास्ति, किन्तु यस्य केन्द्रो देहमध्ये एवावस्थितः, तस्य केन्द्रस्य च देहात् देहान्तरगमनमेव मृत्युरित्युच्यते। पुनरात्मा न जडनियमवशवर्ती

नित्यशुद्धबुद्धमुक्तस्वभाव एव। किन्तु कस्मात् कारणवशात् जडेन बद्धः जडवदात्मानं च गणयति।

ततश्च प्रश्नः—कथमसौ शुद्धः पूर्णो मुक्तश्चात्मा जडस्य दासत्व-निगडेनाबद्धः? पूर्णः सन्नपि कथं स आत्मानमपूर्ण इव मन्यते? श्रूयते यत्, केचित् मन्यन्ते—अस्य प्रश्नस्य यथायथं समाधानं विधातु-मसमर्था हिन्दवो निरुत्तराः चेष्टन्ते। केचन विद्वांसो जीवात्म-नोरेतयोर्द्वयोर्मध्ये कासाञ्चित् पूर्णकल्पसत्तानाम् अस्तित्वं कल्पयित्वा प्रश्नमेनं समाधातुं प्रोत्सहन्ते शून्यस्थानस्य च पूरणाय बहुविधा सुदीर्घा वैज्ञानिकसंज्ञा व्यवहरन्ति। संज्ञाप्रदानेनैव व्याख्या न जाता। प्रश्नो यथासीत् तथैव तिष्ठति। यस्तु पूर्णः, स कथं पूर्णकल्पो भवितुमर्हति? यः खलु नित्य-शुद्ध-बुद्ध-मुक्तस्वभावः कथं तस्य तादृशस्वभावस्य अणुमात्रं व्यतिक्रमो भवति? हिन्दवो विषयेऽस्मिन् सरलाः सत्यवादिनश्च। न च ते मिथ्या तर्कयुक्त्याश्रयं ग्रहीतु-मिच्छन्ति। ते साहसेन सममस्य प्रश्नस्य सम्मुखीना भूत्वा उत्तरं ददति, 'न जानीमः कथं पूर्ण आत्मा आत्मानमपूर्णो जडेन समञ्च संयुक्तो जडनियमाधीनश्चेति मन्यते। किन्तु तत्सत्त्वेऽपि व्यापारोऽयं सत्यान्नातिरिच्यते। प्रत्येकमेवात्मानं देहरूपमिति मन्यते।' इति। कथमेवमेव सम्भूतम्, कथं वात्मा देहेऽस्मिन्नेव वर्तते, तत् तत्त्वं व्याख्यातुं ते न प्रयतन्ते। एषा ईश्वरेच्छा—एवमुच्येत चेत् किमपि व्याख्यानं न कृतम्। हिन्दुभिर्यत् प्रोक्तम्—'अस्माभिर्न ज्ञायते' इति, तस्मात् उत्तरमिदं नातिरिक्तम्।

अस्तु, तर्हि एतत् बोध्यं यत्, मनुष्यात्मानादिरमरः पूर्णोऽनन्तश्च तस्य केन्द्रपरिवर्तनं देहात् देहान्तरगमनञ्च मृत्युरिति। वर्तमानावस्था पूर्वानुष्ठितकर्मद्वारा भाविनी च वर्तमानकर्मद्वारा निरूप्येते। आत्मा जन्मनो जन्ममार्गे—मृत्योर्मृत्युमार्गे क्वचित् विकशितः सन् क्वचिच्च सङ्कुचितः सन् अग्रे वर्तते। किन्तु पुनरेकः प्रश्नोऽत्र समुदेति—प्रचण्ड-वायुवेगेन क्षुद्र-तरणी यथा सकृत् फेनमय-तरङ्गस्य शीर्षे उत्तिष्ठति, क्षणान्तरञ्च मुखव्यादानकारिणि तरङ्ग-गह्वरे निक्षिप्ता भवति, तथा आत्मापि किं सदसत्कर्मणामेकान्तवशवर्त्ती भूत्वा क्रमशः सकृत् उत्तिष्ठति सकृच्च निपतति? आत्मा किं नित्यप्रवाहितप्रचण्डगर्जनशीला-दम्यकार्यकारणस्रोतसा दुर्वलासहायावस्थायां क्रमशः इतस्ततो विताड्यते? किमात्मा कश्चित् क्षुद्रः कीट इव कार्यकारणचक्रस्याधः स्थापितः? किञ्चासौ चक्रः पुरतो यत् किञ्चिदेव प्राप्नोति, तदेव पूर्णयित्वा क्रमशो विघूर्णितो भवति—विधवानामश्रु प्रति न पश्यति, मातापितृहीनबालकानां क्रन्दनमपि न श्रृणोति?

चिन्तनेनानेन मनो दाम्यति, किन्तु प्राकृतिको नियम एवायम्। किं तर्हि कापि आशा न विद्यते? परित्राणस्य कोऽपि मार्गो नास्ति? मानवानां हताशहृदयानाम् अन्तस्तलत एवं क्रन्दनध्वनिरेव उत्तिष्ठति, करुणामयस्य सिंहासनं निकषा स उपनीतोऽभवत्, तत्स्थानत आशासान्त्वनयोर्वाणी अवतीर्य कस्यचित् वैदिक-ऋषेः हृदयमुद्बुद्धवती। विश्वस्य सविधे दण्डायमानः सन् ऋषिः महता कण्ठेन जगति एनामानन्दवार्तामुद्घोषितवान्—

'श्रृण्वन्तु, विश्वे अमृतस्य पुत्राः।
आ ये घामानि दिव्यानि तस्थुः।। इति।[५]

वेदाहमेतं पुरुषं महान्त-
मादियवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय।।' इति।[६]

'अमृतस्य पुत्राः'—कीदृशं मधुरम् आशावहञ्च नाम! अपि भ्रातरः, एतेन मधुरेण नाम्नाहं भवतः सम्बोद्धुमिच्छामि। भवन्तः अमृतस्याधिकारिणः। हिन्दवो भवतः पापिनो वक्तुं नेच्छन्ति। भवन्त ईश्वरस्य सन्तानाः, अमृतस्याधिकारिणः—पवित्राः पूर्णाश्च। मर्त-भूमेर्देवता भवन्तः! भवन्तः पापिनः? मनुष्याः पापिन इति भाषणमेव महापापम्। मानवानां यथार्थस्वरूपस्योपरि मिथ्या कलङ्कारोपणमिदम्। उत्तिष्ठन्तु, आगच्छन्तु, सिंहस्वरूपाः सन्तोऽपि भवन्त आत्मनो मेषा इव मन्यन्ते, भ्रमज्ञानं परित्यजन्तु। भवन्तः अमरात्मानः, मुक्तात्मानः—चिरानन्दमयाः। नाचेतना भवन्तः, न देहिनो भवन्तः, अचेतनता भवतां दासाः, भवन्तो नाचेतनानां दासाः।

एवञ्च वेद उद्घोषयति—केषाञ्चित् क्षमाहीनानां नियमानां न भयावहाः समावेशाः, न च कार्यकारणस्य काराबन्धनानि अस्माकं नियन्तारः; किन्तु एतेषां समेषां नियमानामुपरि प्रत्येकं परमाणौ शक्तौ च कश्चित् विराट् पुरुषोऽनुस्यूतो वर्तते, 'यस्यादेशेन वायुः

प्रवहति, अग्निः प्रज्वलति, मेघो वारि वर्षति मृत्युश्च जगति परिभ्रमति।' इति।

किं तस्य स्वरूपम्? स सर्वव्यापी, शुद्धो, निराकारः, सर्व-शक्तिमान्—समेषामुपरि एव तस्य करुणा। 'त्वमस्माकं पिता, त्वमस्माकं माता, त्वमस्माकं परमः प्रेमास्पदम् सखा बन्धुः, त्वं सर्वस्याः शक्तेर्मूलम्, त्वं नः शक्तिं देहि, त्वमेव विश्वजगतो भारं धारयसि; अस्य क्षुद्र-जीवनस्य भारं वोढुं मां सहायीकुरु' इति वैदिका ऋषय एवं गीतमेव गीतवन्तः। वयं कथं तं पूजयिष्यामः? प्रेमद्वारा। प्रेमास्पदरूपेण—ऐहिक-पारत्रिकसमुदायप्रियवस्तुभ्यः प्रियतररूपेण तस्य पूजा करणीया।

शुद्धप्रेमसम्बन्धे वेदैरेवं शिक्षा प्रदत्ता। अधुना पश्यन्तु हिन्दवः पृथिव्याम् ईश्वरस्य अवतारत्वेन यस्मिन् विश्वसन्ति, स श्रीकृष्णः कथमिदं प्रेमतत्त्वं परिपूर्णत्वेन प्रचारितवान्।

'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा।।' इति।[७]

—अर्थात् मनुष्याः पद्मपत्राणि इव संसारे वसेयुः। पद्मपत्रं जलासीनं, तथापि तन्न जलानि स्पृशति; मनुष्या अपि तथास्मिन् संसारे तिष्ठेयुः, ईश्वरे हृदयं समर्प्य हस्ताभ्यां कर्माणि कुर्युः।

ऐहिके पारत्रिके च पुरस्कारप्रत्याशार्थम् ईश्वरप्रेम शोभनम्, किन्तु प्रेम्नः कृते तदनुरागः अतीव शोभनः। अत इयं प्रार्थना—प्रभो! अहं भवतो धनं सन्तानं विद्यां वा नेच्छामि। यदि भवत इच्छास्ति, अहं

शतविपज्जालैः व्रजिष्यामि; किन्तु मम केवलामेतामिच्छामेव पूरयतु, न कस्यापि पुरस्कारस्याशया, किन्तु निःस्वार्थभावेन केवलं प्रीत्यर्थमेव भवन्तं प्रति मम प्रीतिर्जायेत इति।

श्रीकृष्णस्य कश्चित् शिष्यः तत्कालिकभारतवर्षस्य सम्राट् शत्रुभिः सिंहासनच्युतः सन् सम्राज्ञ्या सह हिमालयस्यारण्यम् आश्रितवान्। तत्रैकदा सम्राज्ञी तमपृच्छत्, 'भवान् सर्वेभ्यो धार्मिको जनः, कथं भवता एतादृशी कष्टदुर्दशा भोक्तुं भूयते?' इति। युधिष्ठिरस्योत्तरम्, 'प्रिये, पश्य पश्य, हिमालयं प्रति अवलोकय, अहो! कीदृशः सुन्दरो महान् च। अहं हिमालयेऽतीव स्निह्यामि। पर्वतो मह्यं किमपि न ददाति, तथापि सुन्दरं महच्च वस्तु प्रति प्रीतिरेव मम स्वभावः, तस्मादेवाहं हिमालये स्निह्यामि। अस्मादेव कारणात् ईश्वरं प्रत्यपि मम प्रीतिर्जायते। स खलु निखिलसौन्दर्यमहत्त्वयोर्मूलम्, केवलं स एव प्रीतेः पात्रम्। तत्प्रीतिरेव मम स्वभावः, तस्मादेवाहं स्निह्यामि। मया किञ्चिदपि न प्रार्थ्यते, तं निकषा किञ्चिदपि न याच्यते, तस्येच्छानुसारं स मां स्थापयतु, सर्वावस्थायामेव तं प्रति मम प्रीतिः स्थास्यति। प्रीत्यर्थमेव तं प्रति ममानुरागः। नाहं प्रणयव्यापारी।' इति।

वेदः समाम्नायते आत्मा ब्रह्मस्वरूपः, केवलजडपञ्चभूतेभ्यो बद्धः सन् विद्यते; अस्य बन्धनस्य श्रृङ्खले चूर्णिते सति आत्मा पूर्णत्वमुपलभेत। अतः अस्य परित्राणस्यावस्थां बोधयितुमृषिभिर्मुक्तिरिति शब्दो व्यवह्रियते। मुक्तिर्मुक्तिः—अपूर्णताया मुक्तिः—मृत्युदुःखाभ्यां मुक्तिः।

ईश्वरकृपया एतत् बन्धनं समुच्छेत्तुं शक्यते पवित्रहृदयमनुष्याणामुपरि च तस्य कृपा वर्षति। अतः पवित्रतैव तस्य कृपालाभ-

स्योपायः। कथं तस्य करुणा व्यापारीभूयते? शुद्धे वा पवित्रे वा हृदि स आत्मानं प्रकाशते। निर्मलो विशुद्धश्च मनुष्योऽस्मिन्नेव जीवने ईश्वरदर्शनं लभते। 'तदैव—केवलं तदैव हृदयस्य सर्वा वक्रताः सरलीभवन्ति, सर्वे संशयाश्च छिद्यन्ते' इति। न तदा मनुष्यो भयङ्करकार्यकारणनियमस्य क्रीडाकन्दुकः। इदमेव हिन्दुधर्मस्य मर्मस्थलम्, एतदेव हिन्दुधर्मस्य प्राणस्वरूपम्। हिन्दुर्न केवलं मतवादं शास्त्रविचारञ्चाश्रित्य स्थातुमिच्छति। साधारणेन्द्रियानुभूतेः परस्तात् यदि अतीन्द्रियसत्ता नाम काचित् तिष्ठति, हिन्दुः स्पष्टतया तस्याः सम्मुखीनो भवितुमर्हति। यदि तस्य मध्ये आत्मेति कश्चित् तिष्ठति, न च वस्तुतो योऽचेतनः—यदि करुणामयो विश्वव्यापी परमात्मा तिष्ठति, हिन्दुरादावेव तत्समीपं गमिष्यति, अवश्यमेव तस्य दर्शनं करिष्यति। तदैव स वीतसंशयो भवेत्। अत आत्मेश्वरसम्बन्धे सर्वोत्कृष्टं प्रमाणं दातुं प्रवृत्तो ज्ञानी हिन्दुः प्राह—'अहम् आत्मानम् उपलब्धवान्, ईश्वरमुपलब्धवान्' इति। सिद्धेः पूर्णत्वस्य वा इदमेकमेव निदर्शनम्। कस्मिन्नपि मतवादे बद्धमूलधारणायां वा विश्वासस्य प्रचेष्टायामेव न हिन्दुधर्मो निहितः; अपरोक्षानुभव एव तस्य मूलमन्त्रः, न केवलो विश्वासः, अपि तु आदर्शस्वरूपत्वस्य प्राप्तिरिति तस्य जीवने परिणयनमेव धर्मः।

अधुना दृश्यते, क्रमागतसंग्रामसाधनाभ्यां सिद्धिलाभः—दिव्यभावेन भावान्वितो भूत्वा ईश्वरसान्निध्यगमनं तस्य दर्शनमनुभूय च तस्य स्वर्गस्थपितृवत्पूर्णत्वप्राप्तिरिति सनातन-धर्मः।

पूर्णतायां प्राप्तायां मनुष्याणां का गतिः? सोऽनन्तम् आनन्दमयञ्च जीवनं लभते। आनन्दस्य अनन्यमुत्सम् ईश्वरं लब्ध्वा स परमानन्दाधिकारी भवति, ईश्वरेण समञ्च तमानन्दमुपभुङ्क्ते—विषयेऽस्मिन् सर्वे सनातनधर्मीयाः सम्मताः। भारतस्य समेषां सम्प्रदायानामेषः साधारणो धर्मः।

साम्प्रतं प्रश्नः समुदेति, पूर्णत्वमेव परमतत्त्वम्, तच्च परमं कदापि द्वयं कदापि वा त्रयं भवितुं नार्हति, तस्मिन् कोऽपि धर्मो धर्मी वा स्थातुं नार्हति। अतो यदात्मा अस्यां पूर्णायां परमायांश्चावस्थायाम् उपनीतो भवति, तदा ब्रह्मणा सममैक्यं व्रजेत् केवलश्च ब्रह्म नित्यत्वेन पूर्णत्वेन चोपलभेत। तद् एव आत्मस्वरूपम्—निरपेक्षसद्रूपं, निरपेक्षज्ञानरूपं, निरपेक्षानन्दरूपं—सच्चिदानन्दस्वरूपम्।

अस्माभिः पापठ्यते—आत्मन एषा अवस्थाधर्मिणो नाशः—काष्ठप्रस्तरवत् अचेतनावस्था; एतेन विरचयितॄणामनभिज्ञतैव प्रकाश्यते, यतो हि यः कदापि आघातपीडां नानुभवति, सोऽपरेषां क्षतचिह्नं सम्पश्य परिहसति।

अहं वच्मि, अवस्थेयं न तादृशी काचित्। अस्य क्षुद्रदेहस्य चेतनोपभोगो यदि सुखावहो भवति, तर्हि देहद्वयस्य चेतनोपभोगः सुखतरो भवेत्। एवञ्च देहसंख्यानां परिवर्धनेनास्माकं सुखाधिक्यमपि जायेत। एवं निखिलेऽस्मिन् विश्वे यदा ममात्मबोधः स्यात् तदैवाहमानन्दपराकाष्ठाम्—लक्ष्यम् उपनेष्यामि।

अत एतदनन्तविश्वजनीनव्यक्तित्वलाभाय एतत् दुःखपूर्णक्षुद्रदेहाबद्धव्यक्तित्वमवश्यमेव परित्यजनीयम्। यदाहं प्राणस्वरूपो भवेयं तदैव

मम मृत्युतो निष्कृतिः स्यात्; यदानन्दस्वरूपो भवेयं, तदा दुःखात् निष्कृतिः स्यात्; यदा ज्ञानस्वरूपो भवेयं तदैव भ्रमस्य निवृत्तिः। अयमेव युक्तिसङ्गतो वैज्ञानिकः सिद्धान्तः। विज्ञानप्रमाणेन जानामि—देहगतं व्यक्तित्वं भ्रान्तिमात्रम्। वस्तुतस्तु मम शरीरमस्मिन् निरवच्छिन्ने जडसमुद्रे अविरतं परिवर्तते; अतएव मम चैतन्यांश-सम्बन्धे एतदद्वैतज्ञानमेवेति युक्तियुक्तः सिद्धान्तः।

## पादटीका

१. शिवमहिम्नः स्तोत्रम्।

२. श्रीमद्भगवद्गीता, ४.११।

३. महानारायणोपनिषत्—अघमर्षसूक्तम्।

४. श्रीमद्भगवद्गीता २.२३।

५. श्वेताश्वतरोपनिषत् २.५।

६. श्वेताश्वतरोपनिषत् ३.८।

७. श्रीमद्भगवद्गीता ५.१०।

# धर्मो भारतीयानां न मुख्यसमाचारः

ख्रीष्टीया जनाः सदैव स्फुटवार्तालापश्रवणाय निविडचित्तास्तिष्ठेयुः; मन्यते मया, यदि स्वल्पेन यूयं विरूपालोचिताः भवेत, तदा कथमपि विद्धचित्ता न स्यात। यूयं ख्रीष्टायाः पौत्तलिकसम्बद्धात्मोद्धरणाय धर्मप्रचारकान् तत्कृते प्रेषयितुमत्युद्युक्ता आस्त; किन्तु कथयत, अनाहार-दुर्भिक्ष-दशातस्तेषां शरीराणि जीवयितुं कथं न चेष्टध्वम्? भारतवर्षे भयानकदुर्भिक्षकाले मनुष्याणां सहस्राणि क्षुद्भिर्मृत्युमुखमासन्नानि; किन्तु ख्रीष्टीया यूयं किमपि न साधयत! भारतवर्षस्य सर्वत्र ख्रीष्टोपासनालयान् निर्मातुं युक्तोत्साहा यूयं, किन्तु प्राच्ये अभावप्राचुर्यं नास्ति धर्मे, धर्मो भूयसा तेषु विद्यते। भारतवर्षे कोटिकोटि-संख्यका आर्ता नरनारीसमूहाः शुष्ककण्ठैः अन्नमात्रं याचन्ते। ते याचन्तेऽन्नम्, वयन्तु दद्म उपलखण्डान्। क्षुधार्तेभ्यो मनुष्येभ्यः प्रवचन-श्रावणमथवा दर्शनशास्त्राध्यापनमवमानकरम्। भारतवर्षे यदि केनापि सपारिश्रमिकं धर्मप्रचारः क्रियते, तदा जातिच्युतो भवेत्, घृणाऽपि सर्वेषां तस्मिन्वर्षणपरा स्यात्। मम दरिद्रदेशवासिनां साहाय्यलाभाय युष्माकं सविधे समागमनम्, ख्रीष्टीयदेशे ख्रीष्टीयानां पुरतः अख्रीष्टीयानां साहाय्यलाभो दुरूहविषय इति सविशेषमुपलभ्यते मयेति।

## बौद्धधर्महिन्दुधर्मयोर्नैकट्यम्

नाहं बौद्ध इति भवद्भिः श्रुतं, तथापि पक्षतो बौद्धोऽहम्। चीन-जापान-श्रीलङ्कावास्तव्या अनुसरन्ति महाचार्य-बुद्धोपदेशान्, भारतवर्षे

तु तत्रभवान् ईश्वरावताररूपेण पूज्यते। भवद्भिरधुनैव श्रुतं यत् प्रस्तुतोऽहं बौद्धधर्मं वैरूप्येणालोचयितुं; किन्तु प्राक्प्रतिपादितेनार्थेन ग्रहीतव्योऽहमिति प्रार्थ्यते। य ईश्वरावताररूपेण वन्द्यते मया, तद्विरुद्धभावनमित्यनभिप्रेतम्। तत्र बुद्धदेवविषयेऽस्माकं नयः किल शिष्यास्तं यथार्थतया नावगन्तुमलमिति। यहुदीधर्मेण साकं ख्रीष्टधर्मस्य यादृशः सम्बन्धस्तादृशो दृष्टः हिन्दुधर्मेण अर्थात् वेदविहितधर्मेण सह वर्तमानकालिकबौद्धधर्मस्य। यीशुख्रीष्ट यहुदीति, शाक्यमुनिश्च हिन्दुरिति जात्या। भदोऽनयोः किल यीशुः यहुदीजनैर्यथा परित्यक्तः परं क्रुशविद्ध आसीत्, अपरतश्च शाक्यमुनिमीश्वरासनेऽधिष्ठाप्याधुनापि पूजयन्ति हिन्दवः। किन्तु अर्वाचीनबौद्धधर्मेण समं बुद्धदेवप्रदत्तशिक्षाया भिन्नत्वं प्रदर्शयितव्यं मादृशैर्हिन्दुभिरेवं प्रधानतया—शाक्यमुनिर्नागतो नूतनतत्त्वस्य प्रचाराय कस्यचित्। यीशुवत् सोऽपि समाविर्भूतः पूर्णताप्रदानाय न पुनर्ध्वंसाय। भेदमात्रमेतत् यत् यीशुविषये प्राचीना यहुदीजना तं बोद्धुं नालम्, बुद्धदेवक्षेत्रे पुनस्तच्छिष्यास्तदीयशिक्षाममर्मोपलब्धुमशक्ताः। यहुदीजना यीशौ प्राचीननियमानां (आल्डटेस्टामेण्टाख्यानाम्) पूर्णां परिणतिमवगन्तुमसमर्थाः, बोद्धास्तथैव बुद्धे हिन्दुधर्मनिहितसत्यानां कृत्स्नां परिणतिं वेदितुं नालम्। पुनर्मयोच्यते—शाक्यमुनेराविर्भावः पूर्णाय न ध्वंसाय इति। हिन्दुधर्मस्य स्वाभाविकपरिणतिरूपः, युक्तिसङ्गतसिद्धान्तमयः न्यायसम्मतविकाशशीलश्चासीत् सः।

द्वेधा भक्तो हिन्दुधर्मः—कर्मकाण्डः ज्ञानकाण्डश्च। ज्ञानकाण्डः सन्न्यासिकुलेनालोच्यते, जातिभेदस्तत्रानादृतः। भारतवर्षे उच्चतमवर्णयुक्तानां

तथा निम्नतमवर्णगानां मनुष्याणां सन्न्यासत्वग्रहणेऽनिषेधः, द्वे पक्षे समाने। नास्ति जातिभेदो धर्मे; जातिभेदः सामाजिकव्यवस्थायां वर्तते केवलम्। शाक्यमुनिः स्वयं सन्न्यासी, हृदयञ्च तस्यैतावदुदारं यत् वेदान्तनिहितानि सत्यानि चिह्नीकृत्य सकलपार्थिवजनानुद्दिश्य च प्रचारितानि तानि, यत्र भासितं तस्य गौरवम्। विश्वे धर्मप्रचारकरूपेण स एव प्रथमः इति नैतत् केवलम्, अपितु धर्मान्तरितकरणचिन्ता तन्मनसि मुख्यतयाविर्भूता।

तस्य गौरवं सुप्रतिष्ठितं सर्वान् प्रति विशेषतो ज्ञानहीनान् दरिद्रान् चान्वद्भुतसहानुभूतिप्रदर्शनेन। तस्य कतिपयब्राह्मणशिष्या आसन्। बुद्धस्य शिक्षादानकाले संस्कृतं कथ्यभाषारूपेणाप्रचलितमासीत्। पण्डितानां पुस्तकानि प्रमाणान्यत्र। केचन बुद्धशिष्यास्तदुपदेशान् संस्कृतभाषया-ऽनुवदितुमैच्छन्, तदा स्पष्टभाषया स घोषितवान्—'दरिद्राणां जनानां कृते ममागमनं, साधारणव्यवहारयोग्या भाषाऽऽश्रयितव्या' इति। अद्यावधिं तत्कालिकचलितभाषया लिपिबद्धास्तदुपदेशा दृश्यन्ते।

दर्शनशास्त्रं तत्त्वविद्या च यावदुन्नतस्थानपरे भवेताम्, यावद्विश्वे मृतिर्वर्तेत, यावन्मनुष्यहृदये दौर्बल्यं विद्येत, यावच्चरमास्वस्थतायां मनुष्याणां मर्मतो रोदनध्वनिरुद्गिद्येत, तावदीश्वरविश्वासः स्थास्यत्येव।

दर्शनशास्त्रदिशा तादृशलोकाचार्यबुद्धस्य शिष्या वेदरूपसनातन-शैलाभिमुखं सवेगं धाविताः न विचूर्णयितुं तु शक्याः। अन्यतश्च यः सनातन ईश्वरः सर्वाभिः नरनारीभिः सादरं वृतो धृतश्च तं समग्र-जातिसकाशात् अपसारितवन्तः। परिणामतो भारतवर्षे बौद्धधर्मस्य स्वभावतया मरणं संप्राप्तम्। साम्प्रतं बौद्धधर्मजन्मभूमिभारतवर्षे न दृष्टः कोऽपि जनो य आत्मानं बौद्धं घोषयति।

किन्तु अनेन साकं ब्राह्मण्यधर्मोऽपि केषुचित् स्थलेषु क्षतिमापन्नः। तादृशसमाजसंस्कारायाभीप्सा, सकलान् प्रति अनन्यसहानुभूतिदयाप्रदर्शनं, साधारणेषु जनेषु बौद्धधर्मस्य व्यापकपरिवर्तनभावप्रवाहित्वञ्च एतावन्महत्त्वं गौरवञ्च भारतीयसमाजाय प्रदत्तवन्ति यत् तत्कालिक-भारतवर्षमुद्दिश्य प्रवक्तुमेतादृश पुज्यते केनचित् ग्रीकैतिहासिकप्रवरेण— न कोऽपि हिन्दुर्मृषाभाषी वा काचन हिन्दुललनाऽसतीवेति श्रूयत इति।

(सभामञ्चोपविष्टान् बौद्धानभिलक्ष्यैवं वक्तुमारभत) —

हे बौद्धाः, ऋते बौद्धधर्मं नो जीवति हिन्दुधर्मः; ऋते हिन्दुधर्मं बौद्धधर्मो न जीवति। अत उपलभ्यताम्—अस्माकमेष वियुक्तो विच्छिन्नभावः स्पष्टतो बोधयति यत् ब्राह्मणस्य धीशक्तिदर्शनशास्त्रयोः सहायतां विना बौद्धधर्माः स्वावलम्बिनो न भवेयुः; ब्राह्मणोऽपि बौद्धहृदयमप्राप्य स्थातुं नार्हेत्। बौद्धब्राह्मणयोरयं विच्छेदः भारतवर्षस्यावनतिकारणम्। एतस्मात् कारणात् भारतवर्षमद्य त्रिंशत्कोटिभिक्षुकाणां वासभूमिरूपेण नीतमासीत्। एवं भारतवासिनः सर्वे सहस्रवर्षाणि यावत् विजेतॄणां दासत्वं वृतवन्तः। अत आगच्छन्तु सर्वे, ब्राह्मणगतापूर्वधीशक्त्या सह लोकाचार्यबुद्धनिष्ठहृदयवृत्ति-महत्स्वरूपताऽनन्यजनकल्याणशक्तीः संयोजयितव्या इति।

## भाषणे अन्तिमदिवसः

विश्वधर्म-महासम्मेलनमधुना वास्तवायितं प्रकृत्या; ये च महासभाया अधिवेशनाय युक्तश्रमाः, करुणामयेश्वरसहायलाभाः निःस्वार्थपरिश्रम-साध्यसाफल्यमण्डितास्त आसन्।

ये प्रशस्तहृदयाः सत्यानुरागोपगूढाश्च स्वप्ननिभमाश्चर्यव्यापारमादौ कल्पयित्वाऽनन्तरं तं साधितवन्तस्ते महानुभवा धन्यवादार्हाः। कृतज्ञोऽहमस्मात् सभामञ्चात् समुदारभावराशिपरिवेशनायेति। धन्यवादार्हास्ते शिक्षिताः श्रोतारो मत्कृते समदयाभाजः, धर्मसकलविरोधमन्दीभूतप्रत्येकभावानामुपलब्धारः इति। सञ्चारितेषु ऐकतानेषु क्वचित् श्रुतिकाटव्यं ध्वनितं नाम तत्कृते सविशेषकृतज्ञता निवेद्यते, यतो विशेषवैषम्यपुरःसरेणास्माकं मन आकृष्टवान् स ध्वनिः, किञ्च अस्मासु साधारणं सामञ्जस्यं विद्यमानं मधुरायते।

धर्मीयैक्यस्य मुख्यभूमिमधिकृत्य बहु आलोचितम्। साम्प्रतमस्मिन् विषये स्वीयं मतं नोपस्थाप्यते। किन्तु केनापि प्रतिगण्यते चेत् प्रचलितधर्मेषु कस्यचिदभ्युदयेनान्येषाञ्च विनाशेन तदैक्यं साधितं भवेदिति, तमहं ब्रुवे, 'भ्रातः, दुराशेयं तव।' इति। किं मन्यते मया यत् ख्रीष्टो जनो न हिन्दुः? नेश्वरस्तथा साधयतु। किं मयाऽभिलष्यते कोऽपि हिन्दुः बौद्धो वा ख्रीष्टो भवतु? ईश्वरो न साधयतु तथा।

भूमावुप्तं बीजम्; मृद्वायुजलानि चासते तच्चतुर्दिक्षु। बीजं किं मृद्वायुजलेषु परिणमतेऽन्यतमत्वेन? —— नेत्युक्तम्। तद्बीजं वृक्षकेण परिणमते, स्वभावेन वर्धते स्वयं क्रमेण, मृद्वायुजलानि गृहीत्वाऽन्त-स्तान्युपादानानि वृक्षे परिणमन्ते वृक्षाकारेण च वृद्धिं साधयन्ति।

धर्मविषयोऽपि तद्रूपमेव। ख्रीष्टीयो हिन्दुत्वेन बौद्धत्वेन भवितुं नार्हेत्; अथवा हिन्दुर्बौद्धो वा ख्रीष्टीयत्वं नाप्नुयात्; किन्तु प्रत्येकं धर्मः इतरधर्माणां सारान् गृहीत्वा पुष्टिं साधयति स्वीयविशेषत्वञ्च संरक्ष्य तदनुसारतो वर्त्स्यति।

धर्ममहासमितिश्चेत् विश्वे प्रमाणत्वेन स्थापयितुं किञ्चिदिच्छेत् तद्धि—सच्चरित्रं पूतत्वं दयादाक्षिण्यञ्च विश्वे कस्यापि विशेषधर्मस्य स्वकीया नैव सम्पत्, प्रत्येकधर्मसम्प्रदाये च परिशीलितानामत्युन्नतामाविर्भावो जनानां दृष्टः।

एतादृशप्रत्यक्षप्रमाणसत्त्वेऽपि कोऽपि स्वप्नायते एवं यत् इतरे धर्माः लोप्स्यन्ते तदीयधर्मश्च स्थास्यति, तदा स केवलं कृपापात्रम्; तत्कृतेऽन्तरतो दुःखितोऽहम्, तञ्च स्पष्टतो कथयामि—तस्य प्रतिरोधप्रदानसत्त्वेऽपि तूर्णमेव प्रत्येकधर्मकेतनोपरि लिखितं भविष्यति—'न विवादः, सहायता; न नाशः, अन्योन्यभावग्रहणम्; न मतविरोधः, समन्वयः शान्तिश्च' इति।

# प्रतीकानां प्रयोजनम्

भक्तिर्द्विधा विभज्यते। तत्र एका वैधी आनुष्ठानिकी वा, अन्या च मुख्या परा वा। उपासनाया लघिष्ठरूपतः जीवनस्य गरिष्ठरूपान्तान् सर्वान् एव विषयान् व्याप्नोति भक्तिशब्दः। यावत्य एव सपर्या इह पृथिव्यां वा इह देशे वा धर्मे वा दृश्यन्ते तत्र प्रेमैव मूलम्। तत्र धर्मे तु क्वचित् केवलमनुष्ठानमेवास्ति, क्वचिच्चास्ति किमपि यन्नानुष्ठानमपि, नापि तत् प्रेम किन्तु अधस्तनी दशा काचन। तथापि एतान्यनुष्ठानानि अपरिहार्याणि। आत्मन आध्यात्मिक्या अभ्युन्नतेरुपयोगाय वैधी बाह्या वा भक्तिरेकान्तत आवश्यकी। मनुष्याः भृशं भ्रममेकं कुर्वन्ति तदा यदा ते मन्यन्ते यत्, एकेनैव लम्फोद्योगेन ते वरिष्ठं पदं प्रतिपत्तुमलमिति। शिशुर्यदि चिन्तयति स एकस्मिन्नेव दिवसे वार्धक्यं यायादिति तदा स भ्रान्त एव। अहम् आशासे यत् सदैव भवन्त एवं भावं मनसि धारयेयुर्यत् न ग्रन्थाध्ययने धर्मो नापि तर्केण न वा मतवादानुमोदना इति। तर्कस्तत्त्वं तथ्यं मतवादो ग्रन्थो धर्म्यमनुष्ठानमित्येतत् सर्वं धर्मचितौ सहायकम्। धर्मस्तु स्वत एवापरोक्षानुभवः। सर्वं एव वयं वदामो यद्'एक ईश्वरोऽस्ती'ति। 'किं त्वया दृष्ट ईश्वरः?' इति च केषाञ्चन प्रश्नः। भवन्तः श्रवणेनावगता यत् केचन पुनर्वदन्ति 'ईश्वरः स्वर्गे तिष्ठति' इति। तस्मै पृच्छतु तेनेश्वरो दृष्टो न वेति? यदि स वदेत् 'दृष्ट एवेति', तदा भवन्तो हसिताः स्युः किञ्च तमुन्मत्तमवधारयेयुः।

अनेक एवं कथयेयुः धर्मो हि बुद्धिजगतं विश्वासमात्रम्। किञ्च केषाञ्चन मतानां स्वीकारमात्रं धर्मः। ततो नाधिकं गच्छन्ति। नेदमहं धर्मत्वेना-कलयितुं प्रवर्ते। तादृग्धर्माङ्गीकारापेक्षया वरं हि नास्तिक्यम्। कस्मिन्नपि मते विश्वासमविश्वासं वा नापेक्षते धर्मः। भवन्तो वदन्तः सन्ति 'यदात्मास्ती'ति। किमात्मा दृष्टो वा? अस्माकं समेषामात्मास्ति किन्तु नास्माभिः सः दृष्ट इति कथमियं कथा? भवद्भिरेवास्य प्रश्नस्योत्तरं देयम् मृग्यश्चोपाय आत्मदर्शनस्य। अन्यथा धर्मीयं वचः निःसारं स्यात्। यदि च कश्चन धर्मः सत्यः स्यात्तदा सः अवश्यमेवास्मान् स्वस्वचेतःसु आत्मेश्वरसत्यप्रदर्शने समर्थः स्यात्। एतेषु मतवादेषु तथ्येषु वा यत्किमपि वाचित्य भवता मया चानन्तकालाय यदि तर्कः क्रियते तथापि नास्माभिरुपगन्तुं शक्येत कस्मिन्नपि राद्धान्ते। मनुष्याः युगतः तर्कताण्डवं कुर्वाणाश्चरन्ति स्म, किन्तु किं तत् फलम्? वस्तुतस्तु बुद्धिः कथमपि तत्रोपेतुं नार्हति। अतिबुद्धिभिरस्माभिर्भाव्यम्। अपरोक्षानुभुतिरेव धर्मे प्रमाणम्। अयं प्राचीरोऽस्तीत्यत्र एतदेव प्रमाणं यत् वयममुं पश्याम इति। यदि एकत्र निषीद्यते तर्क्यते च युगान् व्याप्य प्राचीरस्य सत्त्वं युज्यते न वेति, कदापि भवता राद्धान्तमुपैतुं नैव पार्येत। किन्तु त्वं साक्षात् पश्येदम्। एतदेव पर्याप्तम्। यदि पृथिव्याः सर्व एव मनुष्या भणन्ति यत् एतन्न वर्तत इति भवान् कदापि तेषु आस्थां न स्थापयेत्। यतो हि भवान् जानाति यत् भवदीयं चाक्षुषं साक्ष्यं समेभ्य एव मतवादेभ्येस्तथ्येभ्यश्च बलवदिति।

विज्ञानवादमुपजीव्य बहवो ग्रन्थाः भवद्भिः प्रायोऽधीताः। जगतस्तथा भवतामनस्तित्वं स्वीकृतमत्र नये। एवं भाषमाणा जना भबताम्

अविश्वस्ता नूनं यतस्ते आत्मसु न विश्वसन्ति। इन्द्रियाणां साक्ष्यमेतादृशसहस्रशो वृथावाग्विलासापेक्षया बलवदिति तेषां नाविदितम्। धार्मिकत्वमिच्छता भवता प्रथमतः परिहर्तव्या ग्रन्थाः। यावन्न्यूनत्वेन ग्रन्थोऽधीयते तावदेव मङ्गलं भवतः। एकैकस्मिन् वारे एकैकं कार्यं क्रियताम्। साम्प्रतिके हि काले प्रतीच्ये देशे एवमेव प्रवणता दृश्यते मस्तिष्कस्य कृशरात्रनिर्माणम्। विनैव शान्तस्वभावप्राप्तिं सुनिर्दिष्टाकारधारणं च सर्वविधा एव मानसिका भावा असम्बद्धाः कलहमुत्पजनयन्ति संशयं च सृजन्ति। किञ्च बहुत्रैव एते रोगविशेषेषु परिणमन्ते। किन्तु नायं धर्मः। केचन च स्नायवीयानुभूतिमिच्छन्ति। कथयन्तु तेभ्यः प्रेतवार्ताम्, यद्वा उत्तरमेरुवसतीनां वा दूरदेशनिवासिनां वा अद्भुताकृतीनां वा तेषां पुरुषाणां कथां श्रावयन्तु ये चादृश्या सन्तोऽपि निरीक्षमाणा आसते, तेषामाचरणं येषां च स्मरणे सति शरीरे जायते रोमहर्षः; तत एव ते आसादितमोदा गेहं गच्छेयुः। किन्तु चतुर्विंशतिहोरामध्य एव ते नूतनोत्तेजनान्तरमनुसन्दधानाः प्रवर्तन्ते। केचन एतदेव धर्मत्वेनाकलयन्ति। वस्तुतस्तु उन्मादाश्रमगमनमार्गोऽन्ये नायं धर्मप्राप्तेरुपायः। शताब्दीं यावदेतादृशभावप्रवाहे सञ्चालिते देशोऽयं महोन्मादाश्रमे सन्निष्ठेत। न दुर्बलैर्लभ्य ईश्वरः। सर्व एते रोमाञ्चकरा विषया मनुष्यान् दुर्बलतरान् प्रापयन्ति। अतस्तेषां सन्निधिर्न सेव्यः। ते च केवलं मनुष्यान् दुर्बलान् कुर्वन्ति, मस्तिष्के क्रमव्यत्ययं जनयन्ति, मानसिकीमपि दुर्बलतां साधयन्ति, अन्तरात्मानं नीतिभ्रष्टं कुर्वन्ति, मनुष्यान् हतबुद्धीन् सम्पादयन्ति।

अथ भवतां मनसि निधेयमिदं यत् धर्मो न वाचि, न वा मतवादेषु, न वा ग्रन्थेषु विराजते अपि तु लसति सोऽपरोक्षानुभूतौ। नायं धर्मो विद्यार्जनं किन्तु आदर्शस्वरूपताप्राप्तिः। 'परद्रव्यं न हरेदि'त्युपदेशं सर्व एव जानन्ति, किन्तु किं तेन? यो न स्तेयी स जानाति एतत्तत्वम्। प्रत्येकमेव पुमान् जानात्येव 'मा हिंस्यात् भुतानि' इत्युपदेशं, किन्तु किं तेन? ये च न परहिंसकास्त एव जानन्ति अहिसातत्त्वं तदादर्शेनैव तैरात्मीयचरितानि रचितानि। अतएव अस्माभिर्धर्मस्वरूपमवगन्तव्यम्। अपि च धर्मस्वरूपोपलब्धिर्दीर्घसाधनव्यापारासाध्या। यदा मनुष्या अत्युन्नत-मद्भुतं वा किमपि कर्म कुर्वन्ति सर्व एव ते चिन्तयन्ति यत्तेऽना-यासेनैव प्राप्स्यन्ति, न च कदापि क्षणमपि भावयन्ति यत् तैरनारत-यत्नेनैव तल्लभ्यमिति। सदैव ते लम्फोद्यमकामाः। तत्सर्वोत्कृष्टमिति तत्कामा वयमिति। न क्वचिदपि अस्माभिरङ्गीकर्तुमिष्यते तल्लाभेऽ-स्माकीना शक्तिरस्ति न वेति। अतएव किमपि फलतः कर्तुं न शक्यते। भवद्भिः कथमपि न कश्चन प्रसह्य वंशदण्डेनोपरि प्रेषयितुं युज्यते। अस्माभिः सर्वैरेव शनैः शनैरेव गन्तव्यम्। अतएव धर्मस्य प्रथमं सोपानं वैधी भक्तिः या च अधस्तनी उपास्तिः।

कानि च अधस्तनानि उपासनानि? विविधानि हि तानि। यस्यां दशायामपरोक्षानुभूतिर्भवति नादृग्दशाप्राप्तयेऽस्माभिः साकारोपासना-ङ्गीकारेण वर्तितव्यम्। यथाहि भवता दृष्टमेतद्यत् आदौ हि शिशवो मूर्तमाध्यमेन शिक्षां लभन्ते ततश्च क्रमेणामूर्तविषयिणीं शिक्षामधिगच्छन्ति। यदि भवान् शिशवे एकस्मै उपदिशेद्यत् पञ्चकृत्वः द्विसंख्यैव

दशतामेतीति स नावगच्छेत्। किन्तु यदि दशपदार्थाः आनीय कथङ्कारं द्विसंख्यैव दशनामैतीति दर्श्यन्ते तदा सोऽवगतिं गच्छेत्। धर्मतत्वं शनैः शनैर्दीर्घसाधनसाध्यम्। अत्र वयं सर्व एव शिशवः। भवतु वा वयं सर्वे वयोवृद्धाः भवतु वा वयं सर्वे अधीताखिलविश्वग्रन्थाः किन्तु अध्यात्मदृष्ट्या शिशव एव। अस्माकं जीवने यद्यपि मतवादसकलं विश्वासबहुलं वाधीतं तथापि किमपि नानुभूतम्। अत इदानी-मेवास्माभिः मूर्तोपासना आकारतो वा शब्दतो वा प्रार्थनातो वा अनुष्ठानतो वा आरम्भनीया। एवं मूर्तोपासना हि सहस्रशो भवितुं योग्याः। तन्मध्यत एकमेव रूपं न समेषामुपयोगाय कल्पते। केचन मूर्तित उपकृता भवितुं पारयन्ति केचन वा न तथा। केचन पुनर्बाह्यमूर्तिमिच्छन्ति केचन च आभ्यन्तरीम्। यश्च पुमान् मनोमध्य एव मूर्तिमुपास्ते स वदेत्, "अहं बाह्यमुर्तिपूजकतो गरीयान्। हृदयाभ्यन्तरे मूर्तिश्चेद्वर्तते तदेव यथार्थम्, बाह्यमूर्तेरुपासना तु पौत्तलिकता। तदहं विरुन्धे।" इति। यदा च गिर्जोपासनालयस्य मन्दिरस्य वा कोऽपि पुमानाकारं निर्माति तदा स तत्पुण्यमिति चिन्तयति। किन्तु स एव विरोधमुपस्थापयति यदा तच्चित्रं मानवस्य कल्प्यते।

अतएव तत्र सन्ति हि बहुबिधा आकारा यद्द्वारा मनोऽस्माकं मुर्तोपासनाभ्यासं कर्तुं प्रभवति। अपि च ततः यथाक्रमममूर्तबोधमुपैति अपरोक्षानुभूतिं चानिर्वचनीयामायाति। पुनश्चैतद्बोध्यं यत् एकमेव रूपं न सर्वेषामुपयोगाय किन्तु एकं रूपं कस्यचन कृते युक्तं, तदेवापरस्य

कृते न युक्ताय कल्पयितुं शक्यते, एवं क्रमेण बोध्यम्। यद्यपि सर्वाण्येव रूपाणि एकमेव लक्ष्यं वस्तु प्रापयन्ति वर्तन्ते तथापि तत् सर्वेषामेव योग्यं भवितुं नार्हति। अत्रापि पुनरस्माकं सामानयतः प्रमादो भवति। तथाहि ममादर्शो न तव कृते युक्तस्तर्हि कथमहं भवन्तं बाधितं कुर्वे? मन्दिरनिर्मितिरुचिर्ग्रन्थाधीतिरुचिर्वा नापि भवते रोचन इति कथमहं भवन्तं बाधितं करोमि? संसारं प्रति दृश्यताम् प्रत्येकमेव मूढो भणेद्यदेतदेव रुपं केवलं सर्वथा यथार्थमिति। रुपान्तराणि च सर्वाण्येव नारकीयानि। अपि च स एव इह विश्वे ईशचितः पुरुषः इति। वस्तुगत्या तु सर्वा एव पद्धतय उत्तमा उपयोग-विधायिण्यश्च। यथाहि मानवस्वभावा हि विभिन्नास्तथाहि धर्मसाधनोपायैरपि तुल्यसंख्यातो भिन्नैर्भिन्नैर्भाव्यम्। यदि तत्र ततोऽपि आधिक्येन पद्धतयः स्युस्तदा ताः संसारस्य कल्याणायैव। यदि पृथिव्यां विंशतिर्धर्म-साधनपद्धतयः सन्ति तदा तदतिमङ्गलम्। यदि च ताश्चतुःशतं तदा ततोऽपि अतितरां मङ्गलम्। यतो हि तत्र साधनचयनविकल्प आधिक्येन स्यात्। अतएव अस्माभिर्ह्लादितैर्भाव्यं यदा धर्ममतसंख्या धर्मभावसंख्या च वृद्धिं याति द्विगुणीभवति च। यतो हि तान्येव धर्ममतादीनि प्रत्येकं मानवानामाश्रयभूतानि भवन्ति उपकुर्वन्ति च मानवजातिम्। प्रार्थये ईश्वरेभ्यो यत् क्रमेण धर्मवृद्धिर्घटतु यावन्न प्रत्यकं पुमान् अपरतो विलक्षणं स्वानुकूलं धर्ममवाप्नुयात्। अयमेव भक्तियोगिनां भावः। अत्र चायं पर्यवसितोऽर्थो भावो यत् भवदीयो धर्मो न मम, न च मामको धर्मो भवतो भवितुमर्हतीति। यद्यपि लक्ष्यमुद्देश्यं चैकमेव तथापि

प्रत्येकमेव पुंसा भिन्न-भिन्नो मार्ग एव समाश्रेयस्तेषां स्वस्वचेतोरुचिभेदात्। यद्यपि ते च मार्गा विविधास्तथापि ते यथार्था एव तेषां सर्वेषामेव लक्ष्यैकप्रापकत्वात्। तत्रैक एव मार्गः सत्यः शिष्टानि मार्गान्तराणि च मिथ्याभूतानीति न युक्तम्। एकैकेन चितोऽयं मार्ग एव इष्टपदेन चोच्यते भक्तियोगिनां नये।

ततश्च तत्र सन्ति शब्दाः। भवद्भिः सर्वैरेव शब्दशक्तिः (मन्त्र-शक्तिः) श्रुतपूर्वा। ते च शब्दा अद्‌भुताः। कोरानग्रन्थो वा वाइवेल-ग्रन्थो वा वेदा वा प्रत्येकमेव ग्रन्थः शब्दशक्तिपूर्णः। केषाञ्चन शब्दानां मानवजातावस्ति चकितकरप्रभावः। किञ्च तत्र सन्ति च रूपान्तराणि, प्रतीकपदवेद्यानि तानि। प्रतीकानां मनुष्यमनःसु अस्ति महान् प्रभावः। किन्तु धर्मस्य प्रधानप्रतीकानि स्वच्छन्दतो न सृष्टानि। अस्माकमनु-सन्धानानुसारं तानि च चिन्तायाः स्वतःप्रकाशस्वरूपाणि। वयं प्रतीक-साहाय्येन चिन्तयामः। अस्माकं सर्व एव शब्दास्तु चिन्त्यविषयस्य प्रतीकभूताः। भिन्ना भिन्ना हि मानवा भिन्नभिन्नप्रतीकानां व्यवहारं कुर्वाणा वर्तन्ते किञ्च तेषां कारणमज्ञात्वैव। एतच्च कारणं मनोऽन्त-रालस्थितम्। एतानि च प्रतीकानि चिन्ताविजडितानि। यथैव हि चिन्ता बाह्यं प्रतीकं प्रकाशयति तथैव हि वैपरीत्येन प्रतीकान्यपि आभ्यन्तरीं चिन्तां व्यक्तीकुर्वन्ति। अतएव भक्तियोगस्य एकदेशोऽयं विविधान् प्रतीकशब्दस्तुतिविषयान् वक्ति। प्रत्येकमेव धर्मे प्रार्थना वर्तते। किन्तु एतदत्रावधेयं यत् स्वास्थ्यवित्तयाचनं न भक्तिः। एतत् सर्वमेव कर्म अथवा पुण्यकर्म। एतत् यत्किञ्चिच्छारीरिकसम्पत्तिमात्रस्य प्रार्थनं

तत्कर्ममात्रम्। यथा स्वर्गादिगमनानुकूलं प्रार्थनं कर्म तद्वत्। यश्च ईश्वरप्रीतिकामः यश्च भक्तो भवितुमभिलषति तेनैतादृशं सर्वमेव परिहर्तव्यम्। यश्चालोकराज्ये प्रवेष्टुमभिप्रैति प्रथमतस्तेन क्रयविक्रयभाव आपणेयधर्मस्त्याज्यः। ततः स प्रविशति द्वारम्। एतन्न सत्यं यत् भवता प्रार्थितं न प्राप्यमिति। किञ्च सर्वमेव लभ्यम्। किन्तु तादृशं प्रार्थनं तु भैक्षुकधर्मः। 'वस्तुतस्तु स एव मूढः यः गङ्गावसतिरपि पायसे कूपखानको भवति। वस्तुतस्तु स एव मूर्खो यो हीरकागारगतोऽपि काचखण्डमनुसन्धत्ते।' इति। एतच्छरीरं क्वचिदपि नश्येदिति कथमेव शारीरकौशल्यं काम्यते? शरीरेण सम्पदा वा किमस्ति? धनिश्रेष्ठस्यापि पुरुषस्य धनस्यात्यल्पमेव व्यवहारायोपभोगाय च कल्पते। इह जगति सर्वाण्येव वस्तूनि कथमप्यस्माभिर्न शक्यन्ते प्राप्तुम्। यदि नैव तानि शक्यप्रापाणि तर्हि तत्रैव का हानिः? एतच्छरीरमेकदा नाशमेष्यतीति कोऽत्र शोकः? यद्युत्तमं वस्तु आगच्छेत् तद्वरम्, यदि चापगच्छेत् तदपि वरम्। गच्छत्वेव तत्। तेषामागमनमपि मङ्गलं गमनमपि मङ्गलम्। राज्ञामपि राज्ञः समीपं गन्तुं यत्नवन्तो वयम्। वयं तत्र भिक्षुवेशवन्तः प्रवेष्टुं न पारयामः। यदि च तद्वेशवन्तः सन्तो वयं सम्राट्सामीप्यं कामयामहे किं नु वयमनुमता भवामः? निश्चप्रचमेव न। अस्माभिस्ताडितैर्भाव्यम्। ईश्वरः सम्राजामपि सम्राट्। एतेन भिक्षुक-वेशेन प्रवेष्टुं वयं नार्हाः। आपणिकानां न कदाचन तत्र प्रवेशानुमतिः। क्रयविक्रयादेर्नास्ति तत्र स्थानम्। यथा हि भवद्भिः वाइवेलग्रन्थेऽधीतम् यत्—यीशुख्रीष्टस्ताडितवान् मन्दिरतः क्रेतृविक्रेतृजनान् इति। मा प्रार्थय

तृणतुल्यस्य सुखस्य कृते। यदि च भवता शारीरसुखमात्रं प्रार्थ्यते तदा को भेदो पशुमानवयोः? आत्मानं न्यूनतोऽपि उन्नततरं भावय तेभ्यः।

अतएव किमुत वक्तव्यं यद् भक्तत्वमिच्छद्भिरस्माभिः प्राथम्येन नाकादेराकाङ्क्षा परिहर्तव्या। अत्रायं प्रश्नो यत् कथङ्कारं वासना-विमर्दनं स्यादिति? कथमेव मानवा दुःखभाजो भवन्ति? यतो हि मानवाः क्रीतदासा नियमनिगडिताः प्रकृतिकरतलगताः क्रीडनकाः स्पन्दनशीलाः क्रीडनोपयोगिवस्तुतुल्याः। वयं सदातनत्वेनैतद्देहस्य यत्नाधानविधौ तत्परा यतो हि केनापि प्रकारेण देहश्चूर्णयितुं शक्यते। वयमनारतं भीता भवन्तो दिवसं गणयामः। अस्माभिरधीतं यत् मृगस्य कस्यचन प्रतिदिनं सामान्यतः षष्टिसप्तत्यन्यतरमाइलपरिमितमार्गो निर्धा-रितो वर्तते धावनाय यतो हि स भीतः। अस्माभिरेतज् ज्ञेयं यत् वयं हरिणतोऽपि हीनदशाकाः। हरिणानां तु तथापि वर्तते विश्रामो किन्तु नास्माकम्। हरिणो हि प्राप्तपर्याप्ततृणस्तुष्टिमेति वयन्तु अस्माकं याचनं द्विगुणीकुर्महे। अस्माकं वासनाया द्विगुणीकरणं रोगविशेषे परिणमते। वयमेतावन्तो विपर्यस्ताः कृत्रिमाश्च प्रपन्ना येन न स्वाभाविकं किमपि अस्मान् तुष्यति। वयं निरन्तरं विकृतकामाननुसन्ध्महे। अस्माकम-स्वाभाविकेनोत्साहेन अस्वाभाविकेन भोज्येन पेयेन परिमण्डलेन जीवनेन च भवितव्यम्। भयविषये वक्तव्ये तु अस्माकं जीवितं नाम भयकदम्बकं हि। हरिणस्य एकप्रकारकमेवास्ति भयम्। यथा शार्दूलसिंहादितो भयम्। किन्तु मनुष्याणां कृते जगज्जगदेव भेतव्यत्वेन वर्तते।

अत्रायं प्रश्नः समुदेति यत्, वयं कथङ्कारमितो मुक्तिं भजामहे? हितवादिनो ब्रुवते यत् 'मैवं वोचः वाचमीश्वरपरलोसम्बन्धिनीम्।

नास्माभिस्तत्सर्वं विदितम्। इहैव सुखेन स्थीयताम्' इति। यदि सम्भाव्येत तदाहमेव प्राथम्येन तद्विदधे। किन्तु जगत्र तत् कर्तुं प्रचोदयति। यावदेव हि वयं प्रकृतिदासत्वं विन्देमहि तावत्कथं सुख-भोगः स्यात्? यावदेव हि दुःखविरोधिना भवता भूयते तावदेव दुःख-वेष्टितेन भाव्यम्। न जाने कियन्तं वर्षं व्याप्य आत्मसुखाय कति परिकल्पना क्रियेत किन्तु प्रत्येकपरिकल्पनावसाने दशा क्रमशो दृष्टत-रतामेति। वर्षशतद्वयात् प्राक् पुरातनपृथिव्यां मनुजानामभावो यद्यपि अल्पीयानेवासीत्तथापि यदि तेषां ज्ञानं गाणितिकपद्धत्या वृद्धिमियात् वासना तु ज्यामितिकपद्धत्या एधतेतराम्। अस्माकं मते स्वर्गे तु न्यूनातिन्यूनतया अस्माकं वासना पूर्तिं प्रतिपद्येत। अतएव वयं नाकगमिनो भवामः। सा च अनन्ता अदम्या पिपासा! सदातननाथना। भिक्षुकदशायां पूमान् धनराशिकामो भवति। अथ धनशालित्वं व्रजति तदा स कामान्तरं कामयते। ततः समाजं ततः पुनरर्थान्तरं प्रार्थयते। नास्य कदाचिदपि विरामः। कथङ्कारमियं तृष्णा तृप्तिं यायात्? यदि च स्वर्गो लभ्यते वासनाऽपि एधते। यथाग्नौ हविराहुतौ अनलधाम वर्धतेतराम् तथैव दरिद्रस्य धनशालित्वं भजमानस्यापि तृष्णा न दूरीभवति। नाकप्राप्तिर्नाम धनाधानमेव। तथात्वे ततश्च वासना क्रमश एधतेतराम्। इह हि विविधेभ्यः पुराणादिशास्त्रेभ्यो ज्ञातमेतद्यत् मनुष्याणामिव देवतानामाचरणम्। ते तत्र सर्व एव सानन्दाः सन्तीति तु न भाव्यम्। स्वर्गं जिगमिषा तु भोगेच्छामात्रम् एतत्तु परिहेयम्। एतद्धि एतावदेव तुच्छम्, एतावच्चामार्जितं भवतः कृते यत् यथा भवतां

स्वर्गजिगमिषाचिन्ता। 'अहं लक्षपतिः स्याम्' 'लोकानामीशे' इत्येवं चिन्ता यथा स्वर्गगमनेच्छाऽपि तथा। एवमपि केचन स्वर्गाः सन्ति येषां मध्यतः प्रवेशे सति धर्मस्य भक्तेश्च द्वारदेशे प्रवेशाधिकारो न स्यात्।

# राजयोगस्य लक्ष्यम्

अस्माकं ज्ञानसकलमेवाभिज्ञतासापेक्षम्। यच्चानुमितिज्ञानमस्माभिरुच्यते यत्र विशेषतः सामान्यपर्यन्तानुधावनं भवति यद्वा सामान्यतो विशेषानुधावनं भवति, तदपि प्रकृत्या अभिज्ञतासापेक्षम्। यच्च निश्चितविज्ञानमुच्यते तद्धि मनुष्यैरनायासेनैव भूतार्थत्वेन ज्ञायते, यतो हि तत्प्रत्येकपुरुषाणामभिज्ञतां स्पृशति। न च वैज्ञानिकः कस्मिन्नपि वस्तुनि विश्वासमाधातुं त प्रवर्तयेत्। किन्तु स्वाभिज्ञतातः केषाञ्च विषयाणां सिद्धान्तः फलभूतस्तेन गृह्यते। अतो यदा ते स्वसिद्धान्ते आस्थास्थापने आवेदयन्ति जनान् तदा वस्तुतस्तु ते सार्वजनीनमनुष्यानुभूतिं प्रत्येव निवेदयन्तीति भावः। प्रत्येकं निश्चितविज्ञानस्य सर्वसाधारणाः केचन विषयाः सन्ति अतश्चास्माभिः झटित्येव तेभ्यो गृहीताः सिद्धान्ता यथार्था न वेति बोद्धुं शक्यते। अत्रेदानीमयं प्रश्नो यत्, धर्मस्य किं तादृशः सामान्यविषयो वर्तते न वा? मम तु सत्त्वेऽसत्त्वे इत्युभयपक्ष एवैतस्योत्तरमस्ति।

इह जगति सामान्यतः प्रचारितो धर्मो हि श्रद्धाविश्वासोभयसापेक्षः अनेकत्रैव भिन्नभिन्नमतकदम्बकमात्रम्। अतश्च दृश्यते सर्व एव धर्मावलम्बिनो मिथो विवदमानाः। एते च पुनः विश्वासप्रतिष्ठिताः। एके वदन्ति, महानयं पुरुषविशेषोऽधिकजलदमध्यासमानः कृत्स्नधराधीशो वर्तते। वक्ता च तद्वचनानुरोधादेव तस्मिन्नास्थां स्थापयितुं प्रवर्तितवान्

माम्। एवमेव ममापि तथाविधा मानसभावाः स्थातुं योग्याः। ते च भावा मयाऽपि अपरस्मै विश्वासस्थापनायोच्येरन्। यदि च ते पृच्छन्ति कारणं मह्यं, न मया वक्तुं शक्येत। एतस्मादेव कारणादिदानीं धर्मे दर्शनशास्त्रे चापवादो वर्तते। प्रत्येकं प्राप्तविद्योऽपि पुरुष एवं वक्तुमुपक्रमते यत्—'एते च धर्माः केवलं केषाञ्चन मतानां समष्टिमात्रम्। नास्ति च निकषं सत्यासत्यनिर्णयविधौ। सर्व एव स्वानुकूलप्रचारे व्याप्रियमाणा वर्तन्ते। तथापि सार्वजनीनधर्मविश्वास-मूलमस्ति कश्चन सामान्यो विषयो यश्च देशसकलानां सम्प्रदाय-सकलानां मतवादकदम्बकानां कृत्स्नप्रतीतीनां नियामकः। अतस्तेषां धर्माणां मूलमनुसन्धीयते चेत् अस्माभिर्द्रष्टुं शक्यते यत्, तेऽपि सार्वजनीनानुभूतेरुपरि प्रतिष्ठितः' इति।

प्रथमतो हि जगतो भिन्नभिन्नधर्माणां विश्लेषणे सति विभागद्वयं द्रष्टुं शक्यते। तथाहि केषाञ्चन धर्माणां मूले शास्त्रमस्ति केषाञ्चन च शास्त्रं नास्तीति। ते धर्मा दृढतमा ये च शास्त्रसंगताः। तेषामेव धर्माणामनुगामिन आधिक्येन सन्ति। शास्त्रच्युता धर्मास्तु लुप्तप्राया एव। केचन च तथाविधा नूतना अपि तदनुगामिनोऽल्पीयांस एव। तथापि तेषु धर्मेषु यश्च मतसमन्वयो दृश्यते यश्च सत्यत्वेन तैः प्रचारितस्तच्च विशेषपुरुषाणामनुभूतिवेद्यं फलम्। ख्रीष्टधर्मावलम्बी तस्य धर्मे यीशुख्रीष्टे तदवतारत्वे परमात्मजीवात्मनोरस्तित्वे तदात्मन उन्नततरदशायां च विश्वासं स्थापयितुमनुरोत्स्यति। यदि च परिपृच्छ्यते किमत्र कारणमिति स वदेत् यत्, स एव यतस्तस्मिन् विश्वसितीति।

यदि च भवता ख्रीष्टधर्मस्य मूलमनुसन्धीयते तदा तदपि अपरोक्षानुभवप्रतिष्ठितमिति द्रष्टुं शक्यते। यीशुख्रीष्टेन स्वयमेवोदितम्— 'स ईश्वरं साक्षात्कृतवानि'ति। तेषामपि शिष्या ब्रुवते यत्, तेऽपि अनुभूतवन्त ईश्वरमिति। एवमेव तच्छिष्या अपि। बौद्धधर्मेऽपि तद्वदेव दृश्यतेऽयं तथागतानुभवप्रतिष्ठितो धर्मः। तेन च कानिचन सत्यस्वरूपाणि अनुभूतानि। तानि च साक्षात्कृतानि। तत्तत्सत्यस्वरूपसंस्पर्शः समनुभूतः। तान्येव जगति प्रचारितानि। हिन्दुधर्मविषयेऽपि समानमेव वक्तव्यम्। तेषामपि ग्रन्थे तत्कर्तार ऋषिनामधेया घोषयन्ति यत्, तैः कानिचन सत्यस्वरूपाणि अनुभूतानि एवञ्च तानि तैः प्रचारितान्यपि। अतश्चेदं स्पष्टं यत् इह संसारे सर्व एव धर्मा अस्मज्ज्ञानानां सार्वभौमसुदृढ-भूमिप्रतिष्ठिता अपरोक्षानुभवनिष्ठाश्च। गुरवो हि परमात्मद्रष्टारः स्वात्मतत्त्वदर्शिन आयतिज्ञा अनन्तस्वरूपविदो यथादर्शनमेव तत्त्वप्रचार-काश्चासन्। किन्तु एतदेव वैलक्षण्यं यत् प्रायो हि सर्वस्मिन्नेव धर्मे विशेषतया साम्प्रतिके काले आश्चर्यकारि एतदावेदनमुपस्थाप्यते यत्, एतेऽपरोक्षानुभवा इदानीमसम्भाविता एव। केवलं तैरेव तत्त्वानु-भवितृभिर्भाव्यं ये चैतेषां धर्माणां प्रतिष्ठातार आसन्, येषां च नाम्ना धर्मोऽयं प्रवर्तितो वर्तते। वर्तमानकाले हि एवमपरोक्षानुभवः पुरातत्त्वं गतः, केषामपि न भवति। अतो धर्मो विश्वासमात्रनिष्ठ इति एतत्सर्वं पूर्णतो नाङ्गीक्रियते मया। यदि हि जगति ज्ञानविशेषविषये केनापि कदापि अनुभूयते तदाऽस्माभिरयं राद्धान्त उपस्थापयितुं शक्यते यत्, इतः पूर्वमपि कोटिशस्तत् सम्भवति स्म सम्भविष्यति च वारंवारमानन्त्येन।

ऐकरूप्यं हि कठोरो नियमः प्राकृतिकः। सकृद्यत् घटितपूर्वं तत् सदैव घटेत। अतएव योगविद्यागुरवो हि उपदेशं ददुः न च पूर्वानुभव-प्रतिष्ठतामात्रं हि धर्मः। स्वयमनुभवाभावे हि न कोऽपि धार्मिकत्वं धत्ते। योगविद्या हि एतदनुभवावाप्तिः कथङ्कारं घटेतेति वेदयति— यावन्न धर्मोऽनुभूयेत तावद् धर्मवचनं रिक्तमेव। अतः कथमेव वा एवं विपर्ययो युद्धं कलहो वा भगवन्नामच्छलेन? ईश्वरव्याजेन यथा रुधिरपातः संवृत्तः नान्यस्मिन् विषये एवं घटितः। यतो हि साधारण-पुरुषः कदापि धर्ममूलानुसन्धाने न कृतयत्नाः। सर्व एव पूर्वपुरुषा यत्किञ्चिदाचराणां कृतानुमोदनाः सन्तः आसादितमोदा आसन्। तेषामन्येऽपि एतदेवानुतिष्ठन्त्विति अभिप्रेतमासीत्। विनैवात्मानुभव-मात्मा अस्तीति वचनं, विनैव चेश्वरसाक्षात्कारमीश्वरोऽस्तीति वचनं किं वक्तुं युज्यते? यदि तत्रेश्वरः स्यात् अस्माभिः स चावश्यमेव साक्षात्कर्तव्यः, यदि चात्मा कश्चन वर्तते तदा स चापि प्रत्यक्षीकर्तव्यः। अन्यथा तत्राविश्वास एव वरम्। धूर्तापेक्षया स्पष्टना-स्तिक एव वरम्। सम्प्रति एकतो विद्वदिति प्राप्तख्यातीनामेवमेवाशयो यत् धर्मदर्शनपरमात्मनामनुसन्धानमखिलमेव वार्तम्। अपरतः अर्धशि-क्षितानामेवमेव हृदयं मन्ये यत् धर्मदर्शनादीनां नास्ति मूलम्। तेषां केवलमत्रैवोपयोगो यत् तानि हि जगत्कल्याणसाधनानुकूलानि बलिष्ठ-प्रचोदनशक्तिभूतानि। तथाहि यदि मानवा ईश्वरविश्वासा स्युस्तदा ते सज्जना नीतिपराश्च कृत्यनिष्ठा नागरिका भवेयुः। एवम्विधाशयाः पुमांसश्च न दोषार्हाः। यतो हि तैर्धर्मविषयिणी यथा शिक्षा प्राप्ता सा

असंगतनिःसारप्रलापवचसीवानन्तशब्दसमूहे विश्वासमात्रम्। ते च केवलं शब्देष्वास्थां स्थापयितुमुपदिश्यन्ते। कथं ते एवं कर्तुं शक्नुयुः? मानवप्रकृतिं प्रति तदा लेशतोऽपि श्रद्धा न मे स्यात्, यदि त एवं विश्वासं कुर्युरिति। मानवाः सत्यमिच्छन्ति स्वयञ्च सत्यमनुभवितु-मिच्छन्ति। यदा ते सत्यं जानन्ति साक्षात्कुर्वन्ति हृदि हृदि चानुभवन्ति तदा सर्वे संशयाश्छिद्यन्ते तमःकुलं भिद्यते जिह्मत्वमखिलमृजुत्व-मुपेयादिति वेदवाणी। तथाचाम्नायते—

'शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः'

(श्वेताश्वेतरोपनिषदि २/५) इति।

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।

तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।।'

(श्वेताश्वेतरोपनिषदि ३/८) इति।

—सत्यप्राप्त्यनुकूलायाः प्रायोगिक्या वैज्ञानिकपद्धत्याः साधनोपयोगिन्या मनुष्याणां पुरतः स्थापनमेव राजयोगविज्ञानस्य लक्ष्यम्। प्रथमतो हि प्रत्येकविज्ञानस्यैव स्वकीया पर्यवेक्षणप्रणाली वर्तते। ज्योतिर्वित्त्वं कामयतः कस्यापि किमपि अकृत्वा केवलं ज्योतिषमिति अक्षरं चीत्कुर्वतो भवतो ज्योतिषशास्त्रे नाधिकारः स्यात्। रसायनशास्त्रेऽपि तदेव वक्तव्यम्। अत्रापि निर्दिष्टा काचन प्रणाली अनुसर्तव्या। परीक्षालये विविधानां द्रव्यादीनां ग्रहणपुरःसरं तेषां मिश्रणेन यौगपदार्थो निर्मातव्यः, ततश्च तदाश्रयेण परीक्षा यदि विधीयते तदैव योग्यो रसायनविद्भवितुमर्हति। यदि च ज्योतिर्वित्त्वमिष्यते तदा मानमन्दिर-

गमनेन दूरवीक्षणयन्त्रसाहाय्येन ग्रहनक्षत्रादितारकाः पर्यवेक्षणीयाः। तदैव भवान् ज्योतिर्वित् स्यात्। प्रत्येकमेव विद्यायाः कयाचित् पद्धत्या भवितव्यम्। शतसहस्रमुपदेष्टुं मया शक्यते यत् यावन्न भवद्भिरुपास्यते तावता न धार्मिकत्वमुपैति भवान्। सर्वस्मिन्नेव युगे सर्वस्मिन्नेव देशे निष्कामानां शुद्धस्वभावानां विदुषामेतदेव प्रचारितं सत्यम्। ते सर्व एव उद्घोषितवन्तो यत् ते तादृशमेव सत्यमनुभूतवन्तः यच्चेन्द्रियाणि यत् सत्यमावेदयन्ति ततोऽप्यपेक्षयोन्नततरम्। ते सर्वेभ्य एव तत् सत्यं च परीक्षितुमुपदिशन्ति। ते प्रागुक्तां पद्धतिमाश्रित्यान्तरिकतयोपासनार्थ-मुपविशन्ति। तदानीं यदि वयं तादृशं समृद्धतरं सत्यं न साक्षात्कर्तुं समर्था भवेम तदानीमेवास्माभिस्तत्र नास्त्येव परमसत्यमिति वक्तुं युज्येत। किन्तु ततः पूर्वं तेषामुपदेशस्य यथार्थ्यमनङ्गीकर्तुं न शक्यते। अतोऽस्माभिः सविश्वासं निर्दिष्टसाधनापद्धत्या उपासनं विधेयम्। तत एवालोक आयास्यतितराम्।

यत्किञ्चिज्ज्ञानामात्रस्य प्राप्तावस्माकं सामान्यीकरणेनास्त्युपयोगः। सामान्यीकरणञ्च पर्यवेक्षणसापेक्षम्। प्रथमतो वयं पर्यवेक्षणं कुर्महे इतिवृत्तस्य ततश्च सामान्यीकरणं ततः सिद्धान्तं मूलनियमं वा निश्चिनुमः। यावन्न मनोराज्यान्तर्गतवृत्तान्तानां निरीक्षणेऽस्माकं शक्तिरस्ति तावन्न हि मनोविषयकं मानवप्रकृतिविषयकं मानवचिन्ता-विषयकं किमपि ज्ञातुं शक्नुमः। बाह्यजगन्निरीक्षणमपेक्षातो लघीयः, यतो हि तदुद्देश्यकानि बहूनि यन्त्राणि उद्भावितानि। किन्तु आभ्यन्तरराज्यप्रेक्षणे सहाकत्वेन न किमपि साधनमस्माकमस्ति। तथापि एतन् निश्चप्रचमेव ज्ञायते यत्,

विद्याया विज्ञानत्वप्रापणविधौ तत्पर्यवेक्षणमावश्यकमिति। विना पर्याप्तं विश्लेषणं विज्ञानं निरर्थकं निष्फलं सदनुमानमात्रं पर्यवस्यति। अतएव च सर्व एव मनोविज्ञानिनश्चिरमेव मिथो विवदमानाः प्रवर्तन्ते, विना तानेव ये च पर्यवेक्षणोपायमासादितवन्तः।

राजयोगविज्ञानमेव प्रथमं तत्र तादृशं पर्यवेक्षणोपायमाभ्यन्तरदशानां प्रस्तावयति। मन एव स्वयं तत्र साधनम्। एकाग्रशक्तिर्यदा याथार्थ्येन नियमिता निदेशिता च भवति अन्तर्विश्वं प्रति तदा सैव मनो विश्लिष्यति। चेतःशक्तिरितस्ततस्तता आलोकरश्मिरिव। यदा च ता एकीकृता भवन्ति तदा ताः प्रकाशयन्ति। एतदस्माकमेकमेव ज्ञान-साधनम्। बहिर्विश्वे वा आन्तरविश्वे वा सर्वत्रैव सर्व एव एतादृशीं शक्तिं व्यवहरन्ति। किन्तु वैज्ञानिका यथा बहिः सूक्ष्मां पर्यवेक्षणशक्तिं प्रयुञ्जते मनोविद्भिरपि मनःसु अपि तथा प्रयोगो विधेयः। अत्र च अनारतेनाभ्यासेन प्रयोजनम्। आशैशवाद्वयं केवलं बहिर्जगति एव मनो निवेशायितुमुपदिश्यामहे न तु अन्तर्विश्वविषये। अतएव हि प्रायशोऽ-न्तर्यन्त्राणां पर्यवेक्षणशक्तिरपगता। मनसोऽन्तर्मुखीकरणं बहिर्गति-निवारणं येन मनो निजस्वभावं जानीयात् निजविश्लेषणसमर्थं स्यादित्येतदर्थं समुदायशक्तेरेकाग्रीकरणपुरःसरं स्वात्मन्येव प्रयोगस्तु कलेशसाध्यं कार्यम्। तथापि एतद्विषये वैज्ञानिकरीत्या प्रवृत्तौ तु एतदेवैकमालम्बनम्।

एतादृशज्ञानस्य कोपयोगिता? प्रथमतो हि ज्ञानमेव ज्ञानस्य उत्कृष्ट-मुपायनम्। द्वितीयतस्तत्रैव ज्ञाने वर्तते उपयोगः। एतदस्मदीयमखिलं दुःखं

दवयिष्यति। यदा च मनुष्यो निजमनोविश्लेषणद्वारा किमपि वस्तु साक्षादुपतिष्ठते यच्चानश्वरं स्वभावतश्च नित्यपूर्णं नित्यशुद्धं तदानीं न पुनर्दुःखितो निरानन्दश्च भवति सः। सर्वाण्येव दुःखानि भयागतानि अपूर्णवासनागतानि च भवन्ति। मनुष्यः अवगमिष्यति यत् स च न मरणधर्मेति। तदानीं च मृत्युभयं नावशिष्यते। पूर्णत्वेनात्मानमवगच्छतस्तस्य पुनर्न निःसारवासना शिष्यते। प्रागुक्तकारणद्वयाभावान्न दुःखलेशमात्रं राजेत। किञ्च अस्मिन्नेव देहे परमानन्दो घटिष्येत।

तत्र केवलमेकैव पद्धतिरेतादृशज्ञानप्रापिका वर्तते। सा च ऐकाग्र्यम्। रसायनवित् निजपरीक्षणालये मानसिकीं कृत्स्नां शक्ति-मेकीकृत्य विश्लिष्यमाणेषु पदार्थेषु प्रयुङ्क्ते। ततश्च तेषां सर्वेषां रहस्यमवगच्छति सः। ज्योतिर्विच्च आत्मनः कृत्स्नमनःशक्तिमेकीकृत्य दूरवीक्षणयन्त्रद्वारा आकाशे निक्षपति एवमेव सूर्यचन्द्रतारकाः सकला एव स्वरहस्यं तस्मिन् प्रकटयन्ति। सम्प्रति मया उच्यमाने विषये यावदेव मनोनिवेशं कुर्वं तावदेव तत् प्रकाशयितुं समर्थः स्याम्। भवन्तश्च मद्वचः शृण्वन्ति, यावदेव भवन्तो मनोनिवेशं करिष्यन्ति तावदेव स्पष्टतो मम वचनं ग्रहीतुं समर्था भविष्यन्ति।

विना मानसिकीमेकाग्रताशक्तिं केनोपायान्तरेणेह एतज् ज्ञानसकलं लभ्येत? प्रकृतिद्वारदेशे कथङ्कारमाहन्येतेति ज्ञायेत चेत् प्रकृतिः स्वरहस्यमुन्मोचयितुमुद्ग्रीवा वर्तते। तस्य चाधातस्य शक्तिर्वा तीव्रता वा मानसैकाग्रतात आयास्यति। मानवशक्तेर्नास्ति काचन मर्यादा। तच्च मनो यथावदेव एकाग्रतां प्रतिपद्यते तथैव मनःशक्तिरेकस्मिन्नेव विषये

एकीकृता भवतीत्येवं रहस्यम्। बहिर्विश्वे मनःस्थैर्यसम्पादनं लघीयः। मनः स्वभावतस्तु बहिर्मुखम्, धर्मे मनोविज्ञानदर्शनादिषु वा मनःस्थैर्य-सम्पादनं न तु अनायाससाध्यम्। यतश्चात्र ज्ञातृज्ञेययोरैक्यमस्ति विषयश्चात्र आभ्यन्तरीणः, मनश्चात्र स्वयमेव ज्ञानविषयत्वेन वर्तते, मनश्च स्वयं मनो निरीक्षते। अस्माभिर्ज्ञायते यत् वर्तते एव तादृशी मनःशक्तिर्यद्द्वारा स्वाभ्यन्तरं दृश्येन इति सान्तःपर्यवेक्षणशक्तिरिति उच्यते। अहं भवद्भिः साकं वच्मि। सपद्येव पुरुषान्तररूपेण बहिर्दण्डायमानोऽस्मि। यदेव मयोच्यते तज्ज्ञानन् शृण्वन् चास्मीति प्रतीयते। यस्मिन्नेव काले मया किमपि क्रियते चिन्त्यते वा तस्मिन्नेव काले मनसः अंशविशेषो बहिस्तिष्ठन् यन्मया किं चिन्त्यत इति पश्यतीव प्रतीयते। मनसः शक्तिसकलमेकीकृत्य मनस्येव प्रयुञ्जीत। यथा अत्युत्कटतमसावृतमपि स्थानं स्वगूहितततनुषं विवृणुते प्रभाकर-करनिकटे, एवमेव संयतचेतोऽपि अन्तरङ्गतमं रहस्यमुन्मोचयत्येव। तदैव वयं विश्वासभूमौ उपगता भवेम इति। स च प्रकृतधर्मः। तदानीमेवास्माकमेतदनुभूतिवेधः स्यात् यत् आत्मा अस्ति न वेति जीवितं क्षणिकमुतानन्तमिति, इह संसारे ईश्वरोऽस्ति न वेति। एतत्सर्वमेवास्माकं पुरतो भासितं भवेत्। इयमेव राजयोगीया शिक्षा। राजयोगस्य शिक्षासकलस्यैतदेवोद्देश्यं यत् कथङ्कारं मनो नियन्तुं शक्येत ततश्च कथङ्कारं मनोगहनदेशोऽनुसन्धीयेत, अवसाने च मनोविशेषभावतः कथङ्कारं सामान्यभावेषूपगमनं सम्भवति ततश्च राद्धान्तः कश्चन निश्चीयत इति। अतएवायं न प्रश्नयति—कस्ते

धर्मः? भवानास्तिको वा नास्तिको वा इहुदी-धर्मानुयायी वा ख्रीष्ट-धर्मानुसारी वा भवतु तत्र न च काचन हानिः। वयं मनुष्या इत्येतदेव पर्याप्तम्। प्रत्येकमेव पुरुषस्य धर्मानुसन्धानानुकूला शक्तिस्तदधिकारश्च वर्तेते। प्रत्येकमेव पुंसः सर्वस्मिन्नेव विषये कारणजिज्ञासाधिकारो वर्तते स्वतश्च तस्य प्रश्नस्योत्तरमपि सुप्रापम्। किन्तु एतन्निमित्तं कियानेवायासोऽवश्याङ्गीकार्य इति।

स्यादेतत्। एतावता हि सन्दर्भेण दृष्टं यत् राजयोगस्य आलोचनायां न विश्वासेन प्रयोजनम्। यावन्न स्वयं प्रत्यक्षीक्रियेत तावन्न कदापि विश्वासः—इयमेव राजयोगस्य शिक्षा। सत्यप्रतिष्ठापने नान्येन साधनेन प्रयोजनमस्ति। किं भवतामेतद्विवक्षितं यत् जागरितदशाया भूतार्थत्व-प्रमापणविधौ स्वापस्य कल्पनाया उपयोग ऐकान्तिक इति? नैव कदाचन। एतस्मिन् राजयोगसाधने चिरन्तनेन निरन्तरेण अभ्यासेनापि प्रयोजनम्। एतस्य चाभ्यासस्य अंशविशेषः शरीरसंयमविषयकः, भूयांश्च मनःसंयोगस्वरूपः। यावदेवात्राग्रेसरा वयं भवामः, तावदेव वयमवगन्तुं समर्था भवेम यत् कथङ्कारं मनः शरीरेणान्तरङ्गत्वे-नाबद्धमिति। यदि चास्माकं विश्वासः स्यात् यत् मनस्तु शरीरस्यैव सूक्ष्मदशाविशेष इति मनश्च शरीरस्य प्रभवति तदा च एतदपि साङ्गत्यं भजेत यत् शरीरमपि मनसः प्रभवति। शरीरस्य वैकल्यावैकल्ये मनसोऽपि वैकल्यावैकल्ये दृश्येते। पुरुषस्य कस्यचन क्रोधे मनोऽपि तदीयमुद्वेगमेति। आनुरूप्येण मनसोऽपि अस्थैर्ये शरीरमपि चाञ्चल्यं भजते। आधिक्येनैव पुंसां मनः विशेषतः शरीराधीनं तेषां च

मनोऽत्यल्पविकाशशीलमिति। मानवानामनेक एव पशुतः स्वल्पत एव उन्नततराः। न केवलमेतदेव, अनेकत्र तिर्यग्योनिभ्योऽपेक्षया मनुष्याणां संयमसामर्थ्यं नात्यधिकम्। अतिलघु एव नियमनमस्माकं मनसि। अतएव च मनसो नियमननिमित्तं देहचित्तवशीकरणाय अस्माभिरवश्यमेव किञ्चिद्दैहिकसाधनं स्वीकर्तव्यम्। यदा कलेवरः संयततामुपेयात् पर्याप्तत्वेन तदास्माभिर्मनोविचारे यत्न आधातुं शक्यते। एवम्भावेन मनोविचारेण मनो वशीकर्तुमस्मदिच्छानुसारमनेन कृत्यं सम्पादयितुं चेतःशक्तिसमूहमेकीकर्तुं च अस्माभिः शक्यते। राजयोगानुसारं बहिर्जगत्तु आभ्यन्तरजगतः सूक्ष्मजगतो वा व्यक्तरूप-मात्रम्। सूक्ष्मतरं च सदैव कारणतां भजेत, स्थूलं च कार्यतामिति बहिर्जगद्धि फलस्वरूपमान्तरजगच्च कारणभूतम्। आनुरूप्येण बाह्य-प्रपञ्चशक्तिसकलं तु आन्तरसूक्ष्मशक्तिसकलस्य स्थूलभागमात्रम्। येन च पुंसा आविष्कृतं विदितमपि यत् कथङ्कारमन्तःकरणशक्तिः परिचाल्यत इति। तेन तदधीनतया समग्रं जगत् सुप्रापम्। समेष्वेव प्रपञ्चेषु प्रभुत्वप्रतिपादनमखिलप्रकृतिनियमनं च न गुणकार्यमिति स्वकर्तव्यतां ख्यापयति योगी। ये चास्माभिः प्रकृतिनियमा इति ख्याप्यन्ते ये च योगिषु प्रभुत्वप्रतिपादने सामर्थ्यं न भजेरन् तादृशी दशा एव ईप्सितत्वेन वर्तते योगिनाम्। तादृशदशायां च स सर्वानिवातिशेतुं समर्थः स्यात्। तदानीमेव स बाह्याभ्यन्तराखिलप्रकृतिषु प्रभुत्वं प्रतिपद्येत। सभ्यताया मानवजातेश्चाभ्युदयतात्पर्यं तु एतत्प्रकृति-शक्तिनियमनमात्रम्।

भिन्नभिन्नमानवजातयः प्रकृतिनियमने भिन्नां भिन्नामेव पद्धतिमवलम्बन्ते। यथाहि एकस्मिन्नेव समाजे केचन बाह्यप्रकृतिनियमने केचन वा अन्तःप्रकृतिवशीकरणे ईहन्ते। केषाञ्चन नये अन्तःप्रकृतौ वशीभूतायां सत्यामेवाखिलमेव वशीभवन्ति। अन्ये च बाह्यप्रकृति-वशीकरणे सकृत्ते सर्वमेव वशीभूतं भवतीत्याहुः। एवं मतद्वयावसानमुपनीतैरस्माभिरनुभवितुं शक्यते यत् तदुभयमेव यथार्थमिति। यतो हि प्रकृतौ न बाह्यान्तरभेदेन विभागोऽस्ति, एतत्कल्पनामात्रम्। वस्तुतस्तु तदसदेव। बहिर्वादी वा अन्तर्वादी वा यदा स्वस्वज्ञानस्य चरमसीम्नि उपनीतो भवेत्तदा तौ मिथो मिलितौ भवेताम्। यथाहि पदार्थविज्ञानी स्वज्ञानगतचरमपरिधिमुपनीतः सन् अवगच्छेद्यत् विज्ञानं दर्शनेन एकीभवति एवमेव दार्शनिकोऽपि भिन्नत्वेन प्रतीयमानं मनोजडपदार्थादिकं प्रकृत्या तु अभिन्नसत्ताकमेव।

समेषामेव विज्ञानानामेतदेव लक्ष्यमेतदेवोद्देश्यं यत् यस्मादेकस्मादेव पदार्था बहुत्वेन प्रकाशं प्रतिपेदिरे तस्य एकत्वनिर्णय एव। राजयोगिभिरपि आभ्यन्तरजगत आभ्यन्तरप्रकृतेः पर्यवेक्षणमावेद्यते यद्द्वारा बाह्याभ्यान्तरोभयमेवाखिलविश्वं नियमयितुं शक्यते। पुरातनीयं प्रचेष्टा। भारतवर्ष एव विशेषचेष्टा दृश्यते किन्तु अन्याभिरपि जातिभिरेतच्चेष्टितपूर्वम्। प्रतीच्येषु च देशेषु इयं रहस्यविद्येति प्रचारिता येनैवैतदभ्यसितुमियेष डाकिनीति इन्द्रजालविदिति अपवादेन दह्यते हन्यते वा स्म। भारतवर्षे हि नानाविधकारणकूटवशादियं विद्या एतादृशानां केषाञ्चन पुरुषाणामधीनतामेति, यैश्च एतद्विद्यायाः प्रतिशतं

नवतिभागं विनाश्य शिष्टांशस्तु कथञ्चिद्गोपयितुं शेके। सम्प्रति तु भारतवर्षीयेभ्यो गुरुभ्योऽपेक्षया निकृष्टाः केचन शिक्षका दृश्यन्ते। भारतवर्षीया गुरवस्तथापि किञ्चिज्ज्ञानिन आसन् आधुनिका एतादृशाध्यापकास्तु किमपि न जानन्ति।

एतद्योगविद्यायां यदेव गुह्यमद्भुतं च तदेव विवर्जनीयम्। जीवितस्योत्कृष्टं निर्देशकं च बलमेव। विषयान्तरेऽपि धर्मवत् यदेव दुर्बलकरं तत् पूर्णत एव परिहेयम्। रहस्यस्पृहैव मानवबुद्धिमबलीकरोति। एतस्मादेव कारणाद्विज्ञानराजस्य योगशास्त्रस्य विनाशः संवृत्तः। चतुः-सहस्रवर्षेभ्योऽपि पूर्वं योगशास्त्रमाविष्कृतम्। तत एव तद्योगशास्त्रं भारतवर्षे संकलितं सद्वर्णितं प्रचलितं च वर्तते। एतच्च चकितं वृत्तं यत् व्याख्याकृतयो यावन्त एवाधुनिकास्तावन्त एव तेषां प्रमादाः। अर्वाचीनटीकाकृतामनेक एव नाना रहस्यमाचक्षते। एतादृशं योगशास्त्र-मल्पीयसां केषाञ्चन करायत्ततां गतं येनेयं विद्या रहस्यविद्येति ख्यातिं गता। ततश्च उपपत्तिप्रभा अत्र पुनर्न पतिता।

प्रथमत एतद्वक्तव्यं यत् यदेव मया शिशिक्षिषितं न तज्जुगुप्सितम्। यदेव चाल्पत्वेन ज्ञातं मे वर्तते तदेवाहं ब्रवीमि। यावदेव युक्त्या योजयितुं शक्येत तावदेववोपपादयामि। यच्च प्रत्यक्षतो न ज्ञातं तत्र यथाशास्त्रमेव प्रकाश्येत। अन्धविश्वासो न न्याय्यः। स्वोपपत्तिर्विवेचन-शक्तिश्चात्र प्रयोज्या। शास्त्रधृतं तथ्यमवितथं न वेति विवेच्यम्। विज्ञानान्तरज्ञाने या च पद्धतिरनुसर्यते सैव सरणी एतद्विज्ञानचर्चायामपि समाश्रेया। नात्र गोपनीयं रहस्यं विद्यते। न च विपदः शङ्कालेशोऽपि

अस्ति। अत्र च यावदेव सत्यं निहितं तावन्मात्रमेव समेषां समक्षत उन्मोचनीयम्। एतादृशीनामुपासनविद्यानां प्रत्युत गोपनीयत्वचेष्टायां तु संकटकूटः समापतेत्।

इतोऽपि आधिक्येन वक्तव्ये तु ततः पूर्वं सांख्यदर्शनसम्मतं किमपि मयोच्येत यत्र च समस्तेयं राजयोगविद्या अध्यस्ता। सांख्यदर्शन-प्रस्थानानुसारं प्रत्यक्षजन्मैवंप्रकारेण प्रसरति यत् प्रथमतो हि अर्थेन चक्षुरादियन्त्रैः संयोगः संस्थाप्यते। चक्षुरादीन्द्रियेभ्यस्तत्प्रेषयति बाह्य-शब्दरूपाद्यर्थानां प्रभावो बहिरिन्द्रियरूपयन्त्रेण स्वस्वमस्तिष्कमध्ये प्रकृतेऽन्द्रिये वा नीयते। इन्द्रियाणि मनसे निवेदयन्ति मनश्च निश्चयात्मिकायै बुद्ध्यै निवेदयति। तदानीमेव पुरुषो जीवात्मा तद्गृह्णाति। विषयानुभूतिश्च भवति। अथ ते च विषया येन मार्गेणागताः, पुरुषस्तेनैव मार्गेण तान् प्रत्यावर्तयितुमादिशति। यद्यपि पुरुषं विहाय अन्यत् सर्वमेव जडभूतम्, तथापि बहिरिन्द्रियापेक्षया मनस्तु सूक्ष्मतरम्। मनो येनोपादानेनोत्पन्नं तत्सूक्ष्मतन्मात्रमपि उत्पादयति। तान्येव स्थूलानि सन्ति जडपदार्थं जनयन्ति। एतदेव सांख्यिनां मनोविज्ञानम्। अतो बुद्धिस्थूलभूतयोर्वैलक्षण्यं तु केवलं मात्रागतम्। पुरुष एव केवलं चेतनः। मनो हि आत्मनो यन्त्रमिव प्रतीयते। तद्द्वारा आत्मा बाह्यार्थानादत्ते। मनः सदैव परिवृत्तिस्वभावररूपम्, सदैव चञ्चलम्। सिद्धदशायां क्वचिन्मन इन्द्रियसमूहसंसक्तं भवति, क्वचिदेकस्मिन्नेवेन्द्रिये संसक्तं भवति, क्वचित् कुत्रापीन्द्रिये न लग्नं भवति। यथा भावय यत्, अहमेकस्य घटियन्त्रस्य शब्दं सावधानं

शृणोमि, एतद्दशायां मम चक्षुरुन्मीलितमपि किमपि द्रष्टुं न समर्थो भवामि। एतेनैतत् प्रमीयते यत् मनो यदा श्रोत्रेन्द्रियेण सम्बद्धमासीत्, किन्तु दर्शनेन्द्रियेण न सम्बद्धमासीत्। किन्तु सिद्धपुरुषस्य मनो युगपदेव समैरेवेन्द्रियैः संयोगक्षमम्। मनसः पुनरन्तर्दृष्टिर्वर्तते। एतत्सामर्थ्यान्मनुष्यः स्वान्ताभ्यन्तरदेशोऽपि द्रष्टुं शक्नोति। एतदन्त-र्दृष्टिशक्तिलाभ एव योगिनामुद्देश्यम्। मनसः समुदयशक्तिमेकीकृत्याभ्यन्तरं प्रत्यावर्त्य स्वाभ्यन्तरे किं घटत इत्येतदेव योगी जिज्ञासते। नात्र केवलं विश्वासमात्रम्, एतत् केषाञ्चन दार्शनिकानां मनस्तत्त्वविश्लेषणस्य फलमात्रम्। आधुनिकानां शारीरतत्त्वविदां नये प्रकृतदर्शनस्येन्द्रियं (साधनं) न चक्षुरपि तु मस्तिष्कमध्यगं स्नायुस्थितं साधनान्तरम्। एतच्च समाधानं समेष्वेवेन्द्रियेषु बोध्यम्। त एवमपि ब्रुवते यत्, मस्तिष्को येनोपादानेन विनिर्मितः स्नायुतन्त्री अपि तेनैवोपादानेनेति। सांख्यसंख्यावन्तोऽपि तथैवाचक्षते। सांख्यसिद्धान्त आध्यात्मिकदृष्ट्या वैज्ञानिकसिद्धान्तस्तु भौतिकदृष्ट्या। तथापि तयोर्मतं तु समानमेव। अस्माकं गवेषितं तु तदतिशायि।

योगिनैतादृशी सूक्ष्मानुभूतिदशा अधिगन्तुमिष्यते, यद्द्वारा नानामानसदशाः प्रत्यक्षीकर्तुं शक्येरन्। तेषां मानसानुभवो निश्चप्रचमेव सम्भाव्यते। अर्थकर्तृकं बहिरन्द्रियसाध्यं वेदनं कथङ्कारं स्नायुमार्गं भ्रमति, मनश्च कथङ्कारं गृह्णाति, कथमेव वा तन्निश्चयात्मिकां बुद्धिमुपनीतं भवति, पारिशेष्येण च कथङ्कारं तत् पुरुषं प्राप्नोति—इत्येतत्सर्वमेव येन केनापि अनुभवितुं शक्यते। प्रत्येकं विद्याप्रस्थानस्य

निर्दिष्टा काचन शिक्षाप्रणाली वर्तते सैव सरणिरादौ अवबोध्या। तथात्व एव तद्विज्ञानं शक्यावबोधं स्यात्। राजयोगविद्यायामपि तदेव ज्ञेयम्।

भोजनविषये केचन निर्दिष्टा नियमा अनुसर्तव्याः। तादृशमेव भोज्यमङ्गीकरणीयम्, येन मनः पूतत्वं प्रतिपद्येत। पशुशालाभ्यन्तरं प्रविश्यते चेत् एतत् सुतरामेव सुबोधं स्याद्यत्, भोज्यशरीरयोः कः सम्बन्ध इति। भवता निरीक्षितुं शक्येत यत् करिणो विशालकाया अपि शान्तस्वभावाः। यदि च शार्दूलसिंहानामुपपिञ्जरं प्राप्येत भवता तर्हि तेषामस्थैर्यं दृश्येत। एतेनैव सुगमं यत् भोज्यभेदेन कियत्पार्थक्यमनयोरुपजनितम्। अस्मच्छरीरे यावत्य एव शक्तय क्रीडत्यो वर्तन्ते सर्वा एव आहारोत्पन्ना इति प्रत्यहमेव प्रत्यक्षगोचरम्। यदि उपोषितुमारभ्यते आदौ देहो दौर्वल्यमुपेयात् दैहिकी शक्तिर्हीयेत ततश्च कियति दिवसेऽतिगते मानसिकी अपि शक्तिः क्षीयेत। ततश्च स्मृतिशक्तिर्लीयेत। ततोऽपि एतादृशी दशा उपगता स्यात् यदा चिन्तासामर्थ्यमपि अपहृतं भवेत् का कथा वादादिविचारस्य। अतश्च साधनादौ खाद्यविवेचने मनो निधेयम्। परवर्तिनि काले यदा पर्याप्तशक्तिः सञ्चीयेत यदा च साधनायामग्रेगामिभिर्भूयेत, तदानीं न पुनः सचेतनतया प्रयोजनम्। अङ्कुरप्ररोहवेलायामेव परिखया प्रयोजनम् यथा केनापि तस्य हानिः साधयितुं न शक्येत। प्राप्ते तु बृद्धिं वृक्षस्य परिखा परिहीयेत। तदानीं समस्तात्याचारप्रतिरोधानुकूला शक्तिस्तस्य राजेतैव।

योगिना विलासप्राचुर्यं कृच्छ्रताप्राचण्ड्यमपि नादर्तव्यम्। तेन नोपषितेन भवितव्यम्। न वा तस्य शारीरक्लेशोत्पादनं समुचितम्। येन च तथाविधमाचर्य्यते प्रत्युत स न योगीति गीतामतम्। न चातिभोजी न वैकान्तोपवासी, नातिजाग्रत्, नाधिकनिद्रालुः, नातिकर्मा न वा निष्कर्मा योगित्वं भजेत।

# प्रायोगिकाध्यात्मिकताया इङ्गितम्

*(क्यालिफोर्नियायाः लस्-एञ्जेलस् इत्याख्यस्थानस्य 'होम अव् टुथ्' इत्यत्र उपस्थापितमेतत् प्रवचनम्)*

अद्य प्रातः प्राणायामतदितरसाधनसम्बन्धिनीमालोचनामुपस्थापयितुं यतिष्ये। अस्माभिर्भूयः कालं यावत् तत्त्वमालोच्यते स्म, इदानीं किञ्चित्तत्साधनस्य आलोचनविषयत्वेन वर्तमानत्वात् न तद् रुचिरहितं स्यात्। विषयेऽस्मिन् भारतवर्षे बहुविधैव ग्रन्था विगुम्फिताः। एतद्देशीयाः पुमांसो यथा जागतिके विषये निपुणा अस्मद्देशीयाः पुरुषास्तु तथैव तद्विषये दाक्ष्यं दधत इति प्रतीयते। एतद्देशीयाः पञ्चपुरुषाः स्वस्वबुद्धि-मेकीकृत्य ब्रूयुर्यत्, 'वयमेकं यौथप्रतिष्ठानं निर्मिनुम' इति, घण्टापञ्चकमध्ये तत्सम्पादनसमर्था अपि भवन्ति ते। प्रत्युत भारतीयास्तु एतस्मिन् विषये एतावन्त एवापटवो यत्पञ्चाशद्वर्षव्ययेऽपि न समर्थाः स्युः। एतत्तु अत्र लक्ष्यं यत् यदि पुरुषः कश्चन दर्शनप्रस्थानप्रवर्तनं प्रारभते भवतु वा तच्चकितकरमपि निश्चप्रचमेव तदनुगामिनः स्युः। यथा दिङ्मात्रमुदाहरणं यत् कश्चन सम्प्रदाय एवं प्रचारयितुमारभते यत्, यदि केनापि एकेनैव पादेन रात्रिन्दिवं दण्डायमानेन द्वादशवर्षैर्भूयेत तदा तेन निश्चयेनासादितनिःश्रेयसेन भवितव्यम्। तत्र शतं पुरुषा एव पादैकावलम्बनास्तथैव शुश्रूषवस्तिष्ठन्तः प्राप्येरन्। समस्तमेव कष्टं निःशब्दसह्यं स्यात्। बहव एव सन्ति ये च बहुवर्षेभ्यो धर्मैकसामासत्तिनिमित्ता

ऊर्ध्वकृतकराः सन्ति। तेषु शतशः पुमांसः स्वचक्षुषैव निरीक्षिताः। अपि चैतन्मनसि निधेयं यत्, न च ते मौढ्यमुपेताः, किन्तु ते तदीयेन ज्ञानगाम्भीर्येण ज्ञानवैशद्येन च विस्मयमुपजनयन्ति। अतएव कर्मदाक्ष्य-शब्दार्थोऽपि आपेक्षिक इति द्रष्टव्यम्।

परेषां गुणदोषविचारे वयं सदैव प्रमादपरा भवामः। वयं सदैव एतच्चिन्तनोत्सुका यत्, अस्माकीनं क्षुद्रं मनोराज्यमेवाखिलं वर्तते नान्यत् किमपि तद्भिन्नम्। तथापि अस्माकं नीतिबोधः, अस्माकमेवौचित्यबोधः, अस्माकमेव प्रयोजनबोध एव तत्र वर्तते तद्भिन्नं निखिलमेव हीनमूल्यमिति। अन्येद्युः इउरोपगमनकाले मार्साइल्स्-नगरातिक्रमणकाले तत्र षण्डसंस्पर्धा प्रवर्तमाना आसीत्। तद्दर्शनाज् जलयानस्थं निखिलाङ्गलयात्रिवृन्दं प्राप्तोद्वेगं संवृत्तम्। एतत्सर्वमेवातिनृशंसत्वेन समालोचितं भर्त्सितं च तैः। प्राप्ताङ्गलदेशेन मया श्रुतं यत् पणीकृत्य स्पर्धानिमित्तं प्यारिसप्रदेशं केचनोपस्थिताः। फरासिप्रदेशीयैश्च पुरुषैस्तत्क्षणादेव ते पराभूताः। तेषां नये एतत्पाशविकमाचरणम्। एवंजातीयकं विविधदेशचर्चितं मतजातं कर्णीकुर्वद्भिरस्माभिर्यीशुख्रीष्टीया वाणी अनुपमा अवगन्तुमारब्धं यत्, 'नापरस्य विचारे यत्न आधेयः, तथात्वेनैव स्वयमेवात्मविचारतो निष्कृतिं विन्देत' इति। यावदेव शिक्षां लभामहे तावदेव अज्ञानताऽस्मदीया ज्ञायेत। तावदेवावबुध्यते यत्, एतन्मानवीयं मनोनामकं वस्तु कियदेव विचित्रं कियदेव बहुमुखम्। बाल्यकाले स्वदेशीयानां तपस्विस्वभावस्य कृच्छ्रसाधनस्य मर्दनतत्पर आसम्। अस्मद्देशीयैर्महद्भिराचार्यैरपि ते

मर्दितास्तथागतेनेव महापुरुषेण क्षणजन्मना महात्मना एतदाचरितम्। तथापि यावदेव वयोवृद्धिर्घटते क्रमेण तावदेवानुभवामि यत् नाधिकारः विचारे अस्माकमिति। क्वचित् चिन्तयामः आशस्महे यत्, सत्यपि असाङ्गत्ये एतेषां तपोधनानां साधनशक्तेस्तितिक्षायाश्च भागमात्रस्यापि यदि स्यादिति। प्रायशो हि प्रतीयते यत्, यच्च विंवेचनं भर्त्सनं वा तेषूपस्थाप्यते तत्र देहिकी पीड़ा न निदानमपि तु भयमात्रमेव। कृच्छ्र-साधनशक्तेरुत्साहस्य चाभाव एवात्र कारणम्।

तर्हि दृश्यतां भवद्भिर्यत् सामर्थ्यं वीर्यं पौरुषमित्येतत् सर्वमद्-भुतम्। 'पौरुषशाली अयम्' 'वीरोऽयं पुरुषः' 'निर्भयोऽयं जनः' इत्येवं सामान्यतः अस्माभिर्व्यवह्रियते। किन्तु अस्माभिरेतन्मनसि निधेयं यत्, पौरुषं वा वीर्यं वा न किमपि वैशिष्ट्यं यावत्पुरुषभावि भवेदिति। यश्च पुमान् गुलिप्रक्षेपणीमनुधावति स एव अपरत्र छुरिकायाः चिकित्सकस्य विभेति। किञ्च अपरथा कश्चन कदापि न अभिगुलि-प्रक्षेपणि तस्य च सति प्रयोजने अस्त्रोपचारः सह्यवेदनो भवतीति। अतश्चोद्याः स्पष्टतः परकीयविचारवेलायां प्रयुक्तानां पौरुषमहत्त्वा-दिशब्दानामर्थाः। 'नायं निपुणः' इत्येवं भर्त्सनवाक्यं यस्मिन् विषये पुरुषेषु प्रयुज्यते तस्यैव मम यत्रानैपुण्यं तत्र विषये चकितं दाक्ष्यं स्यादेव।

अपि चैतदुदाहरणान्तरं द्रष्टव्यम्। तथाहि प्रायश एवास्माभिः प्रमादवद्भिर्भूयते नारीपुरुषयोः कर्मदाक्ष्यालोचनवेलायाम्। पुरुषाणां परस्परस्पर्धासामर्थ्यात् प्रचण्डशारीरक्लेशसहनसामर्थ्याच्च सामान्यमनुष्या मन्येरन् यत्, अस्मिन् विषये पुरुषाणामस्ति गरीयस्त्वम्। अपरतः स्त्रीणां

शारीरदौर्बल्येन योधासामर्थ्येन च एवं व्यतिरेक उपपादयितुं युज्यत इति। न चैतन्न्याय्यम्। नार्योऽपि वीर्यतः पुरुषसन्निभा एव। स्वभावतः प्रत्येकमेव नारी वा पुरुषोऽपि वा समानतां याति। नार्योऽपि यादृशं धैर्यं सौहिष्ण्यं स्नेहं वा समाश्रित्य सन्तानं पोषयन्ति केन च पुंसा तथा साधयितुं शक्येत? एकः पुमान् कर्मशक्तिं प्रोपोद्वलयति अपरा च (नारी) सहनशक्तिम्। यदि चेदमुच्येत यत्, न च रमणीभिः शारीरक्लेशः सोढुं शक्यते तदेदं वाच्यं यत् पुरुषैरपि तथा। प्रपञ्चस्तु निखिलोऽपेक्षातः साम्यविषयः। यद्यपि नेदानीं ज्ञातं भवेद्वा भविष्यति ज्ञातं यत् क्वचित् तुच्छेऽपि क्वापि कीटे निहितं किमपि आविष्कर्तुं शक्यते यद्द्वारा स मनुष्यैः साकं प्रतिस्पर्धां कर्तुमलम्। अतीव दुरितात्मसु अपि एतादृशाः केचन सद्गुणाः स्थातुं योग्या ये च नास्मासु विलसन्तीति। एतदहं प्रत्यहं परिलक्षे। दृश्यतामसभ्यजाति-जनः। एवामाशासे यत् यदि मे देहस्तेषामिव सुष्ठु स्यादिति। स चोदरपूरं खादतपिबता वर्तते। मन्ये तस्य नैतद्विदितचरं यत् को नाम रोग इति? तत्रास्माकं तु नित्यं रोगपीड़ा। न जाने कियती हि मुञ्जायेत यदि तेषां देहकृते अस्मच्छिरःपरिवृत्तिर्घटेत। तरङ्गोत्थान-पतनसमुदायात्मकं हि जगत्। असति रिक्ते स्थाने तरङ्गो न जायते। सर्वत्रैव परिपूरकत्वम्। यदि भवतां किमपि महद्वस्तु वर्तते तर्हि भवत्प्रतिवेशिनामपरं महत् किमपि अस्तीति। अतः स्त्रीपुंविचारवेलायां तत्तन्महत्त्वमापकानुसारमेव विवेच्यम्। न हि एकस्योपानह् पुरुषान्त-रचरणे उपयुज्यते। एकस्य विगर्हणारोपणे नापरस्याधिकारः। सोऽयं

प्राचीनः कुसंस्कारो यत् भणति—'एतस्मिन्ननुष्ठिते जगदुच्छेदं यायादि' ति। तथापि जगन्न ध्वंसमुपेतम्। एवं प्रवादः प्रचारित आसीत् यत् निग्रोजातीनां स्वाधीनतायां देशः सर्वथा नाशमियात् इति। किं सर्वथा नाशः संवृत्तः? अपि चैतदुक्तं यत्—गणशिक्षासम्प्रसारे हि जगतो नाशः स्यादिति। किन्तु तत्र जगतोऽभ्युदय एव सम्पन्नः। कियद्वत्सरेभ्यः पूर्वं ग्रन्थः कश्चन प्रकाशितः आङ्ग्लदेशीयानां भाविनीं दुर्दशामलोचयन्नासीत्। तत्र ग्रन्थकृता एतद्दर्शितं यत् श्रमिकाणां पारितोषिकवृद्धौ व्यापारकर्मणः अनभ्युदयो भवतीति रवः कश्चन समुत्थितो यत्, आङ्ग्लदेशीयानां श्रमिकाणामधिकारोऽत्यधिकः एकतो जार्मान्देशीया अल्पीयसैव वेतनेन कर्म कुर्वन्ति। अनुसन्धानसंगोष्ठी काचन जार्मानिप्रदेशं प्रेषिता तदनुसन्धाननिमित्तम्। ततश्च अनया विनिवेदितं यत्, जार्मानप्रदेशीयैः श्रमिकैरधिकवेतनमेव लभ्यते। कथङ्कारमेतत् संघटितम्? जनशिक्षैव तन्मूलम्। अतश्च जनशिक्षाजन्यं जगदुत्सादनमिति चोद्यस्य का गतिः? विशेषतः भारतवर्षे प्राचीनानामेव सर्वत्राधिपत्यम्। ते साधारणमनुष्यतः सर्वमेव जुगुप्सन्ते। ते च आत्मतुष्टिकरं सिद्धान्तं समागता यत्, त एव जगन्मणयः। एतैर्भीषणैः परीक्षणैर्न तेषां हानिः सम्पादयितुं शक्यते। तैस्तु केवलं सामान्यमनुष्याणां हानिर्भवेत्।

इदानीं कर्मदाक्ष्ये प्रत्यावृत्तिरस्तु। बहुप्राचीनकालत एव मनस्तत्त्वीयः व्यावहारिकः प्रयोगः प्रचलन्नास्ते। यीशुख्रीष्टजन्मनोऽपि चतुर्दशशतवत्सरेभ्यः पूर्वं महान् दार्शनिकः पतञ्जलिनामाविर्बभूव भारतवर्षे। अतीतसंकलितानामभिज्ञातानां सौविध्यं स्वीकुर्वता तेन

मनस्तत्त्वसम्बन्धि तथ्यं प्रमाणं गवेषितं च संकलितम्। एतदवधेयं यत् जगदतिप्राचीनम्। न चेदं द्विसहस्रवत्सरेभ्यः त्रिसहस्रवत्सरेभ्यो वा पूर्वं सृष्टम्। इह तु प्रतीच्ये देशे एतदुपदिश्यते यत्, अष्टादशशतवत्सरेभ्यः पूर्वत एव निउटेस्टाम्यान्ट्सहिततया समाजः प्रचलन्नास्ते। इतः पूर्वं नासीत् समाजः। एतत् प्रतीच्यदेशदृष्ट्या यद्यपि सत्यं तथापि नैतत् यथार्थम् तु अखिलप्रपञ्चदृष्ट्या। लण्डनदेशे यदा प्रवचनं कृतवानासम्, मम बुद्धिमान् प्रायशो हि विपश्चित् कश्चित् सुहृत् तर्कयन्नासीत्। स चैकदा मयि समस्ततूणीस्थतर्कायुधनिक्षेपानन्तरं हठात् तारस्वरेण आचिक्षेप यत् कथं न तर्हि नः शिक्षयितुं महर्षय आङ्गलदेशमायान्ति? मया प्रत्युत्तरितं यत् यतो हि तदानीमाङ्गलत्वेन नासीत् कश्चन देशः। किं तेऽटवीद्रुमेषु तत्त्वं प्रचारयेयुः?

इङ्गारसोलनाम्ना अहमुक्तः यत्, 'पञ्चाशद्वर्षेभ्यः पुर्वमेतस्मिन् देशे एवं प्रचारिते सति भवान् आलभ्येत जीवन्नेव वा दह्येत ग्रामतः ताड्येत पाषाणनिक्षेपेण वा। अतएव ख्रीष्टजन्मनः चतुर्दशशतवत्स-रेभ्योऽपि पुर्वं सभ्यतासत्त्वमासीदेवेति नैतद्विचारसहम्। सभ्यता अधस्तनदशात उन्नतदशां सदैव समासन्ना इत्यत्रेदानीमपि विचारावकाशो वर्तते। समानीभिरेवोपत्तिभिः समानैश्च प्रमाणैरेतदपि दर्शयितुं योग्यं यत्ते सभ्या एव क्रमतोऽसभ्येषु वर्वरेषु परिणमन्ते। तथाहि दिङ्मात्रमुदाहरणं यत् चैनिकानां कदाचन नायं विश्वासो यत् वर्वरदशातः सभ्याताया उत्पत्तिः संवृत्तेति। यतो हि तेषामनुभवस्तु विपरीतमेव भूतार्थं प्रमाणयति। किन्तु यदा च भवद्भिरामेरिकासभ्यताया उल्लेखः क्रियते

भवतामयमेवाभिप्रायो यत् भवदीया जातिश्चिरं स्थास्यति भवदीया चाभ्युन्नतिरिति।

अत्रायं विश्वासः स्थापयितुं युज्यते सुतरामेव यत्, हिन्दुजातिजनाः सप्तशतवत्सरपर्यन्तमवनतिमधिगता अपि प्राचीने तु काले अत्युन्नता आसन्निति। अस्माभिस्तद्विपरीतं प्रमापयितुं न शक्यते।

नच्चैकमपि दृष्टान्तमात्रं सुलभं यत् प्रत्येकमेव सभ्यता स्वत एव समुदिता। कस्याश्चित् जातेः जात्यन्तरेण मेलनं विनैव कापि जातिः सभ्यत्वमगादित्यत्र न किमपि निदर्शनं दृश्यते। अतएव अस्माभिर्वक्तुं युज्यते यत् एका वा जातिः जातिद्वयं वा मूलसभ्यताया अधिकार-त्वेनासीत्, सैव निष्क्रम्य स्वभावं विस्तार्य जात्यन्तरेण संगता इत्येवं-क्रमेण सभ्यता विस्तारं लेभे।

वास्तविके हि जीवने अस्माभिराधुनिकविज्ञानभाषयैव वक्तव्यम्। किन्तु एतन्मनसि निधातुमवश्यमेव मयानुरुध्येत यत् यथा धर्मे कुसंस्कारो राजते तथैव विज्ञानेऽपि स्यादिति। सन्ति तत्र नैके पुरोहिता ये च धर्मानुष्ठानं स्वजीवनवैशिष्ट्यत्वेन स्वीचक्रुः। तथैव वैज्ञानिका नैव सन्ति ये च प्राकृतिकानां नियमानामपचितिविधायकाः। डारउइन-हाक्सलिप्रभृतिवत् महतां वैज्ञानिकानां नामग्राहमात्रमेव अन्धत्वेन वयमनुसरामः। इयमेव साम्प्रतिकी प्रथा। प्रतिशतं नवतिभाग एव वस्तुतस्तु मतवादो यश्चास्माभिर्विज्ञानानुमतत्वेनाकल्यते। तेषां मध्यतः अनेके एव च पुनः प्राचीनतः सहस्त्रशिरःकरप्रेतविषयकादन्ध-विश्वासापेक्षाया कथमपि नोत्कर्षवन्तः; किन्तु एतदेव पार्थक्यं यत् अस्य

कुसंस्कारात्मकत्वेऽपि द्रुमग्रावादितोऽचेतनतो मनुष्याः कथञ्चित् पृथक्त्वेन परिज्ञायन्तेऽत्र। यथार्थज्ञानस्यैतदावेदनमस्माकं, सावधान-र्स्थितौ पुरोहितैः सह यथा सतर्कव्यवहारो विधीयते तथैव विज्ञानिभिर-पीति। अविश्वासेनारम्भवता भवता भाव्यम्। कृतसविश्लेषणपरीक्षैः प्राप्ताखिलप्रमाणैरास्था आस्थेया। आधुनिकविज्ञानस्य केचनातिप्रचलित-विश्वासा नेदानीमपि प्रमाणगोचरतां गताः। किञ्च गणितशास्त्रमिव विज्ञानशास्त्रेऽपि अनेक एव मतवादाः कार्यानुकूलसामयिकसिद्धान्त-मात्रम्। समृद्धतरबोधोदयमात्रमेव ते च निक्षिप्यन्ते।

ख्रीष्टजन्मनश्चतुर्दशशतवत्सरेभ्यः पूर्वं केनापि महर्षिणा केषाञ्चन निर्दिष्टानां मनस्तत्त्वसम्बन्धिनां तथ्यानां विन्यासविश्लेषणसामान्यीकरण-निमित्तं यतितम्। तमनुसरद्भिरात्ततदाविष्कृतज्ञानभागैरनेकैः विशेषतश्चर्चा विहिता। प्राचीनजातीनां केवलं हिन्दुजातिजनैरेव ज्ञानशाखाविशेषचर्चायां यत्नः युक्तस्नेहेनाहितः। इदानीमुपदेशो दीयते। किन्तु भवत्सु कतिभिरेतदभ्यासः क्रियते? अभ्यासहाने वा कति दिवसाः कति वा मासा अपेक्ष्यन्ते? भवन्तस्तु विषयेऽस्मिन्ननुपयुक्ताः। भारतवासिनस्तु युगतो युगमेतदनुशीलनं कुर्वन्तस्तिष्ठेयुः। भवद्भिस्तुः चकितैर्भाव्यमेतच्छ्रवणेन यत्, न चास्ति तेषां साधारणप्रार्थननिकेतनं, न च तज्जातीयं किमपि, तथापि तैः प्रत्यहं प्राणायामः अभ्यस्यते, मनःसंयमे यत्न आधीयते, एतदेव तदुपासनाङ्गमौलिभूतम्। एतदेव मूलं तथ्यम्। प्रत्येकं हिन्दुजातिजनः नूनमेतत् कुर्वीत। तद्देशस्यायमेव धर्मः। किन्तु एकामेव पद्धतिमापद्य नापि तत्साधयितुं ते समीहेरन्, श्वासनियमनमनःसंयमनादिषु

अभ्यासगतपद्धतिभेदाः प्रत्येकमेव पुरुषस्य स्थातुमर्हन्ति। एकस्य पद्धतिज्ञानेऽपरस्य नास्ति प्रयोजनम्। किञ्च नैतत् प्रयोजनं स्त्रियोऽपि, पितापि न जानीयाद्यत्, पुत्रेण किम्विधा पद्धतिराचितेति। किन्तु ते सर्व एवैतदभ्यासनिष्ठाः। नास्ति चैतेषु विषयेषु गोपनीयं किमपि रहस्यम्। गोपनरहस्यस्य भावमात्रमप्यत्र नास्ति। सहस्रशः पुरुषा नित्यमुपगङ्गातीरमुपसन्ना मुदितनयनाः प्राणायाममानसैकाग्रसाधनयत्ना नित्यं दृश्यन्ते। मनुष्यसामान्यस्य कृते कतिपयेषामेव साधनानां प्रतिबन्धकं कारणद्वयं भवितुं योग्यम्। प्रथमतः धर्माचार्या मन्येरन् यत्, साधारणानामेतन्न साधनयोग्यम्। अत्र किञ्चित्तत्त्वं यद्यपि स्यात् मदवैभवमेवात्राधिक्येन दुष्यम्। द्वितीयतः निर्यातनभयं प्रति-बन्धकम्। यथा अस्मिन् देशे न कोऽपि प्रकाशं प्राणायाममभ्यसेत्, हास्यतामियादिति भिया। नात्र एवमेव प्रथा वर्तते। अपरतः भारते यदि कश्चन 'भगवन्, अद्य निर्वाहय मे भोज्यम्' इति प्राथयेत्, तदा स एव लोके हास्यतां यायात्। हिन्दुमतदृष्ट्या 'हे नाकनिकेतन! मे पितः!' इति वचनतः नान्यत् मौढ्यतरं किमपि वर्तते। उपासनकाले तस्यायं विश्वासो यत्, ईश्वरस्तस्मिन्नेव वर्तते।

योगिनां नये अस्मच्छरीरे प्रधानस्नायुशिरात्रयं वर्तते—इडापिङ्गला-सुषुम्नाभेदेन। सुषुम्ना च इतरस्नायुद्वयान्तःपातिनी। सर्वा एव मेरुनाड्यन्तर्गताः। वामत इडा दक्षिणतः पिङ्गला—एतदुभयमेव स्नायुपुञ्जस्वरूपं तथोभयान्तःपातिनी सुषुम्णा शून्यगर्भात्मका स्नायुपुञ्जोत्सन्ना च। सुषुम्ना बद्धत्वेन तिष्ठति। साधारणमानवानां कृते नास्य व्यवहारः अस्ति तैरिडापिङ्गलाद्वारैव तदीयप्रयोजनस्य सम्पादितत्वात्। भिन्नभिन्न-

शरीराङ्गसञ्चारिभिः स्नायुमार्गैरन्यैः प्रतिशरीरांशमादेशप्रेषणनिमित्तं स्नायुप्रवाहोऽनारतमेतन्नालिकाद्वये गच्छन्नागच्छन्नास्ते।

इडापिङ्गलयोः नियमनं छन्दोबद्धविधानं चेति प्राणायामस्य महदुद्देश्यम्। केवलं श्वासक्रियया कृतम्। मध्यफुसफुसाङ्गं पवनप्रवेशनमतिरिच्य किमपरं तत् वर्तते? शोणितशोधातिरिक्तेन नास्त्यस्योपयोगान्तरम्। बहिर्देशतः श्वासप्रणालीद्वारा वायुग्रहणं रुधिरपरिष्करणनिमित्तं विदध्मः। सैवेयं क्रिया स्पन्दमात्रम्। स चायं स्पन्दः प्राणाख्ये एकैकस्पन्दनमात्रे परिणमयितुं शक्यते। सर्वत्रैव सर्वा एव गतय एतत्प्राणानामेव प्रकाशमात्रम्। प्राणा ह्येवैते विद्युत्, इमे एवायस्कान्तोपमशक्तिरिमे एव मननत्वेन विकाशं लभन्ते। सर्वमेव प्राणमात्रम्। प्राणाश्चन्द्रमसं प्रभाकरं नक्षत्रगणं च चालयन्ति।

वयं ब्रूमहे यत्, अखिलमेव पार्थिवं प्राणस्पन्दैः प्रकाशितम्। स्पन्दनोत्कृष्टं फलं मननम्। यदि चेतोऽपि उत्कृष्टत्वेन फलं किमपि वर्तताम् तद्ग्रहणाक्षमास्तु वयम्। प्राणसाहाय्यं प्रतिपद्यैव इडापिङ्गले कथं कुरुतः। प्राणा हि विविधशक्तित्वेन विपरिणमनं प्राप्य शरीरस्य प्रत्यङ्गं परिचालयन्ति। विश्वसृगीश्वरोऽधिसिंहासनं न्यायविचारपर इत्येवं प्रत्ययः प्राचीनः परिहीयतां तावत्। कर्म कारं कारं क्लमं विन्दामहे वयं कर्मणि आधिक्येन प्राणशक्तेर्व्ययितत्वात्।

नियतप्राणायामद्वारा श्वासक्रिया नियमिततामेति प्राणक्रिया च छन्दोबद्धतां याति। प्राणानां नियमितक्रमेण घटमानत्वे दैहिकमखिलमेव सम्यगनुष्ठीयते। योगिनां स्वशरीराधिपत्ये अधिगते सति यत्किञ्चिद्भागस्य वैकल्ये ते निश्चिन्वन्ति यत् तत्रत्याः प्राणाः

सम्यक्त्वेन कार्यं न कुर्वते इति। किञ्च यावन्न स्वाभाविकत्वमेति तावदेव ते प्राणान् तत्र चालयितुमीहन्ते।

यथा भवान् स्वशरीरे प्राणान् नियमयितुं शक्नोति एवमेव यदि भवान् यथाशक्तिमान् भवेत् किञ्च अत्रैव निषण्णः भारतवर्षीयस्य पुरु-षान्तरस्य प्राणानपि नियमयितुं शक्नुयात्। न तत्र मध्ये कश्चन छेदो-ऽस्ति। दैहिकदृष्ट्या आनन्ददृष्ट्या मानसतः नैतिकदृष्ट्या अध्यात्म-दृष्ट्या— सर्वथा एक एव। जीवनं स्पन्दमात्रम्। यदेव आकाशसमुद्रं स्पन्दितं विदधाति तदेव च भवन्तमपि। यथा ह्रदे काठिन्यमात्रागत-भेदवदनेकतुषारस्तरा निष्पद्यन्ते यथा वा वाष्पवारिधौ वाष्पस्तरस्य गुरुत्वमेदो वर्तते एवमेव एतद्विश्वमपि तथाविधाचेतनपदार्थानां समुद्रः। एतद्विश्वमाकाशसमुद्रः, अत्र गुरुत्वभेदेन चन्द्रसूर्यतारका मामकं चास्ति-त्वं पश्यामः। किन्तु सर्वत्रैव नैरन्तर्यं न व्याहन्यते। सर्वत्रैव एक एव पदार्थो वर्तमानः।

अध्यात्मविज्ञानचर्चायामस्माभिरवगम्यते यत् जगद्वस्तुतस्तु एकमेव। न च अध्यात्माचेतनमनःप्राणजगतां भेदोऽस्ति। सर्वेषु एक एवास्ति, यद्यपि अनुभूतौ स्तरभेदो वर्तते। यदा च देहत्वेनात्मा ध्यायते तदात्मनो मनस्त्वं विस्मर्यते पुनश्च यदा स्वयं मनस्त्वेन ध्यायते तदा देहत्वं विस्मर्यते। त्वमिति पदवाच्यमेकमेव सत्त्वमस्ति तच्च जड़त्वेन शरीरत्वेन यद्वा मनस्त्वेन आत्मत्वेन वा भावयितुं शक्यते जननजीवन-मरणानि तु प्राचीनकुसंस्कारमात्रपर्यवसायीनि। न कश्चन जायते म्रियते वा, किन्तु अवस्थान्तरमेवासाद्यत इति। एतद्दुःखावहं यत् पाश्चात्त्ये मरणं

कियद्द्रावितं नाम, सदैवाल्पजीवितकालः सेवित किल। पाश्चात्त्यपुरुषाः मरणमतितरां भावयन्ति येनाहं दुःखितः। सदैव ते लेशतोऽपि आयुःप्राप्तिनिमित्तं लोलुप्यन्ते। 'अतिमृत्यु अपि अस्मभ्यं जीवनं देहि! अस्मभ्यं जीवनं देहि!' इति यदि कश्चन तेभ्यः श्रावयति यत् मृत्योरनन्तरमपि ते जीविष्यन्त्येवेति। तदा ते नितरामानन्दिता भवन्ति। अत्रास्माकं संशयः समुदेति यत् कथङ्कारं वयं कल्पयितुं योग्या यत् मृता वयमिति। आत्मानं मृतं भावयितुं चेष्ट्यते चेत् एतद्दृश्येत यत् स्वमृतदेहदर्शनार्थं त्वमेव जीवन्नसि। जीवितत्वमेतावदद्भुतं सत्यं यत् मुहूर्तमपि तद्विस्मर्तुं न शक्यते। आत्मनोऽस्तित्वे यथा न संशयस्तथैव जीवितवत्वेऽपि। अहमस्मीत्येव चेतनसत्त्वे प्रथमं प्रमाणम्। कः कल्पयितुं समर्थस्तादृशीं दशां या च क्वचिदपि नासीदिति? समेषामेव भूतार्थानामेतदेव सर्वतोऽपेक्षया स्वतःसिद्धम्। अतश्चामृतत्वं मनुष्यमज्ञागतधर्मः। अकल्प्यं हि अनालोच्यम्। स्वतःसिद्धस्य सत्यासत्यत्वविनिर्णयविधौ कथमस्माभिरालोचयिष्येत?

अतश्च यद्दृष्ट्या एव दृश्यतां जगत्तु अखण्डसत्तेति। अस्मिन् क्षणे प्राणाकाशयोः शक्तिजड़पदार्थयोरखण्डसत्ता हि विश्वमिति अस्मासु प्रतीयते। एतदवधेयं यत् मूलतत्त्वान्तरवत् एतदपि तत्त्वं स्वविरोधि। का नाम शक्तिः? अचेतनेषु गतिसञ्चारिकैव शक्तिः। कश्चाचेतन-पदार्थः? यश्च शक्तिचालितः स एवाचेतनपदार्थः। इयं च संज्ञा अन्यो-न्याश्रयदोषदुष्टा। ज्ञानविज्ञानेषु अस्माकमहंकारसत्त्वेऽपि अस्माकीनानां युक्तीनां मूलोपादानं तु आश्चर्यकारि। संस्कृते चायमाभाणको वर्तते—

असति शिरसि शिरःपीड़ेति। एतादृशी दशा मायापदवाच्या। नास्या अस्तित्वम्, नापि नास्तित्वमिति। न चेदं सत्, सत्त्वस्य देशकालातीतत्वे सति स्वतःसिद्धत्वात्। तथापि बाह्यजगता अस्माकीनप्रत्ययस्य सादृश्य-सत्त्वात् इयं व्यावहारिकी सत्तेत्युच्यते।

किन्तु यच्च सद्वस्तु पारमार्थिकसत्ताविशिष्टं तदेव देशकाल-निमित्तजालविजड़ितं संवृत्तम्। एतदेवासीममनाद्यनन्तं चिरानन्दघनं सदैव मुक्तं सद्वस्तु अस्मत्स्वरूपम् प्रकृतो मनुष्यः। अयं प्रकृतः पुरुषः देशकालनिमित्तनिगड़ैर्निगड़ितः। इयमसीमसत्तैव जगत्जगत्सत्यस्वरूपम्। न चेदं भाववादिनां विवक्षितम्। न चास्य तात्पर्यं यत्, नास्ति जगत्स-त्तेति। सर्वसांसारिकव्यवहारसिद्धयेऽस्य जगतः आपेक्षिकसत्ताऽस्ति। किन्तु नास्य निरपेक्षं सत्तान्तरम्। अतीतदेशकालनिमित्तां पारमार्थिकीं सत्तां स्वीकृत्यैव जगदस्ति।

प्रकृतपरित्यागेन बहुदूरं गता वयम्। अस्तु तावत्, प्रकृतमनु-सरामः। ज्ञानतोऽज्ञानतो वाऽस्माकं देहे घटमानानि सर्वाण्येव स्नायुसा-हाय्येन प्राणद्वारा सम्भवन्ति। अजानद्भिरस्माभिः सम्पादितानि स्वाय-त्तीकृतानि सम्भवन्ति चेत् तद्वरमिति दृश्यताम्।

क ईश्वरः कोऽयं मनुष्य इति उदितपूर्वम्। मनुष्यः असीमवृत्ततुल्यः निरवधिः स्थानविशेषनिबद्धकेन्द्रः। ईश्वरश्चापि असीमवृत्ततुल्यः निरवधिश्च किन्तु अखिलविराजितकेन्द्रः। ईश्वरः सर्वकरैः कर्म करोति, पश्यति समैरेव चक्षुर्भिः, अटति सर्वैरेव चरणैः, श्वसिति अशेषकलेवरावलम्बनो, जीवति निखिलजीवनावलम्बनः, कथयति प्रत्येकमुखाश्रयणेन, चिन्तयति समस्तमौलिमाध्यमेन। मनुष्या यदि आत्मचैतन्यकेन्द्रमानन्त्येन एधये-

युस्तदानीमीश्वरायेरन् धराधिपत्यमधिकुर्युः। अतश्च अस्मदनुध्यानमूलं हि चैतन्यम्। यथाहि गृह्यतां तमसावृतोऽनाद्यनन्तो रेखाविशेषो यश्च नास्माभिः प्रत्यक्षीकर्तुं शक्यते। किन्तु अधिरेखं ज्योतिर्विन्दुं सञ्चारयामः। अधिरेखं सञ्चरन् हि ज्योतिर्विन्दुः रेखाभागभेदान् क्रमेण प्रकाशयति, पुनश्च पश्चाद्भागवर्ती रेखांशस्तमसि लीयते। एवमेवा-स्माकीनं चैतन्यं ज्योतिर्विन्दुवत् कल्पयितुं युज्यते। वर्तमानकाली-नानुभवैर्हि भूतानुभूतयोऽपसार्यन्ते। यद्वा भूतानुभवा हि अवचेतनदशां भजन्ते। ताश्चातीतानुभूतयोऽस्मासु राजन्ते एव। किञ्च ता अस्माक-मज्ञानत एव देहमनसोः प्रभवन्तीति नास्माभिर्लक्ष्यते। विनैव चैतन्य-साहाय्यमस्मासु यत्कार्यसकलं घटमानमास्ते तत्सर्वमपि क्वचिदस्मासु सज्ञानेषु एव साधितमासीत्। अधुना स्वतश्चलने यथेच्छं प्रेरण-शक्तिस्तेषु सञ्चारिता।

सर्वस्मिन्नेव नीतिशास्त्रेऽयमेकः प्रमादो बहुलतया दृश्यते यत् कथं मनुष्या उत्पथात्पथे प्रवर्तेरन्निति शिक्षा न नीतिशास्त्रेषु सुलभा। नीति-शास्त्रसकलमेव शिक्षयति यत् मा चोरय इति। एतदुत्तममेव। किन्तु कथं मनुष्याश्चोरयन्ति? एतस्य एतदेव कारणं यत् सर्वत्रैव चौर्यदस्यु-वृत्त्यादिकर्मसकलं स्वत एव घटते। अतः प्रसिद्धाश्चौरदस्यवः मिथ्यावा-दिनोऽन्यायाचरणा मनुष्याः सर्व एव स्वस्वेच्छाविरहेऽपि तथा संवृत्ताः। एतत्सत्यसत्यमेव मनस्तत्त्वीयः संकटो गभीरः। मनुष्याणामयं विचारो यत् अस्माभिरत्यर्थमुदारसहृदयदृष्टिभिस्तदनुष्ठेयमिति। पुण्यात्मनि स्थितिर्नानायाससाध्या। कीदृशो वा भवान्? आमुक्ति यन्त्रमात्रमेव। आत्मनः पुण्यत्वात् (उत्तमत्वात्) किं गर्वितेन भवता भाव्यम्? नूनमेव

न। भवानुत्तमः कथम्? भवतां गत्यन्तरमस्ति। अपरश्चानुत्तमः कथम्? तस्यापि तथात्वं विना गत्यन्तरं नास्ति। तद्दशायां पतितश्चेद्भवान् कीदृग्भवेदिति कः जानीयात्? व्यभिचारिणी रमणी वा चारकनिरुद्धश्चौरो वा भवद्धितायैव यीशुख्रीष्टवत् वलिं गतो यथा भवतां कल्याणं स्यादिति। सामाजिकभारसाम्यरक्षाया इयमेव रीतिः। यावन्तो हारका हन्तारः, निर्विवेका यावन्तो दुर्बला यावन्त एव पामरा यावन्तश्च दानवस्वभावाः पुरुषास्ते समे एव मद्दृष्ट्या एकैको यीशुरेव। देवरूपी वा दानवरूपी वा उभयविध एव ख्रीष्टः अर्च्य इत्येतन्मे मतम्। विनैतत् मम कृते अवधारणमसम्भवि। सतां चरणेषु साधूनां पादपद्मेषु दुष्टचरणेषु दानवपादेषु अपि अस्तु मे नतिः। ते सर्व एव मे शिक्षका मे धर्मगुरवो मे त्रातारः। यतो हि एतदपि भवितुं योग्यं यत् कस्मैचित् अभिशपामि तस्य पतनादुपकृतो भवामि। पुनश्चापरस्मै आशिषा युनज्मि तस्य पुण्यकर्मणाऽपि उपकृतो भवामीति मेऽत्र स्थितिर्यत्र ध्रुवा मद्वचोऽपि तावदेव सत्यम्। पतितनारीदर्शनेनास्माभिर्नासिकासंकोचः क्रियते। समाजोऽपि तथाकामः। तथापि सैव नारी अस्माकं त्राणकर्त्री। तथापि तस्याः पातित्यवशादेव स्त्रीणामपरासां सतीत्वं रक्षितं भवति। भावयैतद्वचनम्। स्त्रीपुंनिर्विशेषेण सर्व एव मनसा विचारयन्तु मे वचनम्। सत्यमेतद्वचनं—निरावरणं निर्भीकं सत्यम्। यावदेवाहं जगन्निरीक्षे यावदेव मेऽयं विश्वासः दृढतरतामेति। को दोषार्हः? को वा प्रशस्यः? सर्वत्रैव विषयद्वयमेव विवेच्यम्।

पुरतः कृत्यवैशद्यं विराजते। अवचेतनमनोधृतानामपरिमेयभावनानां निरपेक्षज्ञानसम्पाद्यकार्याणां च वशीकरणमेवाद्यं कृत्यमस्माकम्। दुष्कर्म

तु चेतन एव चेतसि घटते। किन्तु तत्कार्यसम्पादकं कारणम् अस्मद-गोचरीभूते दूरे एव अवचेतनराज्ये विराजते। ततश्च तच्छक्तिरपि बलीयसी।

फलितमनस्तत्त्वं प्रथमत एवावचेतननियमनाय निखिलशक्तिं प्रयुङ्क्ते। अस्माभिर्ज्ञायते यत्तत्र वयं समर्था इति। कथमेवम्? यतो हि वयं जानीमहे यत् चेतनमेव मनः अवचेतनस्य कारणमिति। यानि चास्माकमतीतकालीनानि लक्षशश्चेतनचिन्तितानि मनसि मग्नानि तान्येव अवचेतनचिन्तितानि। अतीताः सज्ञानक्रिया एव निष्क्रियत्वेनावचेतनतया च तिष्ठन्ति। न चास्माभिः पुनः तासु लक्ष्यमारोप्यते। न च ताः प्रत्यभिज्ञायन्ते। ताश्चास्माभिर्विस्मृताः। किन्तु एतन्मनसि निधेयं यत् अवचेतनचेतसि यथा पापशक्तिर्निहिता, तथा पुण्यशक्तिरपि। मञ्जुषा-बद्धवदस्माकं मनःसु नैकानि एव तथ्यानि सञ्चितानि सन्ति। अस्मा-भिस्तानि विस्मृतानि न च चिन्तयामोऽपि। अपि च तेषु एवमपि अनेकाश्चिन्ताः सन्ति याश्च विनश्यन्त्यः सन्ति। विनाशं विन्दमानाश्च विपदः कारणतां यान्ति। एतदेवावचेतनकारणं बहिर्गत्य मानवसमाजध्वंसं साधयति। अतश्च यथार्थं मनस्तत्वं यथैतानि चेतनायामानीयन्ते तथा चेष्टां कुर्वीत। सर्वथा मनुष्योऽयं प्रबोधनीय इत्येव कृत्यमस्मत्पुरतः भाति येन स स्वयं सर्वशक्तिमान् कर्ता स्यात्। शरीराभ्यन्तरे यद्यन्त्रसकलकृत्यानि अस्माभिः स्वयंक्रियतया उच्यन्ते यथा यकृत्क्रिया, तानि अपि स्वेच्छाधीनानि सम्पादयितुं शक्यन्ते।

अवचेतनभागनियमनं हि चर्चाया आद्यं कर्म। द्वितीयं हि चेतनमतीत्य गमनम्। अवचेतनकार्यं यथा चेतनाया अधःस्तरीयम्। एवमेव चेतनाया ऊर्ध्वस्तरीयमपि कर्म वर्तते अतिचेतनस्तरीयं तत्। एतदतिचेतनदशां

प्राप्नुवन् पुरुषो मुक्तिं भजते। देवत्वमधिगच्छति च। उपरतिरमरत्वे परिवर्तते दौर्बल्यमनन्तशक्तित्वं पर्येति, आयसनिगडं मुक्तौ पर्यवस्यति। अतिचेतनाया एतन्निरवधिराज्यमेवास्माकं लक्ष्यीभूतम्।

अतश्चेदमिदानीं सुबोधं यत् कृत्यं द्विधा विभजनीयम्। प्रथमतः इड़ापिङ्गलाख्यौ यौ शरीरस्नायविकप्रवाहौ स्तः तौ यथायथं नियम्य अवचेतनस्थक्रियाः स्वाधीनतामानेतव्याः। द्वितीयतः ऊर्ध्वचेतनैर्भाव्यम्। शास्त्रानुसारमात्मसमाधिनिमित्तं दीर्घप्रचेष्टाद्वारा येनैतत् सत्यमधिगतं स एव योगी। एतद्दशायां सुषुम्नाद्वारं विबन्धनं भवति। सुषुम्णायां तदा प्रवाहः कश्चन प्रविशति। इतः पूर्वमेतस्मिन् मार्गे नूत्ने नान्यः प्रवाहः प्रविष्टः। स चायं प्रवाहः क्रमश उद्गच्छन्नास्ते। अतीतविविधपद्मः अवसानतो मस्तिष्कमुपैति। तदानीं च योगी आत्मनः प्रकृतस्वरूपमुपलभते।

निर्विशेषेण वयमपि योगस्य चरमां दशां लब्धुं समर्थाः किन्तु एतत्कार्यं दुरूहम्। यदि चैतद्भवति सत्यमिष्यते तदा न केवलं प्रवचनश्रवणं तथा नापि कतिपयप्राणायामाभ्यासाश्च साध्यानि। प्रत्येकमेव प्रस्तुतिसापेक्षम्। प्रभाच्छटाप्रकाशने कियानेव वा कालोऽपक्ष्यते? निमेषमात्रम्। प्रदीपनिर्माणे तु बहुसमयोऽपेक्षितः। भोजनाङ्गीकरणे कति समयाः अपेक्ष्यन्ते? मन्ये अर्धघण्टेति। भोज्यनिर्माणे तु कतिपया घण्टा अतिवाहिता भवन्ति। निमेषमध्येनैव दीपम् उद्दीपयितुं कामयामहे वयम्। किन्तु वयं विस्मरामो यत् दीपनिर्मितिरस्माकं मुख्यं कृत्यमिति। लक्ष्यप्राप्तेः क्लेशसाध्यत्वेऽपि लघुरपि यत्नो न मोघतामेति। अस्माकं

ज्ञातं यत्, किमपि न विलोपं यातीति। तथाहि श्रीमद्भगवद्गीतायां श्रीकृष्णोऽर्जुनेन जिज्ञासितः एतस्मिन् जन्मनि ये च योगोपासनायां न सिद्धिमुपयन्ति किं ते निदाघगतच्छिन्नजलधरकल्पा विनष्टिं यान्ति? तथाच श्रीकृष्णेन प्रत्युत्तरितम्—'सखे! नात्र किमपि लीनं भवति। येन यत्क्रियते तस्य तदेव तिष्ठति। अस्मिन् जन्मनि अलब्धेऽपि योगफले परवर्तिनि जन्मनि पुनः स तत् प्राप्नोति। एतदनस्वीकारे तु कथमन्यथा यीशुशौद्धोदनिशङ्करादीनां चकितकारिणी बाल्यदशा व्याख्यायेत। प्राणायामासनादिकं योगसहायकमित्यत्र नास्ति संशयलेशावसरः, किन्तु एतत्सर्वं दैहिकम्। महती प्रस्तुतिस्तु मानसविषयिणी। तदर्थञ्च प्रथमत एव शान्तेन समाहितेन जीवितेन प्रयोजनम्।

योगत्वकामैः स्वाधीनैर्भाव्यम्। तादृशं परिमण्डलं स्वस्थानं स्यात् यत्र योगी एकाकित्वेन सर्वथा उद्वेगमुक्ततया तिष्ठेत्। विलासबहुल-सुखजीवनमपि युगपदात्मज्ञानमपीप्सितं यस्य तस्य तन्मूढवदेव दशा यः काष्ठखण्डभ्रमेण मकरावलम्बनो नदीं तितीर्षुः। आदौ ईश्वरराज्यमनु-सन्धेयं तत एव निखिलं नेदीयं भवतां स्यात्। एतदेवोत्कृष्टं कृत्यम्, एतदेव वैराग्यम्, एकस्यादर्शस्य कृते जीवितमुत्सर्गीकुरु यथा तद्-व्यतिरिक्ततया न कस्यापि मनसि संस्थानं विन्द्येत। अस्माभि-रविनश्वराध्यात्मिकपरिपूर्तये सर्वप्रकारैव शक्तिर्नियोज्या। अनुभूतिं प्रपित्सा हार्दिकी वर्तते चेत् अस्माभिर्यत्नवद्भिर्भाव्यम्। तद्यत्नद्वारा अभ्युदय आयास्यति। अस्माकं प्रमादा अनेके भवितुमर्हन्ति तत्र किन्तु प्रमाद-च्छद्मना अस्माकं कल्याणानुकूलास्ते देवदूताः।

ध्यानमेवाध्यात्मजीवनस्य सर्वाधिकं सहयोगि। ध्यानं कुर्वतामस्माकं भवबन्धनानि च्छिन्नानि भवन्ति। भागवतं स्वरूपमुपलभामहे। न च बाह्यमालम्बनमपेक्षामहे वयं ध्यानकाले। आत्मस्पर्शेन मलिनतमोऽपि प्रदेश उज्ज्वलच्छटाभिरुद्भासितो भवितुमर्हति। जघन्यतममपि वस्तु सुरभिमयं भवितुमर्हति। तदा दुष्टा पूतीभवन्ति। रिपुता स्वार्थपरता च निश्चिह्नतां भजेते। यावदेव देहाभिमानः क्षीयते तावदेव उत्तमम्। यतो हि देह एवास्मान्नधो गमयति। देहासक्तिवशाद्देहाभिमानतश्च जीवित-मस्मदीयं दुर्विषहं भवति। एतदेव रहस्यं यत् नाहं देहः, आत्मैव। एतच्च चिन्त्यं समग्रमेतद्विश्वं तत्संश्लिष्टमुत्कृष्टापकृष्टनिर्विशेषतः अशेषमेव वस्तु मिथः सञ्जीकृतकतिपयचित्रवत् पटचित्रितदृश्यकल्प्यं भवति अहं च तत्साक्षी इति।

# वेदान्तदर्शनम्

सम्प्रति सामान्यतो यच्च वेदान्तदर्शनमित्युच्यते वस्तुतस्तु वर्तमानकालीना भारतीया विविधधर्मसम्प्रदायाः सर्व एव तदन्तर्गताः। ततश्चानेकधा एतद्व्याख्यातम्। अपि च मम मते क्रमोन्नतिधारायां ते द्वैतवादारम्भा अद्वैतवादसमाप्तिकाः। शब्दतो वेदान्तपदं वेदावसानभाग-वाचकम्—वेदश्च हिन्दूनां शास्त्रम्।[1] क्वचित् प्रतीच्ये मन्त्रानुष्ठान-मात्रमेव बोध्यते वेदशब्देन। किन्तु आधुनिके काले हि वेदस्य अयं प्रायोगिकांशो नास्त्येवेति वक्तुं युज्यते। भारते इदानीं वेदपदेन प्रायशो वेदान्त एव बोध्यते। प्रायः सर्व एव भाष्यकृतः शास्त्रोक्तेरुद्धरणवेलायां सामान्यतः वेदान्ततः एव संकलयन्ति। भाष्यकृतां पुरतः वेदान्तस्य पारिभाषिकं नामान्तरं वर्तते श्रुतिरिति।[2] वेदान्तनामधेयाः सर्व एव परिचितग्रन्था वेदीयकर्मकाण्डादनन्तरं न रचिताः। यथा ईशोपनिषन्नामा वेदान्तग्रन्थो वेदीयप्राचीनतमभागान्तर्गतायाः यजुःसंहितायाः चत्वारिंशेऽध्याये वर्तते। वेदस्य ब्राह्मणांशेऽपि अनेका एव उपनिषदः सन्ति।[3] तद्व्यतिरिक्ता उपनिषदः स्वतन्त्राः राजन्ते, न च ताः ब्राह्मणतदितरभागान्तर्भूताः। तासु वेदतः पूर्णतः स्वतन्त्रा इति चिन्तयितुं नालम्। यतो विदितमेतद् यत् विविधानां शास्त्राणामवलुप्तेः ब्राह्मणभागा अपि ताभिः साकं लोपं गताः। एतद्युक्ततरमेव यत् एताश्च स्वतन्त्रोपनिषदः कस्मिन्नपि ब्राह्मणे अन्तर्गता आसन्नेव। कालतः ब्राह्मणभागा लोपं गता उपनिषदस्तु वर्तमाना एव सन्ति। एताश्चोपनिषद आरण्यकपदेनापि व्यपदिशयन्ते।

अतएव वेदान्तदर्शनमेव वस्तुतः हिन्दूनां शास्त्रम्। भारतीयदर्शने यावन्त्येवास्तिकदर्शनप्रस्थानानि सन्ति तावन्त्येव स्वप्रतिष्ठाभूमित्वेन वेदान्तमुररीकुर्वन्ति। किञ्च उद्देश्यसिद्ध्यनुकूलतया सौगतार्हता अपि प्रमाणत्वेन वेदान्तवाक्यमेवोदाहरन्ति। सर्वाण्येव भारतीयदर्शनप्रस्थानानि वेदप्रमाणानि इति घोषयदपि प्रत्येकमेव मतं भिन्नभिन्ननाम गृह्णाति। अन्तिमं व्यासमतम्। एतद्वैयासिकं मतं प्राक्तनेभ्यो दर्शनप्रस्थानान्तरेभ्योऽपेक्षया अधिकतया वेदनिष्ठम्। अपि चैतत्कापिलाक्षचरणादिप्राक्तनदर्शनैः साकं वेदान्तमतकदम्बकस्य सामञ्जस्यविधानप्रयतनं कृतवत्। तस्मादेव कारणादेतत् विशेषतः वेदान्तदर्शनमित्युच्यते। वर्तमानभारते च वैयासिकं सूत्रमेव वेदान्तदर्शनमूलम्। भाष्यकाराश्च विविधा भिन्न-त्वेन व्याससूत्राणां व्याख्यानं विहितवन्तः। भारते प्रधानतः भाष्यकारत्रितयमस्ति।[४] तेषां व्याख्यानुसारं दार्शनिकमतत्रिकं सम्प्रदायत्रयं च समुद्भूतम्। द्वैतमाद्यं, विशिष्टाद्वैतं द्वितीयम्, अद्वैतं तृतीयम्। एतेषु द्वैतिनां विशिष्टाद्वैतिनामेव संख्या भारते आधिक्येनास्ति। ततोऽपेक्षया अद्वैतिनः अत्यल्पीयांसः। मतत्रयमेव भवतां पुरत उपस्थापयितुं यतिष्ये। प्रारम्भे तु एतत् वक्तव्यं यत् सांख्यदर्शनस्य मनोविज्ञानमेव एतन्मतत्रितयस्य साधारणम्। सांख्यमनोविज्ञानेन सह न्यायवैशेषिकमनोविज्ञानस्य यथेष्टं सामञ्जस्यम् समस्ति। कतिपयेष्वेव अप्रधानेषु विषयेषु विरोधः।

विषयत्रिकेषु समेषामेव वेदान्तिनामैकमत्यमस्ति। सर्वेषामेवेश्वरतत्प्रकाशितवेदसर्गकल्पेषु विश्वासोऽस्ति। आम्नायस्तु समीक्षितपूर्व एव। सृष्टिकल्पीयस्तु विश्वास एवं यत् प्रसङ्गेऽस्मिन् यत्रैव यदचेतनपदार्थो

वर्तते तदखिलमेव मूलीभूताकाशपदार्थतः सृष्टम्। माध्याकर्षणं वा आकर्षणं वा विकर्षणं वा जीवनशक्तिर्वा समैव शक्तिः प्राणाख्यमूल-शक्तितः प्रादुर्भूता। आकाशे प्राणक्रियाजन्यमेव एतस्य विश्वस्य सर्जनम्, वहिःक्षेपणं वा।[५] कल्पारम्भे आकाशं गतिहीनमनभिव्यक्तं वा तिष्ठति। ततश्च तस्मिन् प्राणक्रियारम्भो घटते। प्राणाः क्रियावन्तो भवन्ति तत एव आकाशाद् ग्रहजीवमानवनक्षत्रादिस्थूलानां स्थूलतराणां च पदार्थानामाविर्भावो भवति। अपरिमेयकाले व्यतीते तु एतदभिव्यक्तिः स्थगनमेति। विलयं च प्रारभते। प्रत्येकमेव पदार्थः सूक्ष्मतः सूक्ष्मतरपदार्थे विलयं प्रापन् मूलीभूते आकाशे प्राणपदार्थे च परिणमते। तदानीं च नूतनं कल्पान्तरं प्रारभते। प्राणाकाशयोरपि परस्तादस्ति किञ्चन। तदुभयमेव विराट्पुरुषे महन्नाम्नि तृतीयसत्त्वे वा विलयं प्रापयितुं योग्यम्। विराड्मनः नापि आकाशं नापि प्राणान् सृजति किन्तु स्वयमेव प्राणाकाशयोर्विवर्तते।

इदानीं मनआत्मेश्वरविषयिणीमास्थां विचारयामः। सर्वजनग्राह्यसांख्यमनस्तत्त्वानुसारमनुभूतिविषये यथा दर्शनवेलायां प्रथमं दर्शनसाधनं चक्षुः। अनुचक्षुर्यन्त्रं वर्तते दर्शनेन्द्रियं चक्षुःस्नायुः स्नायुमूलं च। न चैतानि बाह्ययन्त्राणि किन्तु विनैतानि चक्षुर्द्रष्टुं न क्षमं स्यात्। अनुभूतिनिमित्तं त्वन्यैरपि साधनैः प्रयोजनम्। मनसा इन्द्रियस्य संयोगेन भाव्यम्। एतद्विहायापि अनुभूतिर्बुद्धिं प्रति यद्वा मनसः प्रतिक्रियाशीलां निश्चयात्मिकां वृत्तिं प्रति प्रेषयितव्या। बुद्धेः सकाशात् प्रतिक्रियाप्राप्तिमात्रमेव बहिर्जगत् प्रतिभातं भवति। ततश्चायातीच्छा किन्तु तथापि सर्वं पूर्णतां न याति। धारावाहितेजः स्पन्दनपरिस्फुटं विच्छिन्न-

चित्रं कतिपयमाश्रित्य पूर्णचित्रप्रस्फुरणे कर्तव्ये तेषां प्रत्येकमेव निश्चले वस्तुनि स्थापनीयम्, तद्वदेव चेतोभावमपि एकीकृत्य देहमान-सापेक्षतया स्थिरतरे कस्मिन्नपि पदार्थे मनोभावः प्रक्षेपणीयः। स चायं निर्विकारः पदार्थो जीवात्मा पुरुष आत्मा वेत्युच्यते।

सांख्यदर्शननये प्रतिक्रियास्वभावो मानसदशाविशेषो बुद्धिनामधेयो महतो विराजो मनसो वा परिणामविशेषो रूपान्तरविशेषोऽभिव्यक्ति-विशेषो वा। महदेव स्पन्दनस्वभावायां चिन्तायां परिणमते। सा च अंशविशेषे परिवृत्तिं विन्दमाना इन्द्रियत्वं प्रतिपद्यते। अपरतः सूक्ष्म-भूतत्वं तन्मात्रत्वं वा लभते। एतत्सकलं समवायेन प्रपञ्चो निखिलो निष्पद्यते। कापिलानां मते महत उपरि लसति दशाविशेषोऽव्यक्ताख्यः। न तत्र मनसः प्रकाशः, केवलं कारणानि विद्यन्ते। एषा प्रकृतिपर्याया। प्रकृतेरपि पश्चात्ततः सदा स्वतन्त्रः पुरुषो वर्तते स एव सांख्यिनां निर्गुण आत्मा। पुरुषो न कर्ता साक्षिमात्रम्। पुरुषस्वरूपावबोधने स्फटिकमुदाहरणत्वेनाश्रियते। पुरुषो हि निर्वर्णाच्छस्फटिक इव; अभिस्फटिकं स्थापिते वर्णवदर्थे स्फटिकं तत्तच्छविच्छुरितं प्रतीयते यद्यपि वस्तुतस्तु न हि स्फटिकं तेन रज्यत इति। वेदान्तिनस्तु सांख्यसम्मतं प्रकृतिपुरुषतत्त्वं मर्दितवन्तः। तेऽभिप्रयन्ति यत् तादृश-तत्त्वयोर्विद्यते एवं महदन्तरं यत् तत्र संयोगकसेतुना प्रयोजनम्। एकत्र सांख्यसिद्धान्तः प्रकृतिमुपैति पुनश्च प्रकृतिः पूर्णतः स्वतन्त्रं पुरुषमुपैतुं सांख्यिभिः सपद्येव लम्फैकयोगेन प्रदेशान्तरमुपगन्तव्यम्। सांख्यदृष्टान्ते प्रागुक्ता वर्णभेदाः स्वरूपतोऽरूपे आत्मनि कथङ्कारं क्रियावन्तो भवितुं

सामर्थ्यं भजन्ते? अतश्च वेदान्तिभिरादित एव सनिश्चयमुच्यते— अयमात्मा इयं च प्रकृतिः—अभिन्नैवेति[६], किञ्च द्वैतिभिरपि वेदान्तिभिरभ्युपेयते यत् आत्मा ईश्वरो वा न केवलं निमित्तकारणमपि तु जगतोऽप्युपादानमिति। किन्तु एतत्तेषां निगदनमात्रं न तु हार्दिकं तद्वचः। यतो हि ते स्वराद्धान्तमेवमेव उल्लङ्घयितुमिच्छन्ति। ते कथयन्ति ईश्वरजीवप्रकृतिभेदेनेह सत्तात्रयं समस्ति। प्रकृतिर्जीवश्च ईश्वरकलेवरः। एतदभिप्रेत्यैव वक्तुं युज्यते यत् ईश्वरः प्रकृतिश्चाभिन्न एवेति। किन्तु चिरादेव प्रकृतिर्जीवाश्च मिथः स्वातन्त्र्येणैव तिष्ठन्ति। केवलं कल्पादौ तेषामभिव्यक्तिर्घटते कल्पावसाने च सूक्ष्मत्वं सम्पद्यमाना बीजत्वेन तिष्ठन्ति। अद्वैतवेदान्तिनो जीवतत्त्वं तथात्मतत्त्वं नाङ्गीकुर्वन्ति। उपनिषदां प्रायः सकलमेव स्वानुकूलत्वेन आपद्यमानास्तन्मात्रमेव पूर्णतोऽपेक्ष्य ते स्वसम्प्रदायं समजनयन्। समासामेवोपनिषदां एतत्प्रमापणतत्परत्वं यत् एकेन मृत्पिण्डज्ञानेन यथा सर्वं मृन्मयं विज्ञातं स्यात् तथैव कोऽस्ति तादृशः पदार्थो यस्मिन् विदिते सर्वं विदितं भवेत्?[७] अद्वैतवेदान्तिनामयमाशयो यत् समेषामेव जगतामेवमेकस्मिन् सामान्यतत्त्वे प्रापणं यच्च तत्त्वं प्रकृतविश्वस्य अखण्डसत्ता। तेषामेतदावेदनं यत् निखिलेऽपि प्रपञ्चे एकत्वं राजते। एकैव सत्ता आत्मानमेतद्भिन्नाभिन्नतया प्रकटीकृतवती। सांख्यिनां संघे या च प्रकृतिरद्वैतवेदान्तिनां नये यद्यपि तस्या युक्तमेवास्तित्वं तथापि सा प्रकृतिरीश्वरतोऽभिन्नेति निवेदयन्तीति। इयमेव सत्ता सदेव वा विश्वत्वेन मनुष्यत्वेन जीवत्वेन वृत्तिशीलाखिलपदार्थत्वेन विवर्तते। मनो महच्च

तदेकस्य सत एवाभिव्यक्तिमात्रम्। किन्तु अत्रायं संकटो यत् एतन्मतं सर्वेश्वरवादतामेति। ननु यश्च पदार्थोऽपिरवर्तनीयः सन्निति उररीक्रियते स कथङ्कारमेतेषु परिवृत्तिस्वभावेषु नश्वरेषु पदार्थेषु परिणामं लभते? यश्च चरमः सत्यस्वरूपो न तस्य परिवृत्तिरस्तीति चेत्। अत्रोच्यते विषयेऽस्मिन्नद्वैतवेदान्तिनां विवर्तवादाभिधेयमभिव्य-क्तिवादाख्यं वा मतान्तरमस्ति। द्वैतवादिनां सांख्यिनां च ये इहाखि-लमेव जागतिकं वस्तु मूलप्रकृतेः क्रमिकविकाशः। केषाञ्चनाद्वैतवेदा-न्तिनां द्वैतवादिनां च नयेऽखिलमेव जगदीश्वराभिव्यक्तम्। शाङ्करा-णामद्वैतवेदान्तिनां मतेऽखिलोऽयं प्रपञ्चो ब्रह्मणः प्रकाश इति प्रतीयते केवलम्। ब्रह्म जगदुपादानं किन्तु तद्वस्तुतः न सत्यम्, तत्प्रतिभासमात्रम्। विषयेऽस्मिन् रज्जौ सर्पभ्रम इति प्रसिद्धो दृष्टान्तः। रज्जुरुरगत्वेन प्रतिभाति केवलं वस्तुतस्तु नायमुरगः। रज्जुः क्वचिदपि उरगत्वं न प्रतिपद्यते। तद्वदेव तदेव सत्स्वरूपं दृश्यमानप्रपञ्चत्वेन प्रतिभाति किन्तु न च तत्र कियती अपि परिवृत्तिर्घटते यच्च परिवर्तनं दृश्यते अस्माभिस्तत् प्रतिभासमात्रम्। देकालनिमित्तानि चैतत्परिवृत्तिघटकानि। यद्वा मनो-विज्ञानस्योन्नतसामान्यीकरणानुसारम् एतद्वक्तुं शक्यते यत् नामरूपाभ्या-मेवैतद्घटते। नामरूपे एव पदार्थं पदार्थान्तरतो व्यावर्तयतः नामरूपे एव वैलक्षण्यं जनयतः। प्रकृत्या तु सर्वमेवैकमभिन्नं चेति।

वेदान्तिन एतदपि ब्रूवते यत् इन्द्रियमात्राग्राह्यं बुद्धिमात्रगम्यञ्चेति। किञ्च न चेदं वेदान्तिनो वदन्ति यत् तत्र किञ्चन वस्तुत्वेन किञ्चन च बौद्धत्वेन वर्तते। रज्जोरुरगे परिवृत्तिति प्रतीतिमात्रम्। न चैतद्भूतार्थं

परिवर्तनम्। अपगते तु भ्रमे सर्पः शून्ये लीयते। एवमेव मनुष्योऽज्ञानावरणो वर्तते यावत् तावदेव स जगत् पश्यति न त्वीश्वरम्। यदा च ईश्वरमनुभवति तदा जगत् पूर्णतो लुप्यते। यच्च अविद्या माया वा उच्यते। तदेवेन्द्रियवेद्यस्य जगतः कारणम्, तस्यैवायं प्रभावो यत्, सत्यम-परिवर्तनीयमपि तत्त्वं परिदृश्यमानं जगदिति निश्चिनुमः। न चेयं माया शून्यमात्रमभावमात्रं वा। माया न सती नापि असतीत्येव मायाया विवरणम्। माया न च सती यतो हि सदिति व्यवहारः केवलं चरमसत्यविषये प्रयोक्तुं शक्यते। यदि असत्येव स्यात् तदा कदापि जागतिकीं प्रतीतिं नाजनयिष्यत्। अतो माया सदसदनुभयरूपा इति चोच्यते। वेदान्तिनां नये माया अनिर्वचनीया अप्रकाश्या वेत्युच्यते। अतो मायैव वस्तुतो जगत्कारणम्। ब्रह्मण ईश्वरतो वा यदुपादानमुपादीयते मायया तत्र नामरूपे आरोप्येते। ब्रह्म च एतेषु सर्वेष्वेव परिणतिमिति प्रतीयते। माययेव जीवात्मधी-रुपपद्यते। न हि जीवात्मनस्तदिरिक्तसत्ताकत्वमस्ति। यदि सर्वव्यापिनी एकैव सत्ता तिष्ठति तदा अहमिति त्वमिति तदिति भिन्नभिन्नसत्ता कथङ्कारं सम्भवति वयं सर्व एवाभिन्नाः, द्वैतधीरेव अनर्थमूलम्। विश्वतोऽहं पृथगेवेति बोधो यदैव जायते तदैव भयादिदुःखं जायते। यत्र एकोऽपरं शृणोति, एक्तोऽपरं पश्यति तदेवाल्पम्। यत्र तु एकोऽपरं न पश्यति नापि शृणोति स एव भूमा, तदेव ब्रह्म। तत्रैव भूम्नि परमं सुखं नाल्पे सुखमस्ति।[८]

अतएव अद्वैतवेदान्तदर्शनानुसारमचेतनपदार्थानामेतद्भिन्नस्थितिभिस्तद्-दृश्यराशिभिश्च सामयिकतया जीवात्मनां यथार्थस्वरूपमावृतम्। किन्तु

स्वरूपतस्तत्त्वं न परिवर्तितम्। लघिष्ठेषु कीटेषु गरिष्ठेषु च मनुष्येषु एकैव ईश्वरीयसत्ता विराजते। कीटकलेवरो हि अवरं रूपं यत्र मायया देवत्वम् आधिक्येन एवावृतं वर्तते। यत्र तु देवत्वावरणं लघीयस्तदेव उत्कृष्टं रूपं प्रकृष्टदेहो वा। सर्वत्रैव तदेकमेव देवत्वं राजते। एतदेव सत्यं समाश्रित्य नीतिभूमिः प्रतिष्ठिता। नापरस्यानिष्टिमुत्पादयन्तु, प्रत्येकमेव आत्मवत् प्रीणयन्तु। यतो हि अखिलमेव विश्वमभिन्नम्। परेषामनिष्टजनने सति आत्मन एवानिष्टं जायते। परस्मै प्रीतिविधाने तु आत्मन एव प्रीतिविधानं भवति। एतस्मादेव भूतार्थादद्वैतनीतेर्मूलतत्त्व-मुद्भूतम्। तदेव समासेन आत्मत्याग इत्युच्यते।

अद्वैतवेदान्तिनो ब्रूवते संकीर्णा स्वार्थत्वबुद्धिरेव मदीयनिखिलदुःख-मूलम्। इयमेव अहंकृतिधीर्मामपरस्मात् पृथक्करोति, अनयैव घृणा-द्वेष-दुःख-संग्रामाद्यनर्था उत्पद्यन्ते। एतद्बोधतो निष्कृतौ निष्पद्यमानायां सत्यां समेषामेव द्वन्द्वानामवसानं स्यात्। सर्वाण्येव दुःखानि दवयन्ति। अतश्च अहन्त्वधीर्विलक्षणेयं हेया। किञ्च अवरजीवितस्यापि कृते प्राणपरिहारोद्यमैरपि अस्माभिर्भाव्यम्। यदा च कश्चनावरकीटस्यापि कृते प्राणपर्यन्तस्यापि परिहारे उद्यतते तदैतद्बोध्यं यत् सः अद्वैतवादिनां काम्यं पूर्णत्वं प्रतिपद्यते। यस्मिन्नेव क्षणे स एव उद्यतो भवति तस्मिन्नेव क्षणे तस्य पुरतोऽविद्यावरणमपसृतं भवति, तदानीं स आत्मतत्त्वमुपलभते। एतस्मिन्नेव जीवने तेनानुभूयते यः समैरेव पदार्थैः सः अभिन्नतां यातीति क्षणमेतद्दृश्यमानं जगल्लुप्यत इति प्रतीयेत, अपि च आत्मस्वरूपं स साक्षात्कुर्यात्। किन्तु यावदेव प्रारब्धं कर्म दैहिकं

तावदेव कलेवरवता तेन भाव्यम्। सा चेयं दशा यत्र अविद्यावरणापसारणे सत्यपि कलेवरं कियता कालेन तिष्ठति वेदान्तिनस्तां जीवन्मुक्तिरिति वदन्ति। सर्व एव दृष्टमरीचिका विभ्रमं यान्ति किन्तु एकदा सा च मरीचिका अदृश्यतां यायादेव। परेद्युः कियद्दिवसेभ्यः परं वा पुनः मरीचिकाविर्भावेऽपि पुरतस्तस्य न पुनर्भ्रमो भवति। प्रथमतः मरीचिकाभ्रमापगतेः पूर्वं यश्च प्रमाप्रमयोः पार्थक्यमापादयितुं न सामर्थ्यं धत्ते स्म सकृत्तु अपगतायां मरीचिकायां सकृद्भ्रमभङ्गे चक्षुस्तदितरेन्द्रियाणि यावदेव कार्यक्षमाणि भवन्ति तावदेव स पुनर्मरीचिकां जानातीति सत्यं किन्तु तां प्रमात्वेन पुनर्नावधारयति। वस्तुतत्त्वमरीचिकयोर्यत् सूक्ष्मं वैलक्षण्यं वर्तते तत्तेन गृहीतमिति मरीचिका पुनर्न तस्य भ्रमजननक्षमा भवति। एवमेव वेदान्तिभिः स्वस्वरूपे प्रत्यक्षीकृते तस्य पुरतः निखिलमेव जगल्लीयते। पुनश्च जगत् प्रत्यायास्यतीति ध्रुवम्। किन्तु पूर्ववद्दुःखमयत्वेन नायाति। दुःखचारके तदा सच्चिदानन्दमयत्वेन पर्यवस्यति सः। इयमेव दशा अद्वैतवेदान्तदर्शनस्य लक्ष्यरूपेति।

## पादटीका

१. वेदाः द्विधा प्रधानतो विभज्यन्ते—कर्मकाण्डब्रह्मकाण्डभेदेन। कर्मकाण्डे प्रसिद्धा मन्त्रब्राह्मणा अन्तर्यन्ति। रीति (अनुष्ठान)-व्यतिरेकेणात्मतत्त्वं यत्र ग्रन्थे आलोचितं स चोपनिषदित्युच्यस्ते। उपनिषदो ज्ञानकाण्डमन्तर्गच्छन्ति। न च सर्वा उपनिषदः वेदतो भिन्नत्वेन रचिताः। काश्चनोपनिषदो ब्राह्मणान्तर्गताः। न्यूनत एका

संहितान्तर्गता। क्वचिदुपनिषत्पदं तादृशं ग्रन्थं बोधयति यश्च न वेदान्तर्गतो यथा गीता। किन्तु उपनिषच्छब्दो दार्शनिकप्रबन्धेषु वर्तते यश्च वेदे इतस्ततो विक्षिप्ततया लभ्यते। एते च निबन्धाः (treatises) संकलिताश्च वेदान्तपदवाच्याः।

२. श्रुतिपदं तस्य बोधकं यच्च श्रूयते। यद्यपि समस्तवैदिकसाहित्यं बोधयदपि प्रधानतः श्रुतिपदमुपनिषत्सु प्रयुज्यते व्याख्याकृद्भिः।

३. एवमुच्यते यत् अष्टाधिकशतमुपनिषदः सन्तीति। एतासां कृतिकालो निश्चयेन वक्तुं न शक्यते। किन्तु एतन्निश्चितं यत् उपनिषदस्तु प्राग्बौद्धसमयाद्रचिताः। यद्यपि कासुचिदप्रधानोपनिषत्सु परवर्तिकालीनानां वृत्तान्तानां विषयाणां चोल्लेखो वर्तते तथापि तु नैतेन प्रमीयते यत् ताश्चोपनिषदः सर्वत उत्तरकालकृतयः। संस्कृतसाहित्ये अनेकत्र दृश्यते यत् ग्रन्थमूलमत्यर्थं प्राचीनमपि तत्रोत्तरकालीनानां भूयसामेवोदन्तानां सन्निवेशः सम्पाद्यत इति। वस्तुतस्तु साम्प्रदायिकाः पुरुषाः स्वस्वसम्प्रदायख्यातिमेधयितुमेवमाचरन्ति।

४. सन्ति च बहुविधानि एव व्याख्यानानि। भाष्यटीकाटिप्पणीचूर्णेत्यादीनि यथा। एतेषु भाष्यव्यतिरिक्तानि सर्वाण्येव ग्रन्थधृतमूलपाठस्य तदन्तःपातिनो वा दुरूहशब्दस्य सरलार्थप्रकाशपराणि। भाष्यं तु याथातथ्येन व्याख्येति वक्तुं न युज्यते। मूलानुसारं दार्शनिकमतवैशद्यापादनमेव भाष्यलक्ष्यम्, न तु शब्दार्थव्यक्तीकृतिमात्रम्। दर्शनप्रस्थानस्थापनमेव एतदुद्देश्यभूतम्। भाष्यकृद्भिर्हि मूलग्रन्थविषयः स्वमतपुष्टये प्रमाणत्वेनाङ्गीकृत्य विशदीक्रियते।

अधिवेदान्तं भूयांसि एव भाष्याणि भाषितानि। वैयासिकदर्शनसूत्रेष्वेव वेदान्तान्ताश्चरमपरमत्वेन प्रकाशं प्राप्ताः। वैयासिकोऽयमुत्तरमीमांसानामाधेयो ग्रन्थ एव वेदान्तराद्धान्तानां प्रामाणिकग्रन्थः। वेदान्त एव कथमुच्यते हिन्दुशास्त्रप्रतिपिपादयिषितप्रतिपत्तौ प्रमाणग्रन्थः। विरोधिमतावलम्बिभिरपि सम्प्रदायैर्व्याससूत्रस्वीकारे तैश्च

स्वस्वरससामञ्जस्यविधाने प्रयतितम्। अत्यन्तं प्राचीनेऽपि काले वेदान्तदर्शनभाष्यकारा हिन्दूनां प्रसिद्धसम्प्रदायभेदत्रिकमन्तर्यान्ति द्वैतवादिनो विशिष्टाद्वैतवादिनोऽद्वैतवादिनश्चेति। प्राचीनानि भाष्याणि मन्ये नाशं गतानि किन्तु अर्वाचीने काले सुगतोत्तरकालिभिः शङ्कररामानुजमध्वप्रभृतिभाष्यकृद्भिः पुनः प्रवर्तितानि। शङ्करेणाद्वैतवादः, प्राचीनबोधायनप्रवर्तितो विशिष्टाद्वैतवादश्च रामानुजाचार्यैः, मध्वाचार्यैश्च द्वैतवादः पुनः प्रत्यष्ठापि। भारतवर्षे सम्प्रदायानां प्रभेदस्तु प्राधान्येन दार्शनिकविषयाश्रयः। अनुष्ठानतो भेदस्तु सामान्य एव। यतो हि धर्मदर्शनयोः मूलं समेषामभिन्नमेव।

५. भवतामाङ्गलशब्दस्य क्रियेशनित्येतस्य संस्कृतभाषायां बहिःप्रक्षेप-शब्दानुरूप्यमस्ति। यतो हि न तादृशो धर्मसम्प्रदायो भारतवर्षे शून्यतः असत्पदार्थतो जगज्जायत इति पाश्चात्त्यीयास्थायामास्थां न स्थापयति। पूर्वत एव राजमानस्य सतः पदार्थस्य प्रक्षेप एव सृष्टिरित्युच्यते।

६. वेदान्तसांख्यदर्शनयोः प्रभेदस्तु अत्यल्पः। सांख्यिनां पुरुष एव वेदान्तीय ईश्वरः। सर्व एव मतवादाः सांख्यमनस्तत्त्वं स्वीकुर्वन्ति। सांख्यवेदान्तोभयमेवासीमात्मनि आतिष्ठते। प्रभेदस्तु केवलमेतदेव यत् सांख्यनये पुरुषबहुत्वमस्तीति। सांख्यमते जगद्व्याख्यायां बाह्यार्थेन केनापि न प्रयोजनम्। वेदान्तिनः मन्येरन् अद्वितीय आत्मैव वर्तते स च बहुत्वेन प्रतीयते। अधिसांख्यविश्लेषणमस्माकं वेदान्तमतं प्रतिष्ठितम्।

७. छान्दोग्योपनिषदि (६/१-४) तथा मुण्डकोपनिषदि (१/१/३)।

८. छान्दोग्योपनिषदि (७/२३)।

# प्रश्नोत्तराणि हार्वार्डविश्वविद्यालये आलोचितानि

**प्रश्नः** — भारतवर्षे दार्शनिकी चिन्ता वर्तमाने कीदृशी क्रियाशीलेति जिज्ञासे, एते विषयाः कियत्पर्यन्तं पर्यालोचिता भवन्ति?

**उत्तरम्** — एतदुदितपूर्वमेव यत् भारतवासिनो भूयांस एवाद्वैत-वादिनः स्वल्पीयांसश्चाद्वैतवादिनः। किन्तु मायावादो जीवतत्त्वं च प्राधान्येन विविच्यतामेति। प्रत्यावृत्तेनैतद्देशं मया निरीक्षितं कायक्लम-जीविनस्तदानीन्तनराजनीतिदशाविशेषज्ञा अपि 'को नाम धर्मस्तत्त-त्सम्प्रदायानुगतं धर्ममतं किम्विधमि'ति पृष्टाश्च ब्रूते स्म न वयं विद्मः किन्तु गिर्जोपासनालयं गच्छामः। प्रत्युत भारतीयः कश्चन कर्षकोऽपि को भवदधीश्वर इति पृष्टः सन् ब्रूयात् न चैतद्वेद्मि किन्तु करः प्रत्यर्प्यत इति। किन्तु धर्म्यो जिज्ञास्यते चेत् स सपद्येव सूचयेद्यत् स द्वैतवादी इति। मायाजीवतत्त्वोभयविषयकं किमपि वक्तुं प्रक्रमेत च। न च साक्षरः स तथापि एतदखिलमेव न्यासिभ्यस्ते अधिगतवन्तः। तत्तद्विषय-विवेचने च प्रणयनमपि प्रदर्शयन्ति। समग्रदिवसान् व्याप्य स्वस्वकर्मानु-ष्ठानादनन्तरं कर्षका निषण्णविष्टरमूलास्तत्तत्तत्त्वमालोचयन्तो वर्तन्ते।

**प्रश्नः** — अन्धविश्वासपदेन किं बोध्यते हिन्दुसमाजे?

**उत्तरम्** — आधुनिके हि काले भोजनपानोद्वहनादिविषये प्रत्येकजातिनिष्ठानां विधिनिषेधवाक्यानामाचरणमेव अन्धविश्वास इत्यु-च्यते। ततो हिन्दुधर्मावलम्बी पुरुषो यस्मिन् कस्मिन्नपि मते आस्थां

स्थापयतु न च तत्र कापि हानिः। क्वचिदपि भारतवर्षे संघबद्ध-धर्ममण्डली नासीत्। अतएव शुद्धहिन्दुमतप्रतिष्ठानिमित्तं तन्मतं विधिद्वारा एकीकर्तुं च क्वचिदपि काले पुरुषा नासन्। सामान्यतः अस्माभिरुच्यते यत् वेदप्रामाण्याभ्युपगन्तार एवैकनिष्ठा हिन्दुजातिगताः पुरुषाः। प्रकृत्या तु दृश्यते द्वैतवादिनां सम्प्रदायानामनेक एव वेदतोऽप्यपेक्षया पुराणे एवास्थां स्थापयन्ति।

**प्रश्नः** — भवतां हिन्दुदर्शनं ग्रीकजनानां स्टोयिकदर्शने कीदृक्प्र-भावमातनोति स्म?

**उत्तरम्** — एवं सम्भाव्यतेतरां यत् आलेकजान्द्रियावासिषु हिन्दुदर्शनं प्रभावमातनोति स्म। पिथागोरासः सांख्यमतप्रभावित इत्यत्र नास्ति सन्देहलेशावसरः। स्यादेतत्। सांख्यदर्शन एव वेदधृतदार्शनिकत-त्त्वानां सोपपत्तिसामञ्जस्यविधानानुकूलः प्रथमः प्रयासो दृश्यते इत्य-स्माकं नये। किञ्च वेदेऽपि कपिलनामधेयस्य उल्लेखो दृश्यते 'ऋषिं प्रसूतं कपिलं यस्तमग्र' इति।

**प्रश्नः** — प्रतीच्यविज्ञानेन साकं कथमेतस्य मतस्य विरोधः?

**उत्तरम्** — लेशतोऽपि नास्ति विरोधः। प्रत्युत अस्मदीयमतैः प्रतीच्यविज्ञानं सामञ्जस्यमेति। अस्माकीनं परिणामतत्त्वमाकाशतत्त्वं प्राणतत्त्वं वा अक्षरशो भवदीयानामाधुनिकदर्शनानां सिद्धान्तसमम्। भवदीयः परिणामवादश्च अस्मदीये योगसांख्यदर्शने राजते। तथाहि पतञ्जलिना प्रकृत्यापूरणद्वारा जात्यन्तरपरिणामः निगदितः 'जात्यन्तरपरिणामः प्रकृत्यापूरात्' इति सूत्रात्। किन्तु एतत्कारणविषये तु पतञ्जलिमतं प्रतीच्यविज्ञानमतादिभद्यते। तेषां परिणामवादव्याख्यानमाध्यात्मिकम्।

तेषां नये निकटवर्तिनो जलाशयतो जलसेचननिमित्तं यथा कर्षकस्य केवलं जालावरोधकम् एवापसारणीयतया वर्तते—'निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्' इति तद्वदेव निखिला एव पुमांसः पूर्वत एव अनन्तशक्तिमन्तः केवलं विविधावस्थाचक्रात्मकप्रतिबन्धकबद्धास्ते सन्ति। तिर्यग्योनिषु मनुष्यत्वमवरुद्धमस्ति, प्राप्ते त्ववसरे मनुष्यत्वेन अभिव्यक्तिं विन्दते। युक्ते समयेऽवसरे चोपस्थिते मनुष्येषु एव विद्यमानं देवत्वमभिव्यक्तिं याति। अतएवाधुनिकैः नूत्नैः मतकलापैः साकमस्माकं कलहस्य नास्ति विशेषः विषयः। तथाहि दिङ्मात्रमुदाहरणम् यथा इन्द्रियद्वारिकायामुपलब्धौ सांख्यमतेन आधुनिकशरीरविज्ञानस्य पार्थक्यं लघीय एव।

**प्रश्नः** — किन्तु भवतां ज्ञानादानपद्धतिः किं पृथगेव?

**उत्तरम्** — वाढम्। अस्माकमेतत् मतं यत् मनःशक्तीनामेकीकरणमेव ज्ञानादानैकोपायः। बहिर्विज्ञाने बाह्यार्थेषु मनो निवेश्यते। अन्तर्विज्ञाने तु मनोगतिरात्माभिमुखतां यायात्। एवमेव मनस ऐकाग्र्यमस्माभिर्योग इत्याख्यायते।

**प्रश्नः** — एकाग्रदशायां किमेतत्तत्त्वसकलस्य सत्यत्वं स्पष्टतः प्रतिभाति?

**उत्तरम्** — एतदैकाग्रशक्तिफलं भूय इति वर्णयन्ति वाग्मिनः। तेषां नये मानसैकाग्र्येण जागतिकं प्रत्येकं सत्यं बाह्याभ्यन्तरनिर्विशेषं करामलकवत् प्रत्यक्षीकर्तुं शक्यते।

**प्रश्नः** — अद्वैतवादिनां सृष्टितत्त्वसम्बन्धि किं मतम्?

**उत्तरम्** — अद्वैतवादिनो ब्रूवते एतत्सकलं सृष्टितत्त्वं तदन्यदपि यदखिलं मायाधीनम्। तत्सर्वमेवापाततः प्रतीयमानस्य प्रपञ्चस्य अन्त-

र्गतम्। वस्तुतस्तु न तेषां सत्त्वं समस्ति। किन्तु यावदेव वयं मायावृतास्तावदेव अस्माभिरेतद्दृश्यसकलं दृश्येत। दृश्यप्रपञ्चेऽस्मिन् यत्किञ्चिदपि व्यापारमात्रं यथाक्रमं भवति। न तद्बहिर्भूतं नियमान्तरं वा क्रमान्तरमस्ति, अपि तु मुक्तिः।

**प्रश्नः** — अद्वैतवादः किं नु द्वैतवादविरोधी?

**उत्तरम्** — उपनिषदां यथाप्रणालिक्रमनिर्मितत्वात् दार्शनिकानां मतवादविशेषेषु प्रतिपिपादयिषितेषु सत्सूपनिषदः स्वाभिप्रायानुसारं श्रुतयो निचिताः। तस्मात्सर्व एव दर्शनप्रस्थानप्रवक्तार उपनिषदं प्रमाणत्वेनोररीकुर्वन्ति। अन्यथा तेषां दर्शनप्रस्थानप्रतिष्ठामूलत्वाभावापत्तेः। तथापि वस्तुगत्या उपनिषत्सु चिन्तासकलस्य प्रणालीगतं प्रतिष्ठामूलं दृश्यते। अस्माकमयं राद्धान्तो यत् नाद्वैतवादः द्वैतवादविरोधी। वयं ब्रूमहे यत् सत्यप्राप्तये धर्मावाप्तये वा सोपयोगसोपान-त्रिकेषु द्वैतवाद आनन्त्यमयति। द्वैततत्त्वमेवाद्यं सोपानम्। ततश्च मनुष्य इतोऽपि आढ्यतरदशामुत्तीर्णो भवति, स चायं विशिष्टाद्वैतवादः। अवसानतः स पश्यति यत् स विश्वात्मना अभिन्न इति। अतश्च एतत्-त्रितयं न मिथो विरुद्धमपि तु परस्परं परिपूरकतां याति।

**प्रश्नः** — माया वा अज्ञानं वा किमर्थं समस्ति?

**उत्तरम्** — असति कार्यकारणसंघाते कथमिति जिज्ञासाया उदयो न स्यात्। मायाश्रयपुरःसरमेव कथमिति कस्मिंश्चिद्विषये जिज्ञासा सम्भवति। अतश्चास्माभिरुद्यते — सोपपत्ति आक्षेप उपस्थाप्यते चेत् वयं तदुत्तरं वक्ष्यामः। विनैतन्नास्माकं तत्प्रतिवचनेऽधिकारः।

**प्रश्नः** — सगुण ईश्वरः किं मायाधीनः?

**उत्तरम्** — अथ किम्। अयं सगुणेश्वरः मायादृष्टः निर्गुणं ब्रह्मैव न तद्भिन्नः। निर्गुणं ब्रह्म मायाधीनं सत् प्रकृतिपराधीनं सद्वा जीवात्मा उच्यते। मायाधीशत्वेन प्रकृतिनियन्तृत्वेन वा तदेव निर्गुणं ब्रह्म सगुणेश्वर इत्युच्यते। यदि च कश्चन पुरुष आदित्यदर्शनकामोऽस्मात् स्थानाद्गन्तुं प्रारभते, प्रथमतया स लध्वाकारं प्रभाकरं पश्येत्, यावदेव प्रकृतं मार्तण्डं क्रमश उपैति तावत् स क्रमेण महतो महत्तरं तं पश्येत्। यात्रायाः प्रतिस्तरं स भिन्नं भिन्नं भानुं पश्यतीति मन्येत किन्तु तेन एक एव भानुर्दृश्यते इत्यत्र नास्माकं संशयः। एवमेवास्माभिर्यदेव दृश्यते तत् सर्वमेव तन्निर्गुणब्रह्मणः सत्ताभेदमात्रम्। अतएव अनया रीत्या तत्सर्वमेव सत्यम्। न चैतेषु एकमेव मिथ्याभूतम्। किन्तु एतावदस्माभिर्वक्तुं शक्यते यत् एतानि अनुन्नतदशामात्राणि।

**प्रश्नः** — स च पूर्णो निरपेक्षसत्ताकः कथंकारं ज्ञातव्यः?

**उत्तरम्** — प्रणालीद्विकमस्तीति वयं ब्रूमहे इतिवाचको नेतिवाचकश्च। आद्यमार्गेणैव जगदखिलं क्रमते—प्रेममार्गोऽयम्। यदि प्रेमपरिधिरानन्त्येन वर्धयितुं शक्यते तदा वयं सार्वजनीने प्रेम्णि उपनीता भवामः। नेति नेति इति च मार्गान्तरमस्ति। एतत्साधनद्वारा यो यस्तरङ्गश्चेतसं बहिर्मुखित्वमापादयितुं चेष्यते स स एव निवार्यः। परिशेषतो मनसो मृत्युर्घटते सत्यस्वरूपं च प्रकाशमेतीति प्रतीयते। सा चेयं दशा समाधिर्वा ज्ञानातीतावस्था वा पूर्णज्ञानदशा वा व्यपदिश्यते।

**प्रश्नः** — किं तर्हि इयमेव विषयिणो विषये निमज्जनप्रापणदशा?

**उत्तरम्** — न खलु विषयिणो विषये अपि तु विषयस्य विषयिणि लीनताप्रापणम्। वस्तुतो जगदिदं व्यपगतं केवलमहंपदवाच्य आत्मैव तिष्ठति।

**प्रश्नः** — अस्माकं केषाञ्चन जार्मानदार्शनिकानां मतं यत् भारतवर्षस्य भक्तिवादः पाश्चात्त्यप्रभावफलमिति?

**उत्तरम्** — न हि तैः साकं मम ऐकमत्यमस्ति। एतादृशमनुमानं मुहूर्तमपि यथार्थम्। न हि भारतीया भक्तिः पाश्चात्त्यभक्तितुल्या। भक्तावस्माकमयमेव प्रधानप्रत्ययो यत् नात्र भयभावो वर्तते—केवलमेव भगवति प्रेम। न हि भयोनोपासनोपासनात्वं गच्छति। आदितोऽवसानं यावन्नैरन्तर्येण केवलं प्रेमद्वारैवोपासना सम्भाव्यते। द्वितीयतः एतदनुमानं पूर्णतोऽनावश्यकम्। भक्तिगीतिस्तु प्राचीनासूपनिषत्सु अपि आम्नाता। ताश्चोपनिषदः ख्रीष्टानधर्मावलम्बिनां वाइवेलधर्मग्रन्थतोऽपि प्राचीनाः। संहितासु अपि भक्तिबीजं वर्तते। भक्तिशब्दोऽपि न पाश्चात्त्यः। वैदिकमन्त्रे आम्नातात् श्रद्धाशब्दात् पर्ययेण भक्तिशब्दः प्रादुर्भूतः।

**प्रश्नः** — ख्रीष्टधर्मविषये भारतवासिनां ईदृशी दृष्टिः?

**उत्तरम्** — उत्तमैव सा दृष्टिः। वेदान्तः सर्वानिव स्वीकरोति। धर्मशिक्षायां देशान्तरतो भारतवर्षस्य वैशिष्ट्यं किमपि राजते। यथा गृह्यतां यत् ममैकः पुत्रो वर्तते। कस्यापि धर्ममतस्य शिक्षा तस्मै मया न प्रदीयते, तस्मै प्राणायामं शिक्षयेम्, मनस एकीकरणपद्धतिं शिक्षयेम्, सामान्यतः स्वल्पतः प्रार्थनमपि शिक्षयामि। भवद्भिः

प्रार्थनापदेन यद् गृह्यते न च तथा। केवलमेवम्विधा प्रार्थना शिक्ष्येत यत् येन च विश्वप्रपञ्चः सृष्टस्तस्याहं ध्यानं कुर्वे। स मम मानसं ज्ञानप्रभया प्रतिभासयत्विति। एवम्भावेन तस्य धर्मशिक्षा प्रचलति। ततः परं स भिन्नभिन्नधर्मानुयायिनां दार्शनिकानामाचार्याणां च मतं शृणुयात्। एतेषु यस्य मतं सर्वतोऽपि उपयोगित्वेनावधारयति तमेव स गृह्णीयात् स तस्य गुरुः स्यात् स च शिष्यः स्यात्। स तं ब्रूयात्—'भवता यस्य दर्शनस्य प्रचारः क्रियते तदेव गरिष्ठम्। अतएव एतन्मह्यमुपदिशतु' इति। अस्माकमेतदेव मूलं वक्तव्यं यत् न च भवदीयं मतं ममोपयोगि स्यात्, मम च मतं न भवतामनुकूलं स्यात्। प्रत्येकमेव साधनमार्गो भिद्यते। मम दुहितुः साधनमार्ग एकविधो मम पुत्रस्य अन्यविधः मम तु ततोऽपि पूर्णतो भिन्नो भवितुमर्हति। अतएव प्रत्येकस्य एव पुरुषस्य इष्टमार्ग भिन्नो भिन्नो भवितुं योग्यः। किञ्च अयं च साधनमार्गः स्वस्वस्वान्तेषु गूहितत्वेन स्थाप्यते। तन्मार्गविषयो मयैव मम गुरुणैव ज्ञायते। नान्यस्मै ज्ञाप्यते। यतो हि वयं लोकैः साकं निरर्थविवादं न चिकीर्षवः। स च परस्मै प्रकाश्येत चेत् न तस्य कोऽपि उपकारः स्यात्। यतो हि प्रत्येकमेव पुंसा स्वस्वमार्गश्चेतव्यः। अतएव साधारणानां पुरतः सर्वसम्मतमेव दर्शनं सर्वसम्मतैव साधन-पद्धतिरुपदेष्टुं शक्यते। अत्रायं दृष्टान्तोऽस्ति यद्यपि स दृष्टान्तः श्रूयते चेत् हास्यमायास्यतीति। एकपदस्थितानामस्माकमभ्युदयो भवितुमर्हति। इदानीमेतदस्माकं सोपयोगं सदपि यद्यहं सर्वेभ्य एकैनैव चरणेन स्थिते-रुपदेशं ददामि तर्हि सर्व एव मद्वचनमुपहसयेयुः। एतत्प्रायः सम्भवति यत् अहं यद्यपि द्वैतवादी मम

पत्नी च अद्वैतवादिनीति। मम कश्चन तनयः सत्यामेवेच्छायां ख्रीष्टस्य बुद्धस्य महम्मदस्य वा उपासको भवितुमर्हति। स एव तस्य इष्टः। किन्तु तेन जातिगतो नियमः प्रतिपाल्येत।

**प्रश्नः** — सर्व एव किं हिन्दुजना जातिभेदे विश्वसन्ति?

**उत्तरम्** — बाध्येन सता जातिगतनियमः परिपाल्येत। असत्यामपि आस्थायां तन्नियमानुसरणं निर्बाधमेवोचितम्।

**प्रश्नः** — प्राणायामस्य मन ऐकाग्र्यस्य चाभ्यासः किं सर्वैरेव क्रियेत?

**उत्तरम्** — अथ किम्। किन्तु केचनाल्पमेवाभ्यस्यन्ति केवलं तेषां धर्मशास्त्रस्यादेशपालनचरितार्थाय। भारतीयानि मन्दिराणि नात्र चार्चाख्योपासनालयतुल्यानि। श्व एव मन्दिरसकलमन्तर्हितं भवितुमर्हति, लोकास्तु तदर्थं नैकान्ततोऽभावमनुभवेयुः। स्वर्गकामः पुत्रकामस्तदन्यकामो वा सन् पुरुषः मन्दिरनिर्मितिं कारयेत्। एवमपि भवितुमर्हति यत् कश्चन विशालं मन्दिरं प्रतिष्ठापितवान्, अपचितिविधाननिमित्तं च पुरोहितान् नियुक्तवान्, किन्तु मम तत्र गमने लेशमात्रमपि प्रयोजनं नास्ति। यतो मम यदेव पूजापाठादिकं तत् सकलमेव मम गृहमध्य एवानुष्ठीयते। प्रत्येकमेव गृहे पृथगेकः प्रकोष्ठस्तिष्ठति। स च पूजागृहमित्युच्यते। दीक्षाग्रहणान्तरं प्रत्येकमेव बालकस्य बालिकाया वा प्रात्यहिकं कृत्यं यत् प्रथमतः स्नानं ततश्चाभ्यर्चनम्। प्राणायामो वा ध्यानं वा नामविशेषस्य जपो वा तस्य पूजेति बोध्यम्। अपि चैतल्लक्ष्यं यत् साधनसमये शरीरं समुन्नतत्वेन स्थापनीयमिति। अस्माकमयं विश्वासो यत् मनःशक्तिद्वारा शरीरं कुशलं स्थापयितुं शक्यते। एक एवं समापितसपर्याक उत्थितः, ततश्चापरः कश्चन तत्रागत्य तत्रैवासने

पूजयंस्तिष्ठति। सर्व एव नीरवं निजनिजपूजां समाप्य प्रतिगताः। यथासमयमेकस्मिन्नेव गृहे त्रयश्चत्वारो वा पुरुषा उपासते। किन्तु प्रत्येकमुपास्तिपद्धतिः पृथगपि भवितुमर्हति। एवं पूजा प्रत्यहमन्ततः द्विः क्रियते।

**प्रश्नः** — भवतो या चेयं दशोच्येत तत्किमादर्शमात्रम् आहो-स्वित् तादृशी दशा सत्यसत्यमेव केनाप्यनुभूता?

**उत्तरम्** — वयं ब्रूमहे सा प्रत्यक्षान्तःपातिव्यापारविशेषरूपा उपलब्धिपरा च। यदि केवलं तद्भणितिमात्रं तर्हि तत्किमपि न। वेदस्तु तस्य तत्त्वस्य उपलब्धिनिमित्तं श्रवणमनननिदिध्यासनस्वरूपमुपा-यत्रितयमुपदिशति। एतदात्मतत्त्वं प्रथमतः श्रूयेत श्रुत्वा च मन्तव्यम्— यथा अन्धविश्वासो न स्यात्। किन्तु विचारपुरःसरं ज्ञानतो विश्वास उत्पद्येव इत्येवमात्मस्वरूपविवेचनपूर्वकं तत्र ध्याने यतितव्यम्। तदैव तस्य साक्षादनुभवः स्यात्। अयमेव प्रत्यक्षतोऽनुभवो यथार्थधर्मः। न धर्माङ्गम्। वयं ब्रूमहे, अयमेव समाधिः ज्ञानातीतदशाख्यो धर्मो वा।

**प्रश्नः** — भवता एतादृशी समाधिदशा यदि लभ्येत किं तर्हि भवता तदीयं किमपि वक्तुं शक्येत?

**उत्तरम्** — न हि। किन्तु समाधिदशा पूर्णज्ञानभूमिदशा वा अधिगता भवति चेत् मम जीवन एव तत्फलदर्शनादनुमीयेत। मूर्खः कश्चन निद्रां गतः। ततः प्रबुद्धः स यथा मूर्ख आसीत् तथैव स्यात्। ततोऽपि अनुत्तमदशां गन्तुं पारयेत् वा। किन्तु समाधिस्थो भवति चेत् समाधिभङ्गादनन्तरं स तत्त्वज्ञः साधुर्महापुरुषो वेति ज्ञायते। तत एव गम्यते यत् दशाद्वयं परस्परं कियदेव भिन्नम्।

**प्रश्न:** — अहमध्यापकस्य प्रश्नानुसारमेव जिज्ञासे यत् किं भवता एतादृशाः सम्प्रदाया ज्ञायन्ते यत् ये आत्मसम्मोहनतत्त्वमालोचितवन्तः। प्राचीने हि भारतवर्षे निश्चप्रचमेव अस्या विद्यायाश्चर्चा आसीत्। इदानीन्तु तथा नास्ति। अहं विविदिषुर्यत् ये च तस्याश्चर्चां कुर्वन्ति ते तत्तत्त्वविषयकं कीदृशमभिमतं व्यक्तीकुर्वन्ति कीदृग्वाभ्यासः कृतः साधनं वा साधितम्?

**उत्तरम्** — भवद्भिर्या चेयं पाश्चात्त्ये देशे सम्मोहनविद्या (hypnotism) उच्यते सा मूलविषयस्याङ्गमात्रम्। हिन्दुजनैश्च सा आत्मसम्मोहनदूरीकरणमिति (self-dehypnotisation) व्यपदिश्यते। ते वदन्ति भवन्तस्तु सम्मोहिता एव सन्ति। एवं सम्मोहितदशा दूरीकर्तव्या। विगतमोहैश्च भवितव्यम्। तथाचाम्नातम्—

'न तत्र सूर्यो भाति न चन्द्रतारकम्,
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति।।' इति।

—एतन्न सम्मोहनं किन्तु मोहापसरणम् (dehypnotisation)। वयं ब्रूमहे यत् सर्वाण्येव धर्मान्तराणि प्रपञ्चस्य सत्यत्वमुपदिशन्ति। अतएव ते समोहनविशेषस्य प्रयोगं कुर्वन्ति। केवलमद्वैतवेदान्तिन एव न सम्मोहिता भवितुमिच्छन्ति। केवलमद्वैतवेदान्तिन एव न्यूनाधिकतया अवगच्छन्ति यत् सम्मोहनतो मोहतो वा सर्वविधा द्वैतवादा आविर्भवन्ति। किन्तु अद्वैतवेदान्तिभिरुच्यते—वेदोऽपि यदि निक्षिप्येत,

सगुण ईश्वरोऽपि यदि निक्षिप्येत, किञ्च विश्वजगदपि निक्षिप्येत, किञ्च आत्मकलेवरमानसौ अपि यदि निक्षिप्येताम्, लेशमात्रमपि यदि न तिष्ठति तदैव त्वं पूर्णतो मोहमुक्तिं यायाः। तथाचाम्नातम् —

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन।।' इति।

(यतो मनसा सह वाक्यमपि न प्राप्य निवृत्तिं गच्छति तद्ब्रह्मानन्दज्ञानेन विद्वान् न कुतश्चित् बिभेति इति)।

एतदेव मोहापसरणम्। तथाचाम्नातम् —

'न पुण्यं न पापं न सौख्यं न दुःखं
न मन्त्रो न तीर्थं न वेद न यज्ञाः।
अहं भोजनं नैव भोज्यं न भोक्ता
चिदानन्दरूपः शिवोऽहं शिवोऽहम्।।' इति।

(अर्थात् नास्ति मे पुण्यं न वा पापं न च सुखं न दुःखं न मे मन्त्रः न च यज्ञाः। नाहं भोजनं भोज्यं भोक्ता वा। अहं चिदानन्दस्वभावः शिवः अहमेव शिवः इति)।

अस्माभिः सम्मोहनविद्यातत्त्वसकलमवगतमेव। अस्माकं या चेयं मनस्तत्त्वविद्या वर्तते सापि पाश्चात्त्यैः पुरुषैरधुनैव केवलं ज्ञातुमारभ्यते। किन्तु दुःखविषयो हि एवं यत् यावत् प्रयोजनम् तावन्न ज्ञातम्।

**प्रश्नः** — भवद्भिः आतिवाहिकदेहपदेन (astral body) किं व्यपदिश्यते?

**उत्तरम्** — अस्माभिस्तल्लिङ्गशरीरमित्युच्यते। यदा एतद्देहनाशो घटते तदानीं देहान्तरपरिग्रहः कथङ्कारं घटते? शक्तिर्विना अचेतन-पदार्थाश्रयं तिष्ठति। अतएवायं सिद्धान्तो यत् कलेवरवर्जनानन्तरं सूक्ष्म-भूतानामंशविशेषः अस्माभिः साकमेव तिष्ठति। अन्तरिन्द्रियाणि तैः सूक्ष्मभूतैर्देहान्तरमुपजनयन्ति। यतो हि प्रत्येकमेव स्वस्वदेहं निर्मिनोति, मन एव शरीरं निर्माति। यद्यहं साधुरेव भवामि तदा मौलिर्मे ज्ञानिनः साधोर्मौलौ परिणमेत। योगिनश्च ब्रूते अस्मिन्नेव जीवने ते आत्मदेहं देवदेहे परिणमयन्ति।

योगिनश्च बहुविधान् व्यापारान् प्रदर्शयन्ति। अनेकशो मतवाद-तोऽपि अपेक्षया सामान्यस्याभ्यासमात्रस्य मूल्यं त्वधिकमेव। अतो मया एतन्न दृष्टमदःसाधितं वेति सकलं मिथ्येति वचने नाधिकारो मे। योगिनां ग्रन्थेषु गुम्फितं यत्, अभ्यासेन सर्वविधान्येव चकितफलानि लभ्यन्ते। नियताभ्यासेन अत्यन्तमल्पीयसा समयेन न्यूनातिरिक्तं फलं सुलभम्। तस्मादेव ज्ञाप्यते यत् नात्र प्रतारणा न वा चातुर्यं किमप्यस्तीति। सर्वस्मिन्नेव शास्त्रान्तरे यदलौकिकव्यापारसकलमुल्लिखितं योगिभिस्तानि विज्ञानरीत्या व्याख्यायन्ते। अत्रायं प्रश्नो यत् प्रत्येकमेव जातौ एतेषामलौकिककार्याणां विवरणं कथङ्कारं प्रविष्टम्? येन चोच्यते एतत्सकलमेव मिथ्याभूतम्, एतासाञ्च व्याख्यानां नास्त्युपयोग इति स च युक्तिवादी वा विचारपरायणो वेति वक्तुं न युज्यते। यावन्न तानि मिथ्येति प्रमाणयितुं शक्यन्ते तावत्तेषामनपलापे नास्ति भवतामधिकारः। भवद्भिः एतत्प्रमाप्येत यत् नास्ति एतेषां मूलं किमपीति तदानीमेव

भवान् तेषामनङ्गीकारे अधिकारी भवेत्। किन्तु न भवद्भिस्तथा क्रियते। अन्यथा योगिभिरुच्यते यत् न च तानि वस्तुतः अलौकिकानि किन्तु तैरिदानीमपि तत्सर्वमनुष्ठातुं शक्यत इति ते स्वाधिकारं प्रकाशयन्ति। भारतवर्षे अद्यावधि अनेक एवाद्भुतव्यापाराः साधिताः किन्तु तेषां न किञ्चनापि अप्राकृतिकशक्तिद्वारा साध्यते। एतद्विषयका अन्ये ग्रन्थाः सन्ति। मनस्तत्त्वविवेचनस्य वैज्ञानिकप्रयत्नं विना यदि विषयेऽस्मिन्नन्यत् किमपि न साध्यते तर्हि एतस्यापि गौरवं योगिनामेव प्राप्यम्।

**प्रश्नः** — योगिभिः के के च व्यापारा दर्शयितुं शक्यन्ते इत्यत्र किमपि निदर्शनं भवद्भिरुपस्थापयितुं शक्यते न वा?

**उत्तरम्** — विज्ञानान्तरस्य चर्चायां तत्रत्येषु विषयेषु यावद्विश्वासेन प्रयोजनम्, योगी तदीयायां योगविद्यायां तदपेक्षया आधिक्येन न ब्रवीति। कस्यचन गृहीतस्य विषयस्य परीक्षानिमित्तं शोमनो यथा विश्वास आधीयते योगिना न ततोऽधिकतया विश्वास आधातुमुपदिश्यते। योगिनामतीवोन्नत आदर्शः। मनःशक्तिद्वारा यद्व्यापारसकलं साधयितुं युज्यते तेषामवरविषया मया दृष्टाः। अतएव उत्कृष्टतरव्यापारा अपि सम्भवन्तीत्यत्र अनास्थास्थापनाधिकारो नास्माकमस्ति। सार्वज्ञ्येन सर्वशक्तिमत्त्वेन च शाश्वतशान्तेः सदातनप्रेम्नश्च अधिकार एव योगिनामादर्शः। मया कश्चन योगी ज्ञायते यश्च गोखरोनामधेयेन उरगेन दष्टः। दंशनमात्रमेव अचेतनः सन् भूमौ पतितः सायं च पुनश्चैतन्यं तस्य प्रत्यागतम्। यदा स पृष्टः 'किमभूदि'ति? तेनोदितं—'मम

प्रियतमाद्दूत आगत' इति। अस्य योगिनः घृणासकलस्य निखिलक्रोधस्य हिंसासमग्रस्य च भावः पूर्णतो दग्धतां गतः। न कथमपि स प्रतिक्रियायां प्रवर्तयितुं शक्यते। सदैव सः अनन्तानन्दस्वरूपतां गतः। प्रेमशक्तिषु स सर्वशक्तिमान्। एवम्विधो योगी यथार्थ एव। अलौकिकशक्तीनामयमखिलः प्रकाशो भाक्त एव। न च तत्सकललाभो योगिनां प्रकृतमुद्देश्यम्। योगिनः कथयन्ति विना योगिनोऽन्ये सर्वेऽपि दासतुल्याः— खाद्यदासः वायुदासः स्वपत्नीदासः स्वसन्तानदासः अर्थदासः स्वदेशीयानां दासः नामयशसां दासः, जगतीह सहस्रशो विषयाणां दासः। यश्च एतेषां बन्धनसकलानां केनापि न बद्धः स एव यथार्थो मानवो यथार्थो योगी। तथाचाम्नातम् —

'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः।।' इति।

(अत्रैव ते निर्जितसंसारा ये च साम्यप्राप्तमनस्काः। ब्रह्म निर्दोषं समभावापन्नम्। अतस्ते ब्रह्मणि स्थिताः।)

**प्रश्नः** — योगिभिः किं जातिभेदः प्रयाजनविशेषत्वेनाङ्गीक्रियते?

**उत्तरम्** — न। जातिभेदोऽपरिणतमनसां शिक्षानिकेतनमात्रम्।

**प्रश्नः** — एतदतिचेतनभावेन (समाधितत्त्वेन) सह भारतीयग्रीष्मस्य किं नास्ति कोऽपि सम्बन्धः?

**उत्तरम्** — सम्बन्धोऽस्तीति नाहं मन्ये, यतो हि समुद्रपृष्ठतः पञ्चदशसहस्रफिटप्रमाणोर्ध्वदेशे हिमालयपर्वते अस्या योगविद्याया उद्भवोऽभूत्।

**प्रश्नः** — शीतलपरिमण्डले किं योगसम्बन्धिनी सिद्धिः सम्भवति?

**उत्तरम्** — नूनं तत्सम्भवति। जगति चास्मिन् केवलमेतदेव साधयितुं शक्यते। वयं ब्रूमहे भवन्तः प्रत्येकमेव जन्मतो वैदान्तिकाः। जीवनस्य प्रतिपदमेव भवन्तो जागतिकैः समैरेव पदार्थैरात्मनामेकत्वं घोषयन्ति। यदैव भवतां चेतांसि जगद्धिताय धावन्ति तदैव भवन्तोऽज्ञानत एव वस्तुतो वेदान्तिनो भवन्तो नीतिपरायणा अपि कथं तथेति न ज्ञायते भवद्भिः। वेदान्तदर्शनप्रस्थानमेव नीतितत्त्वं विश्लिष्य मनुष्यान् ज्ञानतो नीतिपरायणत्वमुपदिष्टवत्। वेदान्तः समेषामेव धर्माणां सारः।

**प्रश्नः** — भवता किं वक्तुमिष्यते? पाश्चात्त्यपुरुषाणामेवमसामाजिको भावो वर्तते येन वयमेवं बहुत्ववादित्वं प्राप्ताः, प्राच्यपुरुषाः किमस्मदपेक्षयाऽपि अधिकतया सहानुभूतिसम्पन्नाः?

**उत्तरम्** — मम मते पाश्चात्त्या निष्ठुरतराः। प्राच्यपुरुषास्तु सर्वेष्वेव भूतेषु अधिकतया करुणासम्पन्नाः। एतदेव तत्र कारणं यत् प्राच्यतोऽपि भवतां सभ्यता आधुनिकतरा। स्वभावस्य कस्यापि दयावृत्तित्वापादनं किञ्चित्समयसापेक्षम्। भवन्तो यथेष्टशक्तयः सन्ति। किन्तु यावद्धि शक्तिसंग्रहश्चलति न तथा हृदयशिक्षा। विशेषतया च मनःसंयमशक्तिरपि अत्यर्थमल्पत्वेनैव अनुशील्यते स्म। भवतां साधुत्वसम्पादने धीरस्वभावापादने भूयानेव समयोऽपेक्ष्यते। किन्तु भारतवासिनां प्रत्येकमेव शोणितविन्दौ अयमेव भावः प्रवाहितो वर्तते। यदि चाहं भारतवर्षस्य कस्मिंश्चिदपि ग्रामे प्रविशन् तत्रत्यजनेभ्यो राजनीतिमुपदेष्टुं प्रवर्ते न च तेऽवगच्छेयुः। किन्तु यदि वेदान्ततत्त्व-

मुपदिश्यते तदैव ते ब्रूयुः—भो स्वामिन्! गम्यते भवदभिप्रायः भवता सत्यमेवोच्यते इति। अद्यापि भारतवर्षस्य सर्वत्र कोणे कोणे तादृशो वैराग्यभोवोऽनासक्तिभावो वा दृश्यते। अधुना वयं भृशं पतिताः। किन्तु अद्यापि वैराग्यस्य प्रभाव एतावानधिकतया विद्यते यत् नृपतयोऽपि त्यक्तराज्या विनैव आश्रयं कमपि देशस्य सर्वत्र परिभ्रमन्ति।

क्वचित् साधारणा ग्राम्यबालिका अपि चरकायन्त्रे सूत्रं कर्तयन्ती कथयति—मा मह्यं द्वैततत्त्वमुपदिशतु। ममेदं चरकायन्त्रं वदति 'सोऽहं सोऽहम्' इति—अहं तदेव ब्रह्म अहं तदेव ब्रह्म इत्यर्थः। एभिर्जनैरालपन्तु जिज्ञासन्ताम् यत् भवद्भिरेवमुच्यते किन्तु तादृशं पाषाणमात्रं कथं भवद्भिः प्रणम्यते? इति। ते ब्रूयुः यत् 'भवद्भि-र्धर्मपदेन केवलं मतवादमात्रं गृह्यते किन्तु अस्माकं नये धर्मो नाम प्रत्यक्षानुभवः' इति। तेषु कश्चन एवमपि ब्रूयात् यत् तदैवाहं प्रकृत्या वेदान्तवादी स्यां यदा मम पुरतो जगदखिलमन्तर्हितं भवेत्। अहं च सत्यस्वरूपं पश्येयम्। यावन्न तथा भवति तावन्मम नाज्ञतः कोऽपि भेदः। अतएव एतासां पाषाणप्रतिमानामुपास्तिं विदध्मः। मन्दिरं गच्छामः। येन च मम प्रत्यक्षानुभवो घटेत। अहं वेदान्तं शृण्वन्नस्मीति सत्यं किन्तु अहं तदेव वेदान्तप्रतिपाद्यमात्मगत्त्वं दिदृक्षुः प्रत्यक्षतोऽनुभवितुं चेच्छामि। तथाचोदितं—

'वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम्।
वैदुष्यं विदुषां तद्वद्भुक्तये न तु मुक्तये।।' इति।

अनारतं सद्वाक्ययोजनम्, शास्त्रव्याख्यानदाक्ष्यम् इत्येतत् सर्वं पण्डि-तानां पाण्डित्यस्वादोपभोगाय न तु मुक्तये इत्यर्थः। यदि वयं ब्रह्म साक्षात्कर्तुं प्रभवामस्तदैव मुक्तिं विन्दामहे।

**प्रश्नः** — आध्यात्मिके विषये सर्वसाधारणानामेवं स्वातन्त्र्येण सह जातिभेदाङ्गीकारस्य किमस्ति सामञ्जस्यम्?

**उत्तरम्** — नैव कदाचन। लोका ब्रूवते जातिभेदो न समुचितः। किञ्च ये च जातिविशेषान्तर्गतास्तेऽपि वदन्ति जातिभेदो न चोत्त-मविषयः। किन्तु ते सपद्येव एवमपि वदन्ति यत् एतदपेक्षाया मे एवं विषयो दीयताम् येनैतत्परिहर्तुं शक्येत। ये घोषयन्ति एतदपेक्षया भवन्तः किमपरं दास्यन्ति? क्व नास्ति जातिभेदः? भवन्तोऽपि भवदीयदेशस्य क्रमागतस्यैवम्विधस्य जातिविभागस्य निर्मितौ यत्नशीलाः। केनापि कियदर्थसंग्रहे कृते सति एव उच्यते धनिशतानां मध्येऽहमपि अनन्य इति। वयमपि केवलं स्थायिजातिभेदस्थापने समर्था भवामः। अन्येऽपि तदर्थं यतन्ते; किन्तु नाधुनापि ते सफलाः। अस्माकीने-ऽस्मिन् समाजे सन्ति भूयांसो हि कुसंस्काराः कदर्थाश्च। भवद्देशीयानां कुसंस्काराणां कदर्थानां चास्माकं देशे प्रवर्तने कृते किं सर्वमेव यथार्थतां गच्छेत्? जातिभेदसत्त्व एव त्रिंशत्कोटिजना इदानीमपि रोटिकांशं लब्धुं समर्थाः। किन्तु रीतितो नीतितश्चैतदसम्पूर्णमिति अत्र नास्ति कश्चन संशयः। किन्तु जातिभेदाभावे तु भवन्तः पठनार्थमेकमपि संस्कृतग्रन्थं न प्राप्नुयुः। एतज्जातिविभागद्वारा एवं दृढप्राचीरनिर्मितिरभूत् यत् जातिं प्रति बहिराक्रमणस्य शतधा तरङ्गाघात आपतितः किन्तु तथापि न

तद्भेदनसमर्थम् (आक्रमणम्)। इदानीमपि तत्प्रयोजनं नापास्तम्। अतएव जातिभेद इदानीमपि वर्तते। सप्तशतवर्षेभ्यः पूर्वं यथा जातिभेद आसीत् तथा नेदानीं राजते। यावदेव आघातः समासादितस्तावदेव दृढतराकारो गृहीतः। एतत् किं लक्षितं यत् केवलं भारतवर्षमेव पराराष्ट्रपराभवनार्थं न देशतो बहिर्गतम्? महामतिना अशोकेन सम्राजा एतदुक्तं यत् न च केनापि तदुत्तराधिकारिणा पराराष्ट्रपराभवोद्यमेन भाव्यम्। यदि जातिविशेषान्तरमस्माकं सकाशे शिक्षकान् प्रेषयितु-मिच्छति तथा तेभ्यः साहाय्यं विधेयं न तु ते जातीयधनस्वरूपं धर्मभावं नाशयन्त्विति। एते विविधा जातिजनाः कथं हिन्दुजाति-जयाभिलाषिणः प्रवर्तन्ते? किं हिन्दुजातिजनाः परेषामनिष्टिमुत्पादितवन्तः? ते तु यथासाध्यमुपकारमेव साधितवन्तः। ते जगद्वासिनो धर्मविज्ञान-दर्शनतत्त्वान्युपदिष्टवन्तः। जगतामनेकानेवासभ्यजातिजनान् सभ्यान्सम्पा-दितवन्तः। किन्तु प्रतिदानतस्ते केवलं हत्यापरत्वेनात्याचारपरत्वेनाविश्वासिनः शठाः क्रमेण परिचिताः। आधुनिकेऽपि काले पाश्चात्त्यपुरुषरचितान् ग्रन्थान् भारततत्त्वविषयान् भारतवर्षपर्यटकग्रथितानि कथासाहित्यानि च पठन्तु; कस्य अनिष्टस्य प्रतिवादार्थं भारतवासिषु इदानीमपि एवं कटुवचोवर्षणं क्रियते?

**प्रश्नः** — सभ्यताविषये वैदान्तिकानां किं मतम्?

**उत्तरम्** — भवन्तो हि दार्शनिकाः। भवतां मते तु अर्थपुञ्जसत्त्वेन मनुष्येषु परस्परं प्रभेदो न गण्यते। एतेषां शिल्पालयानां पदार्थ-विज्ञानानां मूल्यं किम्? तेषामेतदेव फलं यत् ते ज्ञानविस्तारं साधयन्ति। भवन्तोऽभावपूरणे दारिद्र्यसंकटसमाधाने वा न समर्थाः।

प्रत्युत अभाव एव विवर्धितः। यन्त्रांशद्वारा (कलकब्जा इति भाषायाम्) कदापि दारिद्र्यसंकटस्य समाधानं न भवति। तद्द्वारा केवलं संग्राम एवैधते प्रतिस्पर्धैव तीव्रतरतां धावति। प्रकृतेः किं स्वतो मूल्यमस्ति? यदि कश्चन पुरुषस्तन्त्रीमाध्यमेन तडित्प्रवाहं चालयितुं पारयति तदैव भवन्तः कथं तस्य स्मृतिचिह्नं स्थापयितुमुद्यता भवन्ति। किं न प्रकृतिर्लक्षश एनं व्यापारं साधयति। किं प्रकृतौ पूर्वत एव एतत्सर्वं न विद्यते? तडित्प्रवाहचालने भवतां को विशेषलाभः? प्रकृतौ तु तत्पूर्वत एव विद्यते। तडित्प्रवाहस्य केवलमेतदेव मूल्यं यत्तदस्माकमभ्युन्नति-मुत्पादयति। एतद्विश्वं व्यायामशालेव। अत्र जीवात्मानः कर्मद्वारा उत्कर्षं साधयन्ति। एतदुत्कर्षोपजननादेव च वयं देवता भवामः। अतएव कस्मिन् विषये ईश्वरस्य कियान् प्रकाश इत्यतद्विदित्वैव प्रत्येकविषयस्य मूल्यं तत्त्वं वा निर्धारयितव्यम्। मनुष्येषु देवत्वस्य प्रकाश एव सभ्यता।

**प्रश्नः** — बौद्धानां किं समस्ति जातिविभागः?

**उत्तरम्** — न च बौद्धानां भृशं जातिविशेषविभाग आसीत्। भारतवर्षे सौगतानां संख्या लघ्वी एव। तथागतस्तु समाजसंस्कारक आसीत्। तथापि मया सौगतदेशसकलं दृष्टम्। तत्र जातिभेदजनना-नुकूला प्रबलैव चेष्टा विहिता किन्तु सा न सफलत्वमगात्। बौद्धानां जातिभेदो वस्तुतस्तु न तथा। किन्तु केवलं ते मनसा आत्मनामुन्नत-जातिमत्त्वेन अहंकृतिमन्तः। बुद्धस्तु अन्यतमो वेदान्ती न्यासी आसीत्। तेन च नूतनः कश्चन सम्प्रदायः समुपस्थापितो यथा सम्प्रत्यपि बहुविधा नूतनसम्प्रदायाः प्रतिष्ठिता भवन्ति। ये च भावा बौद्धधर्मेति अभिधीयन्ते

ते च न निजकीयाः। ते चात्यर्थं प्राचीनाः। स च महापुरुष आसीद् भावेषु च शक्तिं सञ्चारितवान्। बौद्धधर्मस्यैतदेव नूत्नत्वं यत् सामाजिक- स्तदीयो विभागः। ब्राह्मणाः क्षत्रिया अपि चिरमेवास्माकमाचार्यपदमधि-कुर्वाणा आसन्। आधिक्येनैवोपनिषदः क्षत्रियाणां कृतिराम्नायस्य कर्मकाण्डं ब्राह्मणानां च कीर्तिः। अखिले भारते अस्माकं ये च विश्रुता आचार्या आसन् तेषामनेक एव क्षत्रियाः। तेषामुपदेशोऽपि उदारः सार्वजनीनश्च। किन्तु आचार्यद्वितयं विहाय सम एव ब्राह्मणाचार्या अनुदारभावोपेताः। भगवदवतारत्वेन पूज्यमाना राम-कृष्ण-सुगताः सर्व एव क्षत्रियाः।

**प्रश्नः**— सम्प्रदायानुष्ठानशास्त्राणि किं तत्त्वसाक्षात्कारसहकारीणि ?

**उत्तरम्** — तत्त्वसाक्षात्कारे संवृत्ते मानुषस्त्यजति सर्वम्। सम्प्रदायभेदा अनुष्ठानानि शास्त्राणि च तद्दशाप्रापणोपायस्वरूपाणि यावन्त्येव भवन्ति तावानेवोपकारस्तेषाम्। किन्तु यदा तेषां साहाय्यं पुनर्दुर्लभम्, तदा तेषां परिवृत्तिः प्रतिपादनीया। तदुक्तम् —

'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
योजयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन्।।' इति।

(*श्रीमद्भगवद्गीतायाम्* ३/२६)

'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम्।।' इति।

(*श्रीमद्भगवद्गीतायाम्* ३/२५)

तत्त्वज्ञानी तदज्ञेभ्यः कर्मपरायणेभ्यो न घृणां प्रदर्शयेत्। विद्वान् कर्मसमस्तमेव यथायथमेवाचरेत्। कर्मण्यासक्ता अविद्वांसः पुरुषा यथा कर्माणि आचरेयुस्तथैव विद्वांसः स्वस्वकर्माणि आचरेयुः केवलं लोकसंग्रहार्थमिति भावः।

**प्रश्नः**—अहन्त्वं चरितनीतिश्च कथङ्कारं व्याख्यायेते वेदान्तदर्शने?

**उत्तरम्** — अहन्त्वं तु प्रकृत्या तदेव पूर्णब्रह्म यत् मायाकृताकारभेदं प्राप्तम्। प्राथम्येन एवं बोधसत्त्वेऽपि प्रकृत्या तु तत्सदैव पूर्णब्रह्मस्वरूपम्। प्रकृत्या तु एकैव सत्ता राजते—माययैव तद्भिन्नत्वेन प्रतीयते। मायायामेव भेदबोधः। किन्तु मायायामेव सर्वदा एकत्वप्राप्तिचेष्टापि वर्तते। प्रत्येकं जातेश्चरितनीतौ अपि तादृशी चेष्टा अभिव्यज्यते। यतो हि तज्जीवात्मनः स्वाभाविकं प्रयोजनम्। एवं प्रयतनेनैकत्वमासाद्यते; एकत्वप्राप्तिचेष्टा चास्माभिश्चरितनीतिरिति व्यपदिश्यते। अतश्चास्माभिः सर्वदा नीतिमद्भिः सेव्यम्।

**प्रश्नः** — चरितनीतेरधिकांश एव किं व्यक्तिभेदसम्बन्धाश्रितो भवति?

**उत्तरम्** — चरितनीतिः पूर्णतस्तथैव। पूर्णब्रह्म क्वचिदपि मायागण्ड्यन्तःपाति न भवति।

**प्रश्नः** — भवद्भिरुच्यते अहन्त्वमेव पूर्णब्रह्म। मयैतत्पृच्छ्यते यदेतस्य अहन्त्वं ज्ञानं युज्यते न वेति?

**उत्तरम्** — अहन्त्वस्य तस्यैव पूर्णब्रह्मणः प्रकाशरूपम्। व्यक्तदशायां यादृशी प्रकाशशक्तिस्तस्याः कार्यस्वरूपमेव ज्ञानमित्यभिधीयते। अतः पूर्णब्रह्मणो ज्ञानस्वरूपतामधिकृत्य ज्ञानपदप्रयोगो न युज्यते। यतो हि तादृशी पूर्णावस्था आपेक्षिकज्ञानातीता।

**प्रश्नः** — आपेक्षिकं ज्ञानं किं पूर्णज्ञानमन्तर्याति ?

**उत्तरम्** — अथ किम्। एकत आपेक्षिकं ज्ञानं पूर्णज्ञानान्तर्गतमिति शक्यवचम्। यथैकस्मादेव मोहररत्नविगलनात्ततः पयसासिकि-दुयानि-टाकाप्रभृतिमुद्रासकलं सुप्रापं भवति। एवमेव तत एव पूर्णज्ञानदशातो ज्ञानसकलमेव शक्यप्रापम्। सैव अतिचेतनदशा ज्ञानातीतदशा पूर्णज्ञानदशा वा यत्र साधारणं ज्ञानमज्ञानं च सकलमेवान्तर्गतम्। येन च पुंसा तादृशी दशा अधिगम्यते अस्मदनुभूता ज्ञानदशापि तस्य सम्यक्त्वेन वर्तते। यदा च एवमपरज्ञानदशा अस्माकीनानां साधारणज्ञानदशानां तुल्यत्वेनानुभवितुमिष्यते तदानीं तेन स्तराणामधस्तिष्ठतैवानुभूयेत। एतदेव साधारणज्ञानमधस्तनी दशा काचन। मायाद्वारैवैवं ज्ञानं सम्भवतीति शम्।

# भारतीयजीवने वेदान्तस्य कार्यकारिता

प्रचलतितरामस्माकं जातेर्धर्मस्य चाभिधया संज्ञास्वरूपेण वा शब्द एकः। 'हिन्दु'-शब्दमभिलक्ष्याहमिदं वच्मि। वेदान्तधर्मतया मम किं लक्ष्यमिति ज्ञापनार्थं शब्दस्यास्यार्थस्य सम्यग्बोधेनास्ति प्रयोजनम्। प्राचीनपारसीकजनाः सिन्धुनदं हिन्दु इत्यभिदधति स्म। संस्कृतभाषायां यत्र सकारो वर्तते, प्राचीनपारसीकभाषायां स एव हकाररूपेण परिणतः। एवं सिन्धुतो हिन्दुशब्दसिद्धिः। किञ्च ग्रीकजना हकारोच्चारणेऽक्षमा आसन्निति नैवाविदितमस्ति युष्माकं केषामपि; अतस्ते हकारं सम्पूर्णरूपेणापसारितवन्तः—एवंप्रकारेण वयम् 'इण्डियान्'-नाम्ना परिचिताः।

अधुनेदं वक्तव्यं यत् प्राचीनकाले शब्दस्यास्य यः कोऽप्यर्थस्तिष्ठतु नाम, सिन्धुनदस्यापरतीराधिवासिजनानेष बोधयतु वा, अन्यत् किमपि बोधयतु वा, वर्तमानकाले शब्दस्यास्य कापि सार्थकता नास्ति; यतः सिन्धुनदापरतीरवासिनो नो समे साम्प्रतं समानधर्मावलम्बिनः। अत्राधुना प्रकृतहिन्दुधर्मीयैः सह महम्मदीयाः पारसीकाः क्रैस्ताः कतिचन बौद्धा जैनाश्च निवसन्ति। 'हिन्दु'-शब्दस्य व्युत्पत्तिगतेऽर्थे गृहीते सति सर्व एते हिन्दुपदवाच्याः स्युः; अवलम्बनीयधर्मदृष्ट्या तु नैते समे हिन्दुशब्दवाच्याः। किञ्चास्माकं धर्मः खलु विविधमतानां विभिन्नभावानां नानाविधानामनुष्ठानानां क्रियाकलापानां च समष्टिरिव—सर्वाण्येतानि

सहभावेन विराजन्ते; परं नैवास्त्येषां साधारणं नाम किमपि, न वा मण्डली, न वा संघबद्धं प्रतिष्ठानम्। एतस्मादेव कारणादेकेन साधारणेन सर्ववादिसम्मतेन वाभिधानेनाभिधानमस्यातीव कठिनम्। मन्य एकस्मिन्नेव विषये समे सम्प्रदाया अस्माकं समानमतानुयायिनः, सर्वे वयमस्माकं शास्त्रे — वेदे विश्वसिनः। मन्ये निश्चितमिदं यद्यो जनो वेदस्य सर्वोच्चप्रामाण्यं नाङ्गीकरोति, तस्य स्वात्मनो हिन्दुधर्मीयत्वेन परिचयप्रदानेऽधिकारो नास्ति।

सर्वे यूयं जानीथ—वेदसमूहोऽयं विभागद्वये आसीनः—कर्मकाण्डं ज्ञानकाण्डं च। कर्मकाण्डे नानाविधयज्ञानामनुष्ठानपद्धतेश्च वर्णनमस्ति—तेष्वधिकाधिका एवाद्यत्वेन प्रचलन्ति। ज्ञानकाण्डे वेदस्याध्यात्मिकोपदेशसमूहो निबद्धः। तच्च काण्डमुपनिषन्नाम्ना वेदान्तनाम्ना वा परिचीयते। द्वैतवादिनो विशिष्टाद्वैतवादिनोऽद्वैतवादिन आचार्या दार्शनिकाश्च सर्व एव तद् उच्चतमप्रमाणरूपेणाङ्गीकृतवन्तः। भारतीयैः प्रत्येकं दर्शनैः प्रत्येकं सम्प्रदायैश्च प्रदर्शनीयं यत् तद् दर्शनं स सम्प्रदायो वा उपनिषद्रूपभित्तौ प्रतिष्ठते इति। यदि कश्चित् तत्प्रदर्शनासमर्थो भवति, तदा तद् दर्शनं स सम्प्रदायो वा प्रचलितधर्ममतविरोधिरूपेण परिगण्यते। तस्माद् वर्तमानकाले समग्रभारतस्य हिन्दवश्चेत् केनचित् साधारणनाम्ना परिचाययितुमिष्यन्ते, ते तर्हि 'वैदान्तिकाः' 'वैदिकाः' इत्येतद्द्वयोर्मध्ये युष्माकमभीप्सितेन येन केनापि पार्यन्तेऽभिधातुं यथार्थम्। अहं च 'वैदान्तिकधर्मः' 'वेदान्तः' इति शब्दद्वयं सर्वदा तस्मिन्नेवार्थे व्यवहरामि।

इतोऽपि किञ्चित्स्पष्टतया बोधयितुमिच्छामि, यत इदानीं वेदान्तदर्शनस्य 'अद्वैत'-व्याख्याया एव 'वेदान्त'-शब्दसमार्थकरूपेण प्रयोग-

करणमधिकांशजनानां रीतौ पर्यवसितम्। सर्वे वयं जानीम उपनिषदमवलम्ब्य येषां विभिन्नानां दर्शनानां सृष्टिस्तेष्वद्वैतवादोऽन्यतम इति। उपनिषदि यादृशी भक्तिर्विद्यतेऽद्वैतवादिनां तथैव समस्ति विशिष्टाद्वैतवादिनामपि। किं चाद्वैतवादिनस्तेषां दर्शनं वेदान्तप्रमाणोपरि प्रतिष्ठितमिति यथा समुद्घोषयन्ति, तथैवाद्वैतवादिनोऽपि। द्वैतवादिनोऽन्ये च भारतीयाः सम्प्रदाया एवं कुर्वन्ति। तथापि साधारणजनानां मनसि वैदान्तिकोऽद्वैतवादी च समार्थकौ संवृत्तौ; भवितुमर्हति कारणमप्यस्ति तस्य किञ्चिदिति।

यद्यपि वेद एवास्माकं प्रधानं शास्त्रं तथापि वेदपरवर्तिनी स्मृतिपुराणे अपि नः शास्त्रे, यतस्तयोर्वेदस्यैव मतं विस्तृततया व्याख्यातं समर्थितं चास्ति नानाविधदृष्टान्तद्वारा। नैते वेदवत् प्रामाणिके। किञ्चेदमपि शास्त्रविधानं यद् यत्र श्रुतिस्मृत्योर्विरोधस्तत्र श्रुतिमतं ग्राह्यं हेयं च स्मृतिमतमिति। अद्वैतकेशरिशङ्कराचार्यस्य तदनुगामिनामाचार्याणां च व्याख्यायां प्रमाणरूपेणोपनिषदोऽधिकतयोद्धृता इति वयमधुनावलोकयामः। केवलं यत्रैतादृशविषयस्य व्याख्यानेन प्रयोजनं यः श्रुतौ केनापि रूपेण न प्राप्यते—तादृशेष्वल्पेषु स्थलेष्वेव केवलं स्मृतिवाक्यानि समुद्धृतानि। इतरेतरमतवादिनस्तु श्रुत्यपेक्षयाधिकतया स्मृतिनिर्भराः; यावद् वयं द्वैतवादिसम्प्रदायसमूहं पर्यालोचयामस्तावदेवावलोकयामस्तैरुद्धृतानि स्मृतिवाक्यानि श्रुतिवाक्यापेक्षया एतावत्परिमाणेनाधिकानि यानि वैदान्तिकेभ्यस्तानि नापेक्षणीयानि। मन्येऽत्रभवन्तः स्मृतिपुराणादिप्रमाणानामुपर्येतावदधिकपरिमाणेन निर्भरशीलाः संवृत्ता यत् कालक्रमेणाद्वैतवादिन एव यथार्थवैदान्तिकरूपेण परिगणिता अभवन्।

यद्वा भवतु नाम, पूर्वमेवास्माभिरवलोकितं वेदान्तशब्दद्वारा भारतीयधर्मसमष्टिरवगन्तव्येति। किञ्च वेदान्तः खलु वेद इत्यतोऽयं सर्वसम्मतिक्रमेणास्माकं प्रत्नतमो ग्रन्थः। आधुनिककोविदानां मतं यद्वा भवतु नाम, नैव हिन्दवः प्रस्तुता विश्वसितुं विषयेऽस्मिन् यद् वेदस्य कश्चिदंश एकस्मिन् समयेऽपरश्चांशोऽन्यस्मिन् समये लिखित इति। हिन्दवः किलेदानीमपि दृढं विश्वसन्ति समग्रवेद एकस्मिन् समये समुत्पन्न इति, अथवा यदि ममैतादृशभाषाप्रयोगे कस्याप्यनिष्टापत्तिर्न स्यात्—वेदः कदापि न सृष्टः, सर्वदैव सृष्टिकर्तुर्मनसि स आसीदिति। 'वेदान्त'-शब्दद्वाराहं तमनाद्यनन्तज्ञानराशिमेव बोधयामि, भारतस्य द्वैतवादो विशिष्टाद्वैतवादोऽद्वैतवादः—सर्व एव तस्मिन्नन्तर्भूताः। सम्भवितुमर्हति यद् वयं बौद्धधर्मस्य किञ्च जैनधर्मस्याप्यंशविशेषं स्वीकर्तुं शक्नुमः—उक्तधर्मावलम्बिनश्चेदनुग्रहपूर्वकमस्माकं मध्य आगन्तुं सम्मताः। हृदयं किलास्माकं प्रशस्तं यथेष्टम्—वयं तु तत्रभवतो ग्रहीतुं प्रस्तुताः—तत्रभवन्त एवायान्तुमसम्मताः। अनायासमेव वयं प्रस्तुतास्तत्रभवतोऽङ्गीकर्तुम्; यतो विशेषरूपेण विश्लेषणे कृते दृश्यते—बौद्धधर्मस्य सारभागस्ताभ्य उपनिषद्भ्य एवाचितः खल्विति; किं बहुना? बौद्धधर्मस्य नीतिः—तथाकथितमद्भुतं महच्च नीतितत्त्वम्—कस्याञ्चिदप्युपनिषद्यविकलं वर्तते। एवं जैनानामप्युत्कृष्टमतानि विद्यन्त उपनिषदि, न सन्ति केवलमयौक्तिकसिद्धान्ताः।

परवर्तिकाले भारतीयधर्मचिन्ताया याः काश्चित् परिणतयः समघटन्त तासां बीजमस्माभिरुपनिषदि द्रष्टुं शक्यते। कदाचित्तु विना युक्तिमभियुज्यत उपनिषदि भक्तेरादर्शो नास्तीति। ये केचिदुपनिषदो

विशेषतयाध्ययनं कुर्वन्ति, जानन्ति तेऽभियोगोऽयं कथमपि यथार्थं नेति। अनुसन्धाने सम्पादिते प्रत्येकमुपनिषदि भक्तेरुल्लेखो यथेष्टं प्राप्यते। परमन्येऽन्ये नैके विषया ये परवर्तिकाले पुराणेषु स्मृतिषु च विशेषरूपेण परिणतिं प्राप्य फलपुष्पशोभितमहीरुहस्याकारं धृतवन्तस्ते खलूपनिषदि बीजभावेन वर्तमानाः। उपनिषदि चित्रस्य प्रथमरेखापाततया प्रथमावयवसंस्थानरूपेणेव वा विद्यन्ते ते। कस्मिन्नपि पुराणे तानि चित्राणि परिस्फुटितानि, कङ्कालसमूहे मांसशोणितसंयोगः संसाधितः। परन्त्वीदृशः सुपरिणतः कश्चन भारतीय आदर्शो नास्ति, यस्य बीजं नाप्यते तस्यां सर्वभावखनिस्वरूपायामुपनिषदि। सम्यक्तयोपनिषदो ज्ञानं नार्जितवन्तो ये तादृशाः केचन जनाः प्रमातुं हास्यास्पदं प्रयासं कृतवन्तो भक्तिवादो विदेशादागत इति; परं सर्वे यूयं जानीथ तेषां सर्वाश्चेष्टा व्यर्थाः संवृत्ता इति। युष्माकं यावत्या भक्त्या प्रयोजनं तावती सर्वैवोपनिषदः कथायां संहितायां वा वर्तते—उपासना प्रेम भक्तितत्त्वम्—यत् किमप्यावश्यकं सर्वमस्ति; केवलं भक्तेरादर्श उच्चादुच्चतरः संवृत्तः। संहिताभागे कदाचिद्भीतिप्रसूतधर्मस्य निदर्शनं प्राप्यते। संहिताभागे कुत्रचिद्दृश्यत उपासको वरुणस्यान्यस्य कस्यापि वा देवस्य सम्मुखे भयात् कम्पमान इति। परन्तूपनिषत्स्वेतत्सकलवर्णनायाः स्थानं नास्ति। नास्त्युपनिषदि भीतेर्धर्मः; उपनिषदो धर्मः प्रेम, उपनिषदो धर्मो ज्ञानमिति।

एता उपनिषद एवास्माकं शास्त्रम्। विभिन्नप्रकारेण व्याख्याता एताः। अहं च प्रागेवोक्तवान्वः परवर्तिनोः पौराणिकशास्त्रवेदयोर्मध्ये यत्रैव प्रभेदः परिलक्षितो भविष्यति, तत्रैव पुराणमतमवमत्य वेदमतमेव ग्रहीतव्यमिति।

परन्तु वस्तुस्थितिरेषा यत् प्रतिशतं नवतिर्जना वयं पौराणिकाः शिष्टाश्च प्रतिशतं दश जना वैदिका इति—तदपि पुनर्भवति न वेति संशीतिः। पुनश्च दृश्यतेऽस्मासु नानाविधोऽत्यन्तं विरोध्याचारो विद्यमान इति; परिलक्ष्यतेऽस्माकं समाज एतादृशानि धर्ममतानि सन्ति येषां किमपि प्रमाणं नास्ति हिन्दुशास्त्रे। अपि च शास्त्रपाठेनावलोकयामो वयमवलोक्याश्चर्यान्विताश्च स्मो यद् अस्माकं देशेऽनेकत्रैतादृश्यः प्रथाः प्रचलिताः सन्ति, यासां प्रामाण्यं वेदे स्मृतौ पुराणे कुत्रापि नास्ति—केवलं विशिष्टा देशाचारा एव ताः। तथापि प्रत्येकमज्ञो ग्रामवासी मन्यते तस्य ग्राम्याचारस्योच्छेदे सति तिरोभविष्यति तस्य हिन्दुत्वमपीति। वैदान्तिकधर्मः क्षुद्रातिक्षुद्राः सर्व एते देशाचाराश्च तस्य मनसि सम्बद्धा अच्छेद्यतया। शास्त्रपाठं कृत्वापि न स बोद्धुं पारयति—स यत् करोति तस्मिन् शास्त्रस्य सम्मतिर्नास्तीति। तत्तदाचारपरिहारद्वारा क्षतिस्तस्य कापि न भविष्यति, पक्षान्तरे स पूर्वापेक्षयोन्नततरो भविष्यति, भविष्यति च यथार्थो मानुष इति बोधस्तस्यातीव काठिन्येन सञ्जायते। द्वितीयतः—एकञ्चापरमसौविध्यम्—शास्त्रमस्माकमतिबृहदसंख्यञ्च। पतञ्जलिप्रणीतमहाभाष्यनामकशास्त्रे पठ्यते सामवेदस्य सहस्रं शाखा आसन्निति। कुत्र ता गता इति कोऽपि न जानाति। एवं प्रत्येकं वेदविषये। एतत्सकलग्रन्थानामधिकांशो लुप्तः, स्वल्पांश एवास्मत्समीपेऽवशिष्यते। एकैक ऋषिपरिवार एकैकस्याः शाखाया भारं गृहीतवान्। एतत्सकलपरिवाराणामधिकांशानामेव स्वाभाविकनियमानुसारं वंशलोपः संघटितः, उत वा वैदेशिकेनात्याचारेणान्येन वा केनापि कारणेन तत्रभवतां विनाशः

समघटत। तत्रभवद्भिश्च सह तत्रभवन्तो वेदस्य यस्य शाखाविशेषस्य रक्षणभारं गृहीतवन्तः सोऽपि लोपं गतः। विषयोऽयमस्माभि-र्विशेषरूपेण मनसि निधातव्यो यतो ये नूतनं किमपि प्रचारयितु-मिच्छन्ति, वेदविरोधिनः कस्यापि विषयस्य समर्थनं वा कर्तुं वाञ्छन्ति — तेषामेषा युक्तिश्चरमावलम्बनरूपेण समायाति। यदैव भारते श्रुतिं देशाचारं चाश्रित्य तर्कोपस्थितिर्यदैव च स देशाचारः श्रुतिविरुद्ध इति प्रदर्श्यते, तदैवापरः पक्ष एवमुत्तरं ददाति — 'न, नासौ श्रुतिविरुद्धः, श्रुतेस्तासु शाखास्वसावासीद् या अधुना लुप्ता। प्रथा चासौ श्रुतिसम्मता' इति। शास्त्रस्यैतादृशटीकाटिप्पणीमध्यतः कस्यापि साधारणसूत्रस्य निष्कासनमवश्यमेवातीव कठिनम्। परन्त्वनायासमेव बोद्धुं पार्यते समेषामेषां विभागानामुपविभागानां च साधारणमेकं मूलमस्ति निश्चप्रचमेवेति। अट्टालिकायाः क्षुद्रा अंशा अवश्यमेव साधारणं परिकल्पनमेकमनुसृत्य निर्मिताः। यानि वयं धर्म इति कथयाम आपातविशृङ्खलानां तेषां मतानां निश्चितमस्ति कापि साधारणभूमिरन्यथा स (धर्मः) समय-मेतावन्तं यावदवस्थातुं नापारयिष्यन्न च सोढुमशक्ष्यत्।

पुनश्चास्माकं भाष्यकाराणां भाष्याणामालोचनकालेऽपरैका बाधा समायाति —अद्वैतवादिभाष्यकारो यदा श्रुतिमद्वैतपरां व्याख्याति तदा स तस्या अर्थं साक्षात् स्वीकरोति; परं स एव यदा द्वैतपरकश्रुति-व्याख्याव्यापृतस्तदा तस्या अर्थं विकृत्य ततोऽद्भुतमद्भुतमर्थ-माविष्करोति। स्वाभीप्सितार्थसम्प्राप्तये भाष्यकारः क्वचित् क्वचिद् अजा (जन्मरहिता)-शब्दस्य छागीत्यर्थमपि स्वीकृतवान् — कीदृशमद्भुतं

परिवर्तनम्! द्वैतवादिभाष्यकारा अप्येवम्, किञ्च इतोऽपि विकृतरूपेण श्रुतेर्व्याख्यां कृतवन्तः। यत्र यत्र तत्रभवन्तो द्वैतपरकश्रुतीः प्राप्तवन्तस्तत्र तत्र ता यथायथं रक्षितवन्तः, परं यत्रैवाद्वैतवादप्रसङ्गः समायातस्तत्रैव तत्रभवन्तस्तासां श्रुतीनां यथेच्छं व्याख्यानं कृतवन्तः। एषा भाषा जटिलैतादृशी — वैदिकसंस्कृतमेतावत्प्राचीनं, संस्कृतशब्दशास्त्रमित्थं सुपरिणतं यद् एकैकस्य शब्दस्यार्थमाश्रित्य युगयुगान्तरव्यापी तर्कः प्रसर्तुं शक्नोति। कस्यापि पण्डितस्याभीप्सा भवति चेत्, तत्रभवान् यां काञ्चनार्थहीनामुक्तिमपि युक्तितर्कबलेन, शास्त्रस्य व्याकरणस्य च नियमानुद्धृत्य शुद्धसंस्कृतरूपेण प्रतिपादयितुं पारयति। उपनिषद्बोधे बाधाविघ्ना एते विद्यन्ते। विधातुरिच्छयाहमेतादृशस्य कस्यचन जनस्य साहचर्यलाभस्य सुयोगं प्राप्तवान्, आसीद् य एकतो यथा परमो भक्तस्तथैवान्यतः परमज्ञानी। अस्यैव जनस्य शिक्षया केवलं भाष्यकाराणामन्धानुसरणमकृत्वा स्वाधीनतयोत्कृष्टरूपेणोपनिषदः शास्त्राण्यन्यानि चेदम्प्रथमतया बोद्धुं समर्थोऽभवम्। विषयेऽस्मिन्नहं यत्किञ्चनानुसन्धानं कृतवान्, तद्द्वारा सिद्धान्तेऽस्मिन् समुपनीतो यत् सर्वाण्येतानि शास्त्रवाक्यानि न परस्परविरोधीनि। तस्मादस्माभिः शास्त्रस्य विकृतवाख्यानेन किमपि प्रयोजनं नास्ति। श्रुतिवाक्यानि खल्वतीव मनोरमान्यन्यन्ताद्भुतानि तानि न पुनर्मिथोविरोधीनि, तेषां मध्येऽपूर्वं सामञ्जस्यं समस्ति, तत्त्वमेकमपरस्य सोपानस्वरूपमिव। एतासूपनिषत्स्वेवैको विषयो विशेषतया मया परिलक्षितो यत् प्रथमं द्वैतभावस्य कथाः उपासनादय आरब्धाः, अन्तिमे चाद्वैतभावस्यापूर्वोच्छ्वासेन समाप्तिमाप्तास्ताः।

अतोऽधुनास्य महापुरुषस्य जीवनालोकेनाहं पश्यामि यद् द्वैतवादिभिरद्वैतवादिभिश्च परस्परं विवादेन किमपि प्रयोजनं नास्ति। जातीयजीवन उभयोरेव विशिष्टं स्थानमस्ति। द्वैतवादी स्थास्यत्येव—अद्वैतवादिन इव द्वैतवादिनोऽपि विशिष्टं स्थानमस्ति जातीयधर्मजीवने। एकं विहायापरं स्थातुं नार्हति, एकोऽपरस्य परिणामः; यथैको भित्तिरपरश्च छदिः, यथैको मूलं फलं चापरः।

पुनश्चोपनिषदः शब्दार्थयोर्विकृतिसाधनायासौ मत्सकाशमतीव हास्यास्पदं प्रतिभाति; यतोऽहं पश्यामि तस्या भाषैवापूर्वेति। श्रेष्ठदर्शनरूपेण तस्या गौरवं त्यजतु नाम, त्यजतु नाम गौरवमद्भुतं तस्या मनुष्यजातेर्मुक्तिमार्गनिदेशकधर्मविज्ञानरूपेण वा, औपनिषदिकसाहित्ये महतो भावस्य यथातीवापूर्वं चित्रमस्ति, जगति कुत्राप्यन्यत्र तथा नास्ति। अत्रैव मनुष्यमनसस्तद्व्यक्तिभावापन्नं वैशिष्ट्यम् — अन्तर्दृष्टिपरायणं हिन्दुमनस्तत् परिपूर्णशक्त्यात्मप्रकाशं कुरुते।

इतरेतरसकलजातिष्वेवास्य महतो भावस्य चित्राङ्कनचेष्टा परिलक्ष्यते; परं प्रायः सर्वत्रैव दृश्यते, ताः खलु बाह्यप्रकृतेर्महान्तं भावं धर्तुं चेष्टां कृतवत्यः। उदाहरणतया मिल्टन-दान्ते-होमरादीनामन्यस्य कस्यापि वा पाश्चात्त्यकवयितुः काव्यस्यालोचना कर्तुं पार्यते, तत्रभवतां काव्ये क्वचित् क्वचिन्महत्त्वव्यञ्जकापूर्वश्लोकावल्यवलोक्यते, परं तत्र सर्वत्रैवेन्द्रियग्राह्यबहिःप्रकृतेर्वर्णनायाश्चेष्टा—वहिःप्रकृतेर्विशालभावस्य, देशकालयोरनन्तभावस्य वर्णना। वेदस्य संहिताभागेऽप्येषा चेष्टास्माभिः परिलक्ष्यते। सृष्ट्यादिवर्णनात्मकेषु केषुचिदृङ्मन्त्रेष्वपूर्वेषु वाह्यप्रकृतेर्महान्

भावो देशकालयोरनन्तत्वमतिगम्भीरभाषया वर्णितम्, परन्तु तत्रभवन्तः शीघ्रमेवावलोकितवन्त इव यदुपायेनानेनानन्तस्वरूपं न पार्यते प्राप्तुम्; अवगतवन्तस्तत्रभवतां चित्तस्य यान् यान् भावांस्तत्रभवन्तो भाषया प्रकाशयितुं चेष्टां कुर्वन्ति, अनन्तदेशः—अनन्तविस्तारः—अनन्त-वाह्यप्रकृतिरपि तान् प्रकाशयितुमक्षमाः। तत्रभवन्तस्तदा जगत्समस्या-व्याख्यानाय मार्गान्तरमवलम्बितवन्तः।

उपनिषदो भाषा नूतनां मूर्तिं धृतवती—उपनिषदां भाषा प्रायेण नास्तिभावद्योतिका, क्वचित् क्वचिदस्फुटा सा त्वामतीन्द्रियराज्यं नेतुं चेष्टमानेव; किन्तु मार्गार्धं गत्वैव क्षान्ता निवृत्ता सती तुभ्यं केवलं धारणातीतस्यैकस्यातीन्द्रियस्य वस्तुन आभासं ददाति, तथापि तस्य वस्तुनोऽस्तित्वविषये तव कोऽपि सन्देहो न तिष्ठति। जगत्येतादृशी कविता क्व यया सह श्लोकस्यास्य तुलना भवितुमर्हति? —

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः। इति।[1]

— सूर्यस्तत्र न प्रकाशते न चन्द्रो न वा तारा; इमा विद्युतोऽपि न प्रकाशन्ते; किमुताग्निः?

पृथिव्याः समग्रदार्शनिकभावस्य पूर्णतरं चित्रं क्वान्यत्र प्राप्स्यसि? हिन्दुजातेः समग्रचिन्ताया मानवजातेर्मुक्तेः सामग्रिककल्पनायाः सारांशो यथाद्भुतभाषया चित्रितो यथापूर्वरूपकेण वर्णितोऽस्ति, तथा क्व चान्यत्र प्राप्स्यसि?

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।।
समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः।।
यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति।।' इति[२]।

एकस्यैव वृक्षस्योपरि सुन्दरपक्षयुक्तौ पक्षिणौ वर्तेते—उभावेव परस्परं सख्यभावापन्नौ तन्मध्य एकस्तस्य वृक्षस्य फलं खादति, अपरस्त्वभुञ्जानः स्थिरतया नीरवमुपविष्टोऽस्ति। निम्नशाखायामुपविष्टः पक्षी कदाचित् मिष्टं कदाचिद्वा कटु फलं भुङ्क्ते, तस्माच्च कारणात् कदाचित् सुखी, कदाचिद्वा दुःखी सञ्जायते; परन्तूपरितनशाखायाः पक्षी स्थिरतया गम्भीरभावेण चोपविष्टः—मन्दममन्दं न किमपि फलं स खादति, सुखे दुःख उभयोरेवोदासीनः सः—निजमहिम्नि मग्नोऽसौ। विहगद्वयमेतत् खलु—जीवात्मा परमात्मा च। मनुष्यात्मन इदमेव यथार्थमालेख्यम्। मनुष्य इहजीवने स्वादु कटु च फलं भुङ्क्ते—कदाचित् स काञ्चनान्वेषणे मत्तः—इन्द्रियमनु धावन्नस्ति स संसारस्य वृथा क्षणिकसुखस्य कृते प्राणपणं धावति प्रमत्त इव।

अन्यत्रैकत्रोपनिषत् सारथिना तस्यासंयतेन दुष्टेनाश्वेन च मनुष्यस्येन्द्रियसुखान्वेषणस्य तुलनां कृतवती।[३] मनुष्य एवंप्रकारेण जीवनस्य वृथासुखानुसन्धानचेष्टया धावन्नस्ति। जीवनस्योषाकाले मानवः कियतः सुखस्वप्नान् पश्यति; परन्तु शीघ्रमेव बोद्धुं पारयति, ते स्वप्ना एव

—वार्धक्ये स तु तस्यातीतकर्मसमूहस्यैव रोमन्थनं कुर्वंस्तिष्ठति, पुनरावृत्तिं कुर्वन्नास्ते, परं कथमस्माद् घोरसंसारजालाद्बहिर्गमिष्यतीति तस्योपायमन्विष्य न कमपि प्राप्नोति। नियतिरेषा मनुष्यस्य। परन्तु सर्वेषामेव मनुष्याणां जीवने कदाचिदीदृशशुभमुहूर्तसमागमः संघटते—गभीरतमशोके, किञ्च गभीरतमानन्दमध्येऽपि मानवस्यैतादृशं शुभक्षण-मुपतिष्ठति, यदा सूर्यालोकावरोधकारिणस्तस्य मेघस्य कियदंशः क्षणम-पसरतीव। तदा वयमस्माकं सीमाबद्धभावविशिष्टत्वेऽपि क्षणं तस्याः सर्वातीतसत्ताया दर्शनं लभामहे विद्युल्लेखावत्; दूरे, दूरे—पञ्चेन्द्रिया-बद्धजीवनाद् बहुदूरे—अस्य संसारस्य व्यर्थभोगसुखदुःखेभ्यो बहुदूरे—दूरे दूरे—प्रकृतेः परपारे—इहलोके परलोके वा यस्य सुखभोगस्य कल्पनां कुर्मो वयम्, तस्माद्बहुदूरे, वित्तैषणालोकैषणाप्रजैषणाभ्यो बहुदूरे—मनुष्यः क्षणं दिव्यदृष्टिं समासाद्य स्थिरभावमवलम्बते, तदासौ वृक्षस्योपरिभागेऽवस्थितस्यापरपक्षिणः शान्तं महिममयं रूपं पश्यति; पश्यति स—वायसोऽसौ स्वादु कटु वा न किमपि फलं भुङ्क्ते—आत्ममहिम्नि निमग्नः स्वयम्, आत्मतृप्त इति। यथोक्तं गीतायाम्—

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते।।' इति।

— य आत्मरतिरात्मतृप्त आत्मन्येव सन्तुष्टश्च, तस्य किमपि कार्यं न पुनरवशिष्यते। कथं वा स कार्यसम्पादनेन कालयापनं कुर्यात्?

वारमेकं क्षणप्रभालेखावद् दर्शनमवाप्य मनुष्यो विस्मरति, पुनरपि संसारवृक्षे स्वादु तथा तिक्तं च फलं खादति—तदा न किमपि तस्य

स्मरणसरणिं समायाति। भवितुमर्हति यत् कियद्दिनेभ्यः परं स पुनरेकवारं पूर्ववच्चञ्चलालेखातुल्यं लभते दर्शनम्, यावच्चाघातमाप्नोति, तावदेवासौ निम्नशाखास्थितपक्षी क्रमेण निकटवर्ती भवति सुपर्णस्यो-परितनस्य। सौभाग्यवशात् क्रमेण स संसारात्तीव्रमाघातमाप्नोति चेत्, यस्तस्य सहचरः—तस्य प्राणाः—तस्य सखा—अपरसुपर्णस्य तस्य क्रमशः समीपवर्ती भवति। यावच्च सोऽधिकतरनिकटवर्ती भवति, तावदेव पश्यति—उपरिस्थितस्य तस्य पक्षिणो देहज्योतिरागत्य तस्य पक्षौ परितः क्रीडतीति; यावदेव समीपवर्ती भवति, तावदेव तस्य रूपान्तरं संघटते। क्रमेण यावदेव स निकटान्निकटतरो भवति, यावदेव पश्यति—स विलीयत इव; अन्तिमे च सम्पूर्णतया विलीनो भवति। तदा स बोद्धुं पारयति—पृथगस्तित्वं तस्य नासीत् कस्मिन्नपि काले, पत्रराशिमध्ये सञ्चरणशीलः स सुपर्णः शान्तं गम्भीरमुपविष्टस्यापरपक्षिणः प्रतिविम्बमात्रम्। तदा स ज्ञातुं पारयति—स स्वयमेवासौ वायस उपरितनः, स सर्वदैव शान्तभावेनावातिष्ठत; महिमा चासौ तस्यैवेति। भयं किञ्चन न तिष्ठति तदा, तदा सम्पूर्णतस्तृप्तः सन् धीरतया शान्तभावेनावतिष्ठते। रूपकेणानेनोपनिषद् युष्मान् द्वैतभावादारभ्य चूडान्ताद्वैतभावभूमिमुपनयति।

उपनिषदोऽस्यापूर्वकवित्वस्य, महत्त्वव्यञ्जकचित्रस्य, महोच्चभाव-समूहस्य च प्रदर्शनाय शतान्युदाहरणान्युल्लेखितुं पार्यन्ते, परन्तु वक्तृ-तायामस्यामस्माकं न पुनरवशिष्यते समयः। तथापि वक्तुमुत्सहे किञ्चिद् यद् उपनिषदो भाषा भाव इत्यादीनां केषाञ्चिदपि मध्ये कापि जटिलता नास्ति, अस्याः प्रत्येकं वाण्येवासिधारेव, मुद्गराघातवत् साक्षादाहन्ति हृदयम्। तासामर्थबोधे काचिदपि भ्रमसम्भावना नास्ति —सङ्गीतस्य

तस्य प्रत्येकं स्वरस्यैका शक्तिरस्ति, प्रत्येकं (स्वरः) तस्य सम्पूर्णं भावं हृदये मुद्रितं करोति। वक्रता कापि नास्ति, नास्त्यसम्बद्धः प्रलाप एकोऽपि, नास्ति वाक्यमेकमपि जटिलं यद् विघूर्णयति मस्तकम्। तस्यामवनतेर्लेशोऽपि नास्ति, नास्ति प्रयासश्चात्यधिकरूपकवर्णनायाः। विशेषणात् परं विशेषणं प्रदाय भावः क्रमेण जटिलीकृतः प्रकृत-विषयश्च सम्पूर्णतयाच्छादितः, मस्तिष्कं संशयसमाकुलितं सञ्जातं, तदा शास्त्ररूपगोलकप्रहेलिकातो वहिरागमनमार्गश्च नावशिष्टः—उपनिषदीदृशचेष्टाया न कोऽपि परिचयः प्राप्यते। इयं मनुष्यप्रणीता चेत्, साहित्यमिदं तादृश्या एवैकस्या जातेर्या तदापि तस्या जातीयेन तेजसा वीर्येण लेशमात्रेणापि न हीना। प्रतिपृष्ठमेषास्मभ्यं तेजसो वीर्यस्योपदेशं ददाति।

विषयोऽयं विशेषतया स्मरणीयो यत् समग्रजीवनेनाहं महाशि-क्षामेतां प्राप्तवान्—उपनिषद् वदति, हे मनुष्य! तेजस्वी भव, दुर्बलतां परिहर। कातरं जिज्ञासते मनुष्यः—किं मे नास्ति दुर्बलता? उपनिषद् वदति—आम्, अस्ति; परन्त्वधिकतरदुर्बलताद्वारा किमेषा दुर्बलता दूरीभविष्यति? दूरीभविष्यति किं मालिन्येन मालिन्यम्? पापेन किं पापं पार्यते दूरीकर्तुम्? उपनिषद् वदति, हे मनुष्य! तेजस्वी भव, तेजस्वी भव, उत्थाय दण्डायमानो भव, वीर्यावलम्बनं कुरु। जगतां साहित्येषु केवलमुपनिषद्येव 'अभीः' इति शब्दो वारं वारं व्यवहृतः—अन्यस्मिन् कस्मिन्नपि शास्त्र ईश्वरं मानवं वा प्रति 'अभीः' —भयरहितो वेति विशेषणं न प्रयुज्यते। 'अभीः'—भयशून्यो भव।

## पादटीका

१. कठोपनिषद् २.२.१५ ।

२. मुण्डकोपनिषद् ३.१.१-३ ।

३. गीता ३.१७ ।

# पवित्रभूमिः भारतवर्षम्

(राजपुतानाख्यसाम्राज्यान्तर्गतखेतडिराज्यस्य नृपतिना १८९४-तमे ख्रीष्टाब्दे मार्चमासस्य चतुर्थेऽहनि लिखितस्याभिनन्दनज्ञापकपत्रस्योत्तररूपेण लिखितमिदम्।)

हे राजन्! यदा हि धर्मस्य ग्लानिर्भवति अभ्युत्थानमधर्मस्य च जायते तदा धर्मगौरवस्य पुनःसंस्थापनार्थमात्मानं सृजाम्यहम् इति गीतामुखोच्चारिता इमाः सनातनभगवद्वाचो जगति आध्यात्मिकशक्तितरङ्गस्य मूलध्वनिरूपाः।

धर्मजगति परिवर्तनमेतत् पौनःपुन्येन तदीयनवनवविशिष्टच्छन्दसा प्रकाशते, यद्यपि बृहत्परिवर्तनेतराणीव इदमपि परिवृत्तिजातं स्वायत्त-वस्तुषु आधिपत्यं वितनुते तथापि शक्तिधरक्षमेषु वस्तुषु एव तदीय-कार्यकारित्वं समधिकां प्रकाश्यतां धत्ते।

विश्वान्तर्गततया यथा जगत आद्या दशा गुणत्रयस्य साम्यावस्था, साम्यस्यास्य विच्युत्यर्थं पुनःप्राप्त्यर्थं च विधीयमानं प्रयास-समूहमासाद्यैव प्रकृतेः प्रसारो जगदुत्पत्तिर्वा; यावन्न साम्यदशेयं पुनरा-याति तावदयं क्रम आवर्तते, सीमाबद्धतया तथैवास्मद्धरण्यां यावन्मनु-ष्यजातेरित्थं स्थितिस्तावत्पर्यन्तं विषमभावस्तथा तदपरिहार्यतया परि-पूरकीभूता साम्यलाभप्रचेष्टा चेत्युभयं मिथः पार्श्विकत्वेन स्थास्यति।

पृथिव्यां सर्वत्र भिन्नभिन्नजात्यभ्यन्तरे उपजातीनां मध्ये प्रत्येकं च पुंस्यपि स्थास्यति सुस्पष्टं वैशिष्ट्यम्।

अतएव नैरपेक्ष्येण साम्योपकल्पनात् सर्वेभ्यः शक्तौ प्रदत्तायामपि जातिषु प्रत्येकमपि शक्तिविशेषस्यादानार्थं संग्रहार्थं च वितरणोपयोगि अपूर्वं यन्त्रतुल्यम्; तासु जातिषु शक्त्यन्तरबाहुल्ये विद्यमानेऽपि स शक्तिविशेष एव तत्तज्ज्ञातेः विशिष्टपरिचयरूपेण सोज्ज्वलं प्रकाशते। मनुष्यप्रकृतौ भावतरङ्गोदये न्यूनतयाधिकतया वा तत्प्राबल्ये सर्वैरनुभूतेऽपि पूर्वोक्तभावो यज्ज्ञातेः विशिष्टलक्षणं यज्ज्ञातिश्च केन्द्रीकृत्य तादृशभावस्योदयस्तज्ज्ञातेरेवान्तःस्थलमान्दोलितं भवति। एतस्माद्धेतोः धर्मजगति कस्यचिदान्दोलनस्योपस्थितौ तत्प्रभावेन भारते नूनं नानाविधानि गुरुतराणि परिवर्तनानि भवेयुः, भारतं केन्द्रीकृत्य बहुविस्तृतधर्मतरङ्गाणां समूहो भूयशः समुत्थितो यतो हि प्रथमतया भारतं हि धर्मभूमिः।

यद्द्वारा आदर्शलाभे सौकर्यं जायते, मनुष्यास्तदेव वास्तवरूपेण गणयन्ति। सांसारिकनराणां सविधे यद्विनिमयेनार्थागमस्तदेव सत्यं, यद्विनिमयेन चार्थागमो न जायते तदसत्यम्। प्रभुत्वविषयिणी वासना यस्य तत्प्रकाशे येन सकलप्राणिषु प्रोक्तवासना चरितार्थतां व्रजति सैव सत्यत्वेन प्रतिभाति, इतरत्सर्वं मिथ्यायते। यज्जीवने प्रीतिविशेषस्य प्रतिध्वनिं न जनयति तदन्तःसारशून्यमिव पश्यति नरः।

जीवनस्य समुदयशक्तिविनिमयेन काञ्चनयशोभोगादिजन्यसुखार्जनमेव येषामेकमात्रं लक्ष्यं, समरसज्जया सुसज्जितचमूसमूहस्य युद्धाभियानमेव

बलविकाशाय येषामनन्योपायः, इन्द्रियसुखमेव येषां सविधे सर्व-सुखातिशायि तेषां समक्षं भारतभूमिर्महामरुरिव प्रतीयते; तेषां सविधे जीवनविकाशरूपेण यदत्यन्तपरिचितं, तेषां कृते तादृशमरोः प्रत्येक-मपि तत्क्षणोत्थितः प्रबलवातो दुःखावसानाय कल्पते।

किन्तु येषां जीवनतृष्णा इन्द्रियजगतोऽतिदूरावस्थिताया अमृतस्यन्दन्याः पयःपानेन प्रशमिता, अहेर्जीर्णत्वक्तुल्यकामकाञ्चनयशःस्पृहारूपं त्रिविध-बन्धनं यैरन्तःकरणाद्दूरे निक्षिप्तं, चित्तस्थैर्यस्य सोन्नतशिखरमधि-रूढैर्यैरिन्द्रियपाशबद्धनृणां भोगाख्यापातरम्यद्रव्यजन्यान् म्लेच्छजनो-चितकलहविवादद्वेषादीन् प्रति प्रीतिप्रसादोभयगर्भदृक्पातः क्रियते, सञ्चितसत्कर्मजन्यफलेनोन्मोचितचक्षुर्द्वयापसृताज्ञानावरणतया क्षमाश्च ये नामरूपातिक्रमियथार्थसत्यदर्शने, क्वापि ते निवसन्तु नाम, तेषां नयन-योराध्यात्मिकत्वस्य जन्मभूमिरक्षयनिधिश्चेदं भारतवर्षं भिन्नतया प्रति-भातम्; शून्ये विलीयमाना छायेव यो जगति एकमात्रं सत्पदार्थः, तत्सन्धानरतेषु प्रत्येकं साधकस्य सविधे भारतं तावदाशाया आलोक-तया प्रतीयते।

मनुष्येषु नैकैः शक्तिस्तदैव यथायथमवगन्तुं शक्या यदा सा बोधानुकूल-स्थूलवस्त्वाकारेण समक्षं प्रस्तूयते, तेषां सम्मुखे युद्धोत्तेजनमेव शक्तेः प्रत्यक्षविकाशरूपेण प्रतीयते, यदेव च झञ्झेव सम्मुखस्थं सर्वं सुदूरे नेतुं नालं तद्धि तेषां दृष्टौ मृतितुल्यम्। अतः शतशः शताब्दावधिं यावत् भारतं प्रतिबन्धकतासृष्टौ निश्चेष्टं सद्वैदेशिकविजेतृगणस्य पदतले पतितं, यत्र जनता ऐक्यविरहिता, स्वदेशप्रेमभावना यत्र लेश-

तोऽपि स्वसत्तां न प्रमाणयति—तदेव भारतं तेषां सविधे विकृत्याप-न्नास्थिपरिपूर्णभूमिरूपेण स्तूपीकृतप्राणहीनविनष्टपदार्थरूपेण च प्रतीयेत।

योग्यतमस्यैव स्थितिरित्यस्ति भणितिः। परन्तु साधारणमतानुसारं सर्वापेक्षयायोग्यरूपेणाभिमता जातिः दुर्विषहदुर्भाग्यं भजमानापि किमर्थं न विनाशानुरूपलिङ्गं ज्ञापयति? वीर्यवत्त्वेन कर्मनिष्ठत्वेन च प्रथितस्य जातिसमूहस्य ओजः प्रतिदिनं क्षीयमाणं, पक्षान्तरे च दुर्नीतिपरा-यण(?)-हिन्दुजातेः शक्तिः सर्वापेक्षया विवृद्धिमेतीति कथङ्कारं घटते? मुहूर्तमध्ये यैर्जगदिदं शोणितसागरे प्लावयितुं शक्यं ते किल भृशं श्लाघार्हाः। लक्षसंख्यकान् कांश्चन जनान् ससुखान् विदधातुं यैः पृथिव्या अर्धसंख्यका नरो बुभुक्षिताः क्रियन्ते तेऽपि महागौरवाधि-कारिणः! किन्तु अन्यदीयमुखग्रासमविलुण्ठ्य लक्षशो मनुष्येभ्यः सुख-शान्ती प्रकल्पयितुं ये सक्षमास्ते किं न सम्माननीयाः? बहुशः शताब्द-पर्यन्तं लेशमात्रमपि परानिपीड्य लक्षशो मनुष्याणां भाग्यनियन्त्रणेन किं शक्तिर्न भवति प्रदर्शिता?

निखिलप्राचीनपुराणेषु एव दृश्यते यद्वीरपुरुषाणां प्राणास्तज्ज्ञातिस्थ-मनुष्याणां शरीरेषु कस्मिंश्चित् क्षुद्रांशे घनीभूतावस्थायामासन्। यावन्न तत्र करस्पर्शस्तावदासन्ते भेत्तुं दुःशक्याः। मन्यते यत्प्रत्येकं जातेरपि तद्वदेकस्मिन् केन्द्रविशेषे जीवनी शक्तिरासीत्संरक्षिता, तत्र करस्पर्श-पर्यन्तं दुःखोत्थिता विपत्काचिदपि तज्जातिं नाशयितुं न प्रभवति।

धर्म एव भारतस्य तादृशी जीवनी शक्तिः। यावन्न सनातनधर्मावल-म्बिनो हिन्दवः प्राक्तनपुरुषसकाशात्परम्पराप्राप्तज्ञानं विस्मरन्ति तावत्प-र्यन्तं जगति काचिदपि शक्तिरक्षमा तानुत्पाटयितुम्।

सततं स्वजातेरतीतं पश्यञ्जनो जुगुप्स्यते सर्वैः साम्प्रतम्। नैकैर-भिमन्यते यदेतादृशं क्रमशोऽतीतपर्यालोचनमेव हिन्दुजातेः नाना-दुःखानां मूलम्। किन्तु तद्विपरीतमेव सत्यमिति मन्येऽहम्; यावद् हिन्दवः स्वातीतविस्मृता आसन् तावत्ते हतधियः सन्तः स्थविरावस्थितौ निपतिताः। यावती तैरतीतविषयिणी पर्यालोचना क्रियते तत्तुल्यमेव चतुर्दिक्षु नवजीवनस्य चिह्नं परिदृश्यते। अतीतानुगुणमेव भाविकालो निर्मेयः, इदमेवातीतं भविष्यद्भविता।

अत एव हिन्दुगणेन यावदतीतानुशीलनं करिष्यते तदीयभाविकाल-स्तावान् गौरवमयः सम्पत्स्यते; किञ्च, यः कोऽपि एतदतीतं प्रत्येकं मनुष्यस्य समीपं नयति स नूनं स्वजातेः परमहितैषी। अस्मदीयपूर्व-पुरुषैः प्रवर्तितानां रीतानां नीतीनाञ्च दोषयुक्ततया भारतस्यावनतिरिति न, तासां न्यायानुगतपथेन परिणेतव्यत्वेऽपि अपरिणतिरेव भारतावनतौ हेतुः।

प्रत्येकमपि विमृश्यकारिणा पाठकेन सुविदितं यद्भारतस्य सामा-जिकविधानानि युगे युगे परिवर्त्तितानि। आदित एव एते नियमा आसन् बृहत्परिपल्पनायाः प्रतिफलने प्रयत्नभूताः, कालक्रमेण च शनैः शनैः ते विकाशं प्राप्नुयुरित्येवासीत्स्थितिः। प्राचीनभारतस्य ऋषयस्तावन्तो दूरदर्शिन आसन् यत्तदीयज्ञानमाहात्म्यमवगन्तुं जगतानेन प्रतीक्षितव्यम्। तदीयवंशधराणाञ्च तादृशमहोद्देश्यस्य पूर्णभावधारणेऽसामर्थ्यमेव भार-तावनतौ एकमात्रं कारणम्।

शतशः शताब्दावधिं भारतं तावत् तत्प्रधानजातिद्वयस्य ब्राह्मण-क्षत्रियोभयस्योच्चाभिलाषगर्भाभिसन्धिसाधनस्य रणक्षेत्रमासीत्।

एकत्र पुरोहिताः साधारणप्रजोपरि राज्ञां विधिगर्हितसामाजिक-निपीडनस्यापसारणे कृतोद्यमा आसन्। राजन्या हि प्रजागणमात्मनां न्यायसम्मतभक्ष्यत्वेन मन्यन्ते स्म। अपरतश्च राजन्या एव भारतभूमौ केवलशक्तिसम्पन्नजातित्वेन परिगणिता आसन् ये किल आध्यात्मिक-निपीडनार्थं साधारणमनुष्याणां बन्धनार्थञ्च पुरोहितकुलेन प्रवर्तितानां क्रमशो वर्धमानानां कर्मकाण्डानां विरोधे संग्रामं समुद्घोष्य स्तोकं साफल्यं लेभिरे।

सुप्राचीनकालादेव जातिद्वयमध्ये संघर्षः समारब्धः। समस्तास्वपि श्रुतिषु वृत्तमिदं सुस्पष्टतया ज्ञानगोचरीभूतम्। यदा राजन्यवर्गस्य ज्ञान-काण्डस्य च नेतृत्वेन प्रथितिं गतेन भगवता श्रीकृष्णेन सम्मेलनपथे प्रदर्शिते सामयिकतया विरोधोऽयं प्रशमितः। तस्य फलं हि भग-वद्गीतोपदिष्टा शिक्षा, या हि धर्मदर्शनस्य औदार्यस्य च सारस्वरूपा। किन्तु तत्समीयऽपि विरोधस्य कारणं विद्यमानमासीत्, अतश्च तत्फलमप्यवश्यम्भावि।

साधारणदरिद्रमूर्खप्रजासु आधिपत्यस्थापनायोत्कटाभिलाषः पूर्वोक्त-जातिद्वयेऽपि विद्यमान आसीत्, तस्माद्धेतोश्च विरोधोऽसौ प्राबल्येन पुनः प्रकटीभूतः। तत्कालीनं सामान्यतया साहित्यजातमस्मदीयसमक्षं यदुपलभ्यते तद्धि तादृशप्राचीनकालीनविरोधस्य क्षीणप्रतिध्वनिमात्रम्, किन्तु पारिशेष्येण क्षत्रिया एव जयिनोऽभवन्, अयमासीज्ज्ञानस्य जयः, स्वातन्त्र्यस्य जयः, कर्मकाण्डस्य प्रामुख्यं विलोपितं तेष्वधिकांशा हि चिराय कालगर्भलीनाः सञ्जाताः।

जागृतिरियं बौद्धसंस्कारनामधेया। धर्मदिशा सा कर्मकाण्डान्मुक्तिं ज्ञापयति, राजनीतिदिशा च क्षत्रियद्वारा पुरोहितप्राधान्यस्य विलोपः सूच्यते।

सविशेषं विषयोऽयं लक्ष्यो यत्प्राचीनभारते यत्सर्वश्रेष्ठं महापुरुषद्वयं समजनि तयोरुभावेव श्रीकृष्णबुद्धौ राजन्यौ आस्ताम्। इदमत्र ततोऽपि बाहुल्येन लक्षितव्यं यत्स्त्रीपुरुषजातिवर्णनिर्विशेषतया सर्वेभ्यो ज्ञानद्वार-मुन्मोचितमाभ्यामेव देवमानवाभ्याम्।

अद्भुतनैतिकबलस्य सत्त्वेऽपि बौद्धधर्मः प्राचीनसिद्धान्तान् समूल-मुत्पाटयितुं समुत्सुक आसीत्। तेष्वधिकांशतेजःपुञ्जस्य नेतिमूलकप्रयत्नेषु प्रयुक्तत्वाद्बौद्धधर्मः स्वोत्सभूमितो विलोपं गतः। यच्चावशिष्टं तदपि येषां कुसंस्कारक्रियाकाण्डानां निवारणे नियोजितं तदपेक्षया शतगुणित-भयानककुसंस्कारक्रियाकाण्डैः परिपूर्तिं गतम्। यद्यपि तदांशिकतया यज्ञीय-पशुबधवारणे साफल्यं लेभे, किन्तु तत्समुदयभारतभूमिं मन्दिरैर्विग्रहैः प्रतीकैर्यन्त्रैः साधुसज्जनानामस्थिभिश्च परिपूरयामास।

सर्वोपरि बौद्धधर्मकारणादार्यमङ्गोलीयैः आदिमप्रभृतीनां भिन्नप्रकृ-तिकजातीनां यन्मिश्रणं जातं तेनाज्ञाततया कतिपया बीभत्सवामाचाराः प्रादुर्भूताः। अस्मादेव कारणात् प्राधान्येन तादृशमहाचार्याणामुपदेश-समूहस्य विकृतपरिणतिं भारतभूमेः बहिर्निक्षिप्तुं श्रीमद्भगवच्छङ्करा-चार्यस्तत्सन्न्यासिसम्प्रदायश्च सविशेषतत्परौ बभूवतुः।

एवञ्च मनुष्यदेहं बिभ्रत्सु सर्वश्रेष्ठेन भगवद्बुद्धेन प्रवर्तितो जीवन-प्रवाहोऽपि पूतिगन्धमयबद्धजलाशयरूपेण परिणतः; कतिपयशताब्दकालं

भारतं प्रतीक्षमाणमतिष्ठद्यावन्न भगवच्छङ्करस्य ततः कियदनन्तरमेव रामानुजस्य मध्वाचार्यस्य च प्रादुर्भावः सञ्जातः।

एतस्मिन् कालावच्छेदे भारतेतिहासस्य सम्पूर्ण एको नूतनोऽध्याय उपक्रमितः। प्राचीनब्राह्मणराजन्यजातिद्वयमन्तर्हितम्। हिमालयविन्ध्ययोस्तावन्मध्यवर्तिनी आर्यभूमिर्यत्र श्रीकृष्णो बुद्धश्चाविर्भूतौ। या च महामान्यराजर्षीणां वन्द्यब्रह्मर्षीणाञ्च शैशवस्य लीलाभूमिरूपेण परिगणिता सा खलु तुष्णीमवस्थिता। किञ्च, भारतोपद्वीपस्य सर्वान्तप्रान्ततो भाषया तथा आकृत्या सुतरां वैभिन्न्यं समादधत्या जातेः, प्राचीनब्राह्मणानां वंशधरत्वेन गौरवावहाद्वंशसमूहाद्विकृतबौद्धधर्मविरोधिनी प्रतिक्रिया समुत्पन्ना।

क्व गता आर्यावर्त्तवास्तव्या ब्राह्मणराजन्याश्च? ते हि चिराय विलुप्ताः केवलमितस्ततो ब्राह्मणत्वाभिमानिन्यः क्षत्रियत्वाभिमानिन्यश्च कतिपया मिश्रितजातयो निवसन्ति। किञ्च, 'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः'[१] इति पृथिव्यां सर्वे मनुष्याः स्वस्वचरितशिक्षां विधास्यन्ति इत्येवं सत्यामपि दर्पगर्भायामात्मश्लाघापूर्णायां तेषां वाण्यां सातिविनयं दीनवेशेन दाक्षिणात्यानां चरणतले आसीनैस्तै-र्विद्याधिगता। एतस्माद्धेतोर्भारतवर्षे पुनर्वेदाभ्युदयो जातः—वेदान्तस्य पुनरुत्थितिः संवृत्ता, एतादृशी वेदान्ततत्त्वानुशीलनं कदापि नाभूत्, गृहस्था अपि आत्मन आरण्यकाध्ययने प्रचोदयामासुः।

बौद्धधर्मस्य सम्प्रचारे राजन्या एव प्रकृतनेतार आसन्, दलगतभावेन च ते बौद्धधर्मेण दीक्षिताः। संस्करणस्य धर्मान्तरकरणस्यो-

त्साहात् संस्कृतभाषोपेक्षिता, लोकप्रचलितभाषाचर्चा च प्रबलाभूत्। अधिकांशतया क्षत्रिया वैदिकसाहित्यात् संस्कृतशिक्षातश्च बहिर्भूताः। अत एव च दक्षिणप्रदेशाद्या संस्कारोर्मिः समुत्थिता तया कियत्परिमाणेन केवलं ब्राह्मणा एवोपकृताः। किन्तु तदेव च लक्षाधिकभारतीयानां कृतेऽभिनवतरनिगडबन्धने कारणीभूतम्।

क्षत्रिया नितरामेव भारतस्य मेरुदण्डस्वरूपाः। अतश्च तैरेव विज्ञानस्य तथा स्वाधीनतायाः परिपोषणं क्रियते। स्वदेशतः कुसंस्कारान् विदूरीकर्त्तुं पौनःपुन्येन तदीयवज्रनिर्घोषो ध्वनितः, भारतेतिहासस्य आदितश्च पुरोहितकुलनिपीडनाज्ञनसाधारणानवितुं त एवाभेद्यप्राचीर-रूपेणावस्थिताः।

यदा तेषामनेके घोराज्ञाननिमग्नाः सञ्जानाः, अपराश्च मध्य-एशियामहादेशीयबर्बरजातिभिः सह शोणितसम्बन्धं स्थापयित्वा भारते पुरोहितानां प्राधान्यं प्रतिष्ठापयितुमसिकराः सञ्जातास्तदैव भारते पाप-मात्रा परिपूर्णतां प्राप्ता, भारततरी च पूर्णतो निमज्जिता। यावन्न क्षत्रि-यशक्तिर्जागृता सती आत्मानं विमोचयति अवशिष्टजातेश्च चरणनिगडं भिनत्ति तावन्न भारतस्याभ्युदयः। पौरोहित्यमेव भारतस्य विनष्टौ मूलम्। निजभ्रातरमवनमय्य मानवः किं स्वयमनवनतो भूत्वा स्थातुमर्हेत् ?

राजन्! ज्ञायतां भवदीयपूर्वपुरुषगणद्वारा आविष्कृतं सर्वश्रेष्ठसत्यम् —विश्वजगत ऐक्यम्। कश्चन आत्मनः स्तोकमपि अनिष्टम-सम्पाद्यान्यस्यानिष्टसाधने शक्तो वा? ब्राह्मणक्षत्रिययोरयं निपीडन-समूहश्चक्रवृद्धिक्रमेण तयोरुपरि एव आवर्त्तते, सहस्राब्दव्यापिना दासत्वेनावज्ञया च तैरनिवार्यतया कर्मफलभोगः क्रियते।

भवदीयपूर्वपुरुषेष्वेव केनचिदकथि—'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः' इति।[२] येषां मनांसि साम्ये निबद्धानि तैर्जीवद्दशायामेव संसारोऽयमायत्तीक्रियते। अस्मदादीनां सर्वेषां प्रत्ययोऽयं यल्लोके तावत्स भगवदवताररूपेण स्वीकृत इति। तर्हि किं तदुक्तं वाक्यमिदमनर्थकं प्रलापमात्रं वा? यदि तन्न, अस्माभिश्च ज्ञायते नैव प्रलपितं तद्वाक्यम्, अतश्च जातिलिङ्गादीन् गुणान् चापि अविचार्य समुदयसर्गस्य पूर्णसाम्यविरोधी यः कोऽपि प्रयासो भयाव-हत्वेन प्रमादात्मकः, किञ्च, यावन्न साम्यदशेयमायत्तीक्रियते तावन्न केनापि मुक्तिरवाप्तुं शक्या।

तस्मादेव हे राजन्! भवद्भिः वेदान्तोक्तोपदेशावली प्रतिपाल्यताम् —अमूकस्य भाष्यकृतोऽमूकस्य टीकाकृतो वा व्याख्यानुसारं न, भवदीयान्तर्यामिना भवान् यथावबोधितस्तदनुसारम्। सर्वोपरि एतेषु सर्वभूतेषु सर्ववस्तुषु साम्यभावरूपोपदेशः प्रतिपाल्यताम्—सर्वभूतेषु स एव भगवानित्युपलभ्यताम्।

अयमेव मुक्तिमार्गः, वैषम्यमेव बन्धकारणम्। कश्चन जनः काचन जातिर्वा बाह्यैकत्वज्ञानव्यतिरेकेण बाह्यस्वातन्त्र्यं लब्धुं नालम्, मानसिकैकत्वज्ञानं च ऋते समेषां मानसिकस्वाधीनतापि दुरापा।

अज्ञानमसाम्यं वासना चेत्येतत्त्रयं मनुष्यजातीनां दुःखकारणम्, त्रिष्वपि चैकस्यान्यतरेणाच्छेद्यसंसर्गः। कश्चन मनुष्य आत्मानं नरान्तरात्का कथा पशोरपि गरीयांसं किमर्थमभिमन्येत? वास्तविकतया सर्वत्र एकमेव वस्तु विराजते। 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत कुमारी'

इति।[३] त्वमसि नारी, त्वमसि पुरुषः, त्वमसि कुमारः, कुमारी त्वमेवासि।

सत्यमिदं यन्नैकानि कर्त्तव्येतराणि गृहस्थैः सम्पाद्यन्ते इति सन्न्यासिनां कृते भावनेयं समीचीनतया गृहीतुं शक्या, परन्तु गृहस्थाः खलु वयमिति नैकैः वक्ष्यते इति धिया साम्यावस्थालाभोऽयं तेषां कृते दुर्लभः, परन्तु तैरपीदमादर्शत्वेनासादनीयम्। इयं समत्वप्राप्तिरेव निखिलसमाजस्य कृत्स्नानामपि प्राणभृतां समग्रप्रकृतेश्चादर्शः। किन्तु अहो! लोकेऽभिमन्यते—वैषम्यमेव समत्वलाभोपायभूतः, प्रतीयते यदन्यायाचारान् आचरद्भिस्तैः न्यायलक्ष्यीभूते सत्ये पदं कर्त्तुमिष्यते।

एतदेव मनुष्यप्रकृतौ विषतुल्यक्षतिं साधयति; मनुष्यजातावभिशापस्वरूपं सकलदुर्गतीनाञ्च मूलमिदमेव वैषम्यम्। इदमेव दैहिकमानसिकाध्यात्मिकादिसर्वविधबन्धानां मूलम्।

'समं पश्यन् हि सर्वत्र समविस्थतमीश्वरम्।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्।।' इति।[४]

—सर्वत्रेश्वरं समवस्थितयानुभूय समदर्शी आत्मनात्मानं न हिनस्तीत्यतः स परां गतिं प्राप्नोति। पद्येऽस्मिन् स्वल्पीयस्सु वचःसु सकलजनोपयोगी मुक्तेरुपाय उपदिष्टः।

हे राजन्याः! भवन्तो हि प्राचीनभारतस्य गौरवतुल्याः। भवदीयावनत्या एव जातीयक्षतिः समारब्धा। आधर्षितं वैभवमाधिपत्यञ्च न विभाज्यम्, अज्ञजनेभ्यो दानार्थं पूर्वपुरुषाणाञ्च पावितवासभूमेः प्रनष्टमर्यादायाः पुनरुद्धतये यदि क्षत्रियकुलोद्भवा ब्राह्मणवंशोत्पन्नैः साकं समवेतप्रयासेषु बद्धादरा भवेयुस्तदैव भारतोन्नतिः सुशका।

नेदं मुहूर्त्तं शुभावहमिति केन प्रतिपादयितुं शक्यम्? कालचक्रं पुनरावर्त्तते, पुनरपि भारतदेशाच्छक्तिप्रवाहोऽसौ निर्गतः यश्च नातिदूरकालमध्ये नूनमेव जगतो दूरतमप्रान्तं स्पृशेत्। महावाणी एकोच्चारिता, तदीयप्रतिध्वनिः प्रवाहितो विद्यते, प्रतिदिनमेव यदधिकाधिकतरां शक्तिं सङ्गृह्णाति, वाणी चेयं प्राक्तनसकलवाण्यपेक्षयाधिकतरा शक्तिशालिनी, कारणं सा पूर्ववाणीनां समुदायस्वरूपा। या वाणी एकदा सरस्वतीस्यन्दनीतटे ऋषिगणसमक्षमात्मानं प्रकटयामास, यदीयप्रतिध्वनिर्नगेन्द्रहिमालयस्य प्रतिशिखरे प्रतिध्वनितः सन् श्रीकृष्णबुद्धचैतन्यानामान्तर्वर्तितया समतलभूमिं स्पृशन् समग्रदेशमप्लावयत्, सैव पुनरुद्बुद्धा। पुनश्चोद्घाटितं द्वारम्, सकलैः प्रविश्यतामालोकराज्यम्—पुनर्द्वारमुन्मोचितम्।

किञ्च, हे प्रिय महाराज! भवान् तज्ञातेरेव वंशोद्भूतो या तावत्सनातनधर्मस्य जीवद्दण्डस्वरूपा, प्रतिज्ञाबद्धा रक्षयित्री साहाय्यविधात्री च; भवान् रामकृष्णयोः कुलोद्भवः। भवान् किमेतत्कर्त्तव्यपालनाद्विरतः स्थास्यति? तन्न संघटेतेति जानेऽहम्। धर्मार्थसहयोगित्वे भवदीयकरप्रसार आदौ भवितेति निश्चिता मन्मतिः। हे राजन् अजितसिंह! यदैव भवद्गतं चिन्तयामि—यस्मिन् भवदीयकुलस्य सर्वजनविदितवैज्ञानिकशिक्षया सहैतादृशं पवित्रचरित्रं (यस्मिन् सति साधुजनोऽपि आत्मानं गौरवान्वितं मन्यते) निखिलजनानाञ्च कृतेऽसीमप्रेम—यदा एतादृशाः सज्जनाः सनातनधर्मस्य पुनर्निर्माणाभिलाषिणस्तदाहमेतस्य महागौरवमये पुनरुज्जीवने प्रत्ययी न भूत्वा स्थातुं नालम्।

चिरकालाय भवदुपरि भवदीयात्मीयजनोपरि च श्रीरामकृष्णस्याशीर्वर्षतु, जीवताच्च भवान् परहिताय सत्यसम्प्रचाराय च दीर्घकालमिति शाश्वती विवेकानन्दीया प्रार्थना।

## पादटीका

१. मनुसंहिता २.२०।

२. गीता ५.१९।

३. श्वेताश्वेतरोपनिषत् ४.३।

४. गीता १३.२९।

# हिन्दुधर्मस्य सार्वभौमिकता

(शिकागोधर्ममहासभायां स्वामिपादानां साफल्यवार्त्तया हर्षान्वितानां माद्राजवासिनामभिनन्दनपत्रस्य प्रत्युत्तरतया लिखितमिदम्, १८९४-संवत्सरीयसेप्टेम्बरमासीयम्, बोस्टोन्नगरी)

माद्राजवासिनः, स्वदेशिनः, स्वधर्मानुयायिनः सुहृदश्च!

हिन्दुधर्मप्रचारार्थं यत्कृतं मया तद्धि सादरं भवद्भिरनुमोदितम्, तस्माद्भृशमाह्लादितोऽहम्। आनन्दोऽयं मदर्थं सुदूरविदेशे च मत्प्रसारकृत्यगतप्रशस्तये न। मदाह्लादकारणं हि—हिन्दुधर्मस्य पुनरभ्युदये युष्मद्धर्षतः स्पष्टमिदं प्रतीतिगोचरं यद्यद्यपि हतभाग्यभारतस्योपरितो भूयशो बहिर्देशीयाक्रमणप्रवातः प्रचलितः, यद्यपि शतशः शताब्दीं यावन्न औदासीन्याद् विजेतृगणस्यावज्ञया च प्राचीनार्यावर्त्तमहिमा स्पष्टं म्लानीकृतः, यद्यपि शतशताब्दीव्यापिप्लावनेन सनातनधर्मसौधस्य महिममयस्तम्भाः, नैका मनोहरा धनुराकारा निर्मितिः, नैके चापूर्वभित्तिप्रस्तराः प्लावितास्तथापि तदीयभित्तिः तत्सन्धिप्रस्तराश्च दार्ढ्येणावस्थिता राराज्यन्ते; आध्यात्मिकभित्तिमाधारीकृत्य सनातनजातेरीश्वरभक्तिः सर्वभूतहितैषणारूपोऽपूर्वकीर्त्तिस्तम्भश्च यः संस्थापितः स खलु पूर्ववदेव दृढतयाविचलतया च वर्त्तते।

भारते समग्रजगति च यदीयवाणीसम्प्रचारे प्राप्तावसरतया आत्मानं कृतकृत्यं मन्ये तस्यानुपयुक्तो दासोऽहम्। युष्माभिर्यः सादरमङ्गी-

क्रियते, युष्मदन्तर्निहितस्वाभाविकाध्यात्मिकबलेन तस्मिन् तदुपदेशे च महत आध्यात्मिकप्लावनस्यादिमस्फुटध्वनिः युष्माभिराकर्णितः, यश्च नूनमतिसत्वरं दुर्दम्यरंहसा भारतपदमुपनेष्यते, यदेव दौर्बल्योपेतमवगुणापन्नं तत्सर्वमेवानन्तशक्तिस्त्रोतसा प्लावितं स्यात्, हिन्दुजातेश्च शतशः शताब्दव्यापिनस्तूर्ष्णीं दुःखभोगस्य पारितोषिकतया हिन्दुजातिस्थजनान् अतीतापेक्षयोज्ज्वलतरगौरवेण भूषयन् स शक्तिविशेषस्तान् विध्यादिष्टोच्चपदवीमुन्नेष्यति तथा समग्रासु मानवजातिषु आध्यात्मिकभावनासम्पन्नमनुष्यजातेः ऋद्धिसिद्धिरूपं व्रतविशेषं सम्पादयेत्।

दाक्षिणात्यानां वो निकटे आर्यावर्तवास्तव्या आधमर्ण्यमावहन्ति, कारणं हि भारतेषु यावन्त्यः शक्तयः सक्रियतया स्फुरितास्तासु अनेकासां मूलं तावद्दक्षिणभारतम्। वरिष्ठा भाष्यकृतः, युगप्रवर्तकेषु शङ्कररामानुजमध्वाचार्याश्च सर्वे एते दक्षिणप्रदेशे एवाजायन्त। जगतोऽद्वैतवादिषु प्रत्येकं यन्महात्मशङ्करनिकटे आधमर्ण्यमुह्यते, पददलितपारियाजनगणो यन्महात्मरामानुजस्य दिव्यस्पर्शेन आलवारजनरूपेण परिणतः, समग्रभारते शक्तिसञ्चारकारिणः केवलस्य आर्यावर्तीयस्य महापुरुषस्य श्रीकृष्णचैतन्याख्यस्यानुयायिनोऽपि यन्महात्ममध्वाचार्यस्य शिष्यत्वं जगृहुस्तेषु सर्वेषामेव जनिप्रदेशस्तावद्दक्षिणभारतम्। वाराणसीधाम्नः श्रेष्ठगौरवस्वरूपदेवालयेषु साम्प्रतमपि दाक्षिणात्यवास्तव्यानामेव मौख्यम्, हिमालयस्य दूरवर्तिचूडास्थमन्दिरसमूहमपि च वस्त्याग एव नियमयति। अत एव महापुरुषपूतशोणितपूरितधमनीकास्तथाविधाचार्यगणस्य आशीर्वादैर्धन्यजीवना यूयं भगवच्छ्रीरामकृष्णोपदिष्टवाणीमाद्येनावगच्छेत सादरं गृह्णीयातेत्यत्र किमाश्चर्यम्?

दाक्षिणात्यमेव भाण्डारसमं वेदविद्यायाः शाश्वतम्, अतश्च जानीत यूयं यत्सनातनधर्ममाक्रमतां मूढसमालोचकानां पौनःपुनिकप्रतिवाद-सत्त्वेऽपि श्रुतिरेवाद्यापि सनातनधर्मस्थनानासम्प्रदायानां मेरुदण्डभूतोति।

जातितत्त्वविदां भाषातत्त्वविदां वा विदुषां सन्निकटे यदेव मूल्यं भवतु वैदिकसंहिताब्राह्मणयोः—'अग्निमीळे पुरोहितम्', 'इषेत्वोर्जेत्वा', 'शन्नो देवीरभीष्टये'[१] इत्यादिवैदिकमन्त्रोच्चारणसहकृतभिन्नभिन्नवेदोक्त-नानाविधयज्ञेषु आहुत्या प्राप्यमाणफलसमूहो यावान् वा भवतु अभीष्टः, एतेषां सर्वेषां भोग एव केवलमुद्देश्यम्। एतानि मोक्षसाधकानीत्येवं न केऽपि कदापि तर्कयन्ति विवदन्ति वा। अत एव आध्यात्मिकत्वस्य मोक्षमार्गस्य च यदुपदेशकं ज्ञानकाण्डं, यच्च आरण्यकाख्यया श्रुतिशिरस्त्वेन वाभिधीयते तदेवं शाश्वतं भारते श्रेष्ठासनमधि-कुरुतेऽधिकरिष्यते च चिरम्।

सनातनधर्मस्य नानामतमतान्तरस्वरूपप्रहेलिकायामुद्भ्रान्ताः, एकमात्रं यस्य धर्मस्य सार्वजनिकोपयोगित्वं तत्प्रचारितम् 'अणोरणीयान् महतो महीयान्' इति ब्रह्मणोऽविकलप्रतिबिम्बस्वरूपम्—पूर्वमेव प्रतिकूल-दुर्भावनाच्छन्नतया तन्मर्मावबोधेऽक्षमाः, जडवादैकधनजातेश्च सका-शाद् ऋणसूत्रप्राप्ताध्यात्मिकताया मानदण्डमवलम्बमानास्तमसि अन्वेष-णपरायणा आधुनिकयुवानो मुधैव स्वपूर्वपुरुषाचरितधर्ममवगन्तुं प्रय-तन्ते, तत्प्रयत्नं चिराय परिहाय घोराज्ञेयवादिनो जायन्ते, अथवा स्वाभाविकधर्मभावस्य प्रेरणया मृगोचितजीवनयापनेऽसामर्थ्यं बिभ्रतः प्राच्यगन्धयुक्तं पाश्चात्यजडवादनिर्यासमनवधानतया पेपीयमानाः—

'दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः'[२]—इति श्रुतेर्भविष्यत्ख्यापिनीं वाचं सार्थामापादयन्ति। येषामन्तःकरणानि सद्गुरोर्जीवनप्रदस्पर्शबलेन जागरितानि त एव केवलं जीवन्ति। भगवता भाष्यकारेण समीचीनमेवोक्तं —

'दुर्लभं त्रयमेवैतद्देवानुग्रहहेतुकम्।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः।।'[३] इति।

परमाणुद्व्यणुकत्रसरेणुप्रभृतिसम्बन्धीया अपूर्वसिद्धान्तप्रसवकारिणो वैशेषिकसूक्ष्मविचारा एव भवन्तु, अथवा नैयायिकप्रतिपादितजातिद्रव्य-गुणसमवायप्रभृतयो वस्तुसम्बन्धीया अभिनवविचाराः सन्तु, अथवा परिणामवादजनकस्वरूपसांख्याचार्यणां पूर्वोक्तापेक्षया गभीरतरचिन्ता-गतिरेवास्तां, अथवा विविधविश्लेषणसमूहस्य सुपरिणतफलीभूतव्या-ससूत्राणि एव सन्तु, मनुष्यमनीषाया एतत्सर्वेषां विविधानां संश्लेषाणां विश्लेषाणाञ्चाधारः श्रुतिरेव। किं बहुना, बौद्धानां जैनानाञ्च दार्शनिक-ग्रन्थेषु अपि श्रुतिसापेक्षत्वं नैवोज्झितम्, अन्ततश्च कतिपयेषु बौद्ध-सम्प्रदायेषु जैनानां बहुषु ग्रन्थेषु श्रुतिप्रामाण्यं सम्पूर्णतयाङ्गीक्रियमाण-मवतिष्ठते; एतत्तु बोध्यं यत् श्रुतिभागाः कतिपयब्राह्मणैः प्रक्षिप्तत्वेना-भिमत्य हिंसकश्रुतिरित्याख्यायन्ते, तत्प्रामाण्यमपि तैर्निराक्रियते। साम्प्रतमपि दिव्यमहात्मभिः स्वामिदयानन्दसरस्वतीपादैरपि तदनुरूपमते धीराधीयते। प्राचीनवर्त्तमानोभयसमस्तभारतीयचिन्तापद्धतेः केन्द्रं किमिति, यदि वा विविधशाखाप्रशाखाविशिष्टसनातनधर्मस्य प्रकृतमेरुदण्डः क इति कश्चन विविदिषते तदवश्यं व्याससूत्रजातमेव तत्केन्द्रीभूतं तन्मेरु-दण्डश्चेत्येवं प्रदर्शनीयम्।

हिमाचलारण्यान्या हृन्मौनकारिगाम्भीर्यमध्ये स्वर्लोकस्यन्दन्या गभीरध्वनिगर्भाद्वैतकेशरिणः 'अस्ति-भाति-प्रिय'-लक्षणो[४] वज्रगम्भीर-ध्वनिः केनचित् श्रूयतां नाम, अथवा वृन्दावनमनोहारिनिकुञ्जपुञ्जे 'पियापीतमि'ति कूजनमेवाकर्ण्यतां नाम, अथवा काशीधाम्नि मठसमूहे साधुजनानां गभीरध्याने भागो गृह्यतां, अथवा नदीयाभूभागविहारिश्रीगौराङ्गस्य भक्तानां लास्यनृत्ये एव भागदानं क्रियताम्, 'बङ्गेले तेङ्गेले'[५] प्रभृतिशाखायुक्तविशिष्टाद्वैतवादमतानुयायिप्राचार्यगणस्य पादमूले निषद्यतां नाम, अथवा माध्वसम्प्रदायाचार्यगणस्य वागेव सश्रद्धं कर्णीक्रियताम्, गृहिशिखधर्मावलम्बिनां 'वाहे-गुरुकी-फतह'[६]-रूपा समरवाणी एव निशम्यतां, अथवोदासिनां निर्मलादीनाञ्च 'ग्रन्थ-साहेव'[७]-गतोपदेशावली परिपाल्यताम्, कबीरस्य सन्न्यासिशिष्याः 'सत्साहेब'[८]-रूपेणाभिवाद्यन्ताम्, अथवा सखिसम्प्रदायभजनश्रवणं विधीयतां, राजपुतानाख्यराजन्यवर्गसंस्कारकस्य दादुनामभाजोऽद्भुतग्रन्थ-समूहोऽथवा तच्छिष्यस्य सुन्दरदासाख्यराज्ञस्तथा तस्माद् क्रमशो-ऽवरीभूतस्य विचारसागर इत्यस्य रचयितुः निश्चलदासस्य ग्रन्थो-ऽधीयताम् (भारते विगतशताब्दत्रयपर्यन्ता यावन्तो ग्रन्थाः प्रणीतास्तेषु विचारसागराख्यग्रन्थस्य प्रभावः सर्वापिक्षयाधिकः), किं बहुना, आर्यावर्तवास्तव्या भाङ्गना मलापसारकास्तदीयलालाख्यगुरोरुपदेशान् विवरितुं कथ्यन्ताम्—तेनोपलप्स्यते, आचार्यगणः सम्प्रदायसमूहश्चैते सर्व एव तादृशधर्मप्रणाल्या अनुवर्तनशीला ये तावत् श्रुतिवाक्यं प्रमाणत्वेनोदाहरन्ति, गीता येषां भगवन्मुखाब्जनिःसृता टीका,

'शारीरकभाष्यं'[९] येषां प्रणालीबद्धा विवृतिस्तथा परमहंसेभ्यः परिव्रजद्भ्य आचार्येभ्यः प्रभृति लालाख्यगुरोः मलापसारकशिष्यगणपर्यन्तं भारतस्य समुदितविविधसम्प्रदाया यस्य विविधा विकाशाः।

अत एव द्वैतं, विशिष्टाद्वैतम्, अद्वैतं तथा इतोऽपि कतिपयमनतिप्रसिद्धं व्याख्योपेतं 'प्रस्थानत्रयञ्च'[१०] हिन्दुधर्मस्य प्रामाण्यग्रन्थरूपेणाङ्गीकृतम्, 'प्राचीननाराशंस्या'[११] प्रातिनिध्यमावहत्पुराणं तदुपाख्यानभागो वैदिकब्राह्मणभागस्य च प्रतिनिधस्वरूपं तन्त्रं तावत् तदीयं कर्मकाण्डम्।

पूर्वोक्तप्रस्थानत्रयं हि सकलसम्प्रदायसम्मतः प्रामाण्यग्रन्थः, किन्तु सम्प्रदायेषु प्रत्येकमपि वैलक्षण्येन पुराणतन्त्रे प्रमाणत्वेन गृह्येते।

प्रतिपादितपूर्वमस्माभिर्यत् तन्त्राणि तावद् वैदिककर्मकाण्डस्य स्तोकपरिवर्तितं भागमात्रम्, केनचिच्च तत्सम्बन्धे असम्बद्धाशुसिद्धान्तव्याहरणात्पूर्वं मया स परामृश्यते ब्राह्मणभागसहितं विशेषतयाध्वर्युब्राह्मणभागसहितं तन्त्रमध्येतुम्, तथा सति तेन ज्ञायेत यत् तन्त्रे उपयुक्ता बहुलांशतया मन्त्राः साक्षाद् ब्राह्मणग्रन्थादापादिताः। भारतवर्षे तन्त्राणां प्रभावः कीदृश इति पृष्टे इदं वक्तुं शक्यं यत् श्रौतस्मार्तकर्मव्यतिरिक्तं हिमालायादारभ्य कन्याकुमारीकापर्यन्तं प्रचलितं समुदितकर्मकाण्डजातं तन्त्रादेव गृहीतम्, तेन च तन्त्रेण शाक्तशैववैष्णवप्रभृतीनां निखिलसम्प्रदायानाम् उपासनापद्धतिर्नियम्यते।

अवश्यं मयैतन्नोच्यते यत्सकलसनातनधर्मानुयायिभिः सामग्रिकतया तदीयधर्मगतसकलमूलविषया अवगम्यन्त इति। नैकैर्विशेषतो निम्नवङ्ग-

वास्तव्यैस्तत्सकलसम्प्रदायविषये तत्पद्धतिविषये च नैवाकर्णितम्; परन्तु भवतु ज्ञाततयाज्ञातत्तया वा पूर्वोक्तप्रस्थानत्रयस्योपदेशानुसारमेव सर्वेऽपि सनातनहिन्दुधर्मावलम्बिन आचरन्ति।

अपरपक्षतश्च यत्रैव हिन्दीभाषा कथ्यमाना विद्यते तत्रत्या अत्यवर-जातिस्था अपि निम्नवङ्गवास्तव्यानामुन्नततमजातिस्थजनानामपेक्षया वेदान्तोक्तधर्मविषये आधिक्येनाभिज्ञत्वात्तानतिशेरते।

किमिह कारणम्?

मिथिलाभूमितो नवद्वीपानीतेषु शिरोमणिगदाधरजगदीशप्रभृतिमनी-षिप्रतिभया सयत्नं लालितेषु परिपुष्टेषु च केषुचिद्विषयेषु निखिल-विश्वस्य समुदितपद्धत्यपेक्षया गरिष्ठाया अपूर्वाया सुविन्यस्तवाक्शिल्प-प्रणीतायास्तर्कप्रणाल्या विश्लेषणस्वरूपं वङ्गीयन्यायशास्त्रं भारतवर्षस्य सर्वत्रैव सश्रद्धमधीयते। किन्तु दुःखावहं वृत्तमिदं यन्नासीद्वेदानु-शीलनप्रयासो वङ्गीयानाम्, किं बहुना, केभ्यश्चिद्वर्षेभ्यः पूर्वं भगवत्प-तञ्जलिप्रणीत-'महाभाष्यम्'[१२] अध्यापयितुं प्रभवति तादृशो न कोऽपि समजनि इति वक्तुं शक्यम्। एकवारमेव केवलं महीयसी प्रतिभैका 'तादृशावच्छिन्नावच्छेदक'[१३]-जालमुच्छिद्य समुत्थिता—स हि भगवान् श्रीकृष्णचैतन्यः। सकृदेव केवलं वङ्गीयाध्यात्मिकतन्द्रापसृता। केभ्यश्चिद् दिवसेभ्यः सैव (प्रतिमा) भारतस्यापरापरप्रदेशानां धर्मजीवने सहभा-गित्वमुदवहत्।

विस्मयकरविषयोऽयं यत् श्रीचैतन्यः कस्माच्चिद् भारतीयसकाशात् सन्न्यासधर्मे दीक्षितः, अतश्च 'भारतीसम्प्रदाय'[१४] आसीदिति सत्यं किन्तु माधवेन्द्रशिष्येश्वरपुरी एव तदीयधर्मप्रतिभां प्रबोधयामास।

मन्यते यद् वङ्गप्रदेशस्य आध्यात्मिकत्वजागरणे पुरिसम्प्रदायो विधात्रा समुपदिष्टः भगवच्छ्रीरामकृष्णपादाः तोतापुरिसकाशात् सन्न्यास-दीक्षां लेभिरे।

व्याससूत्रोपरि श्रीचैतन्यपादैर्यद्भाष्यं प्रणीतं तच्छङ्के नष्टमभूदथवा साम्प्रतमपि तदनुपलभ्यमानत्वेन विद्यते। तदीयशिष्या दाक्षिणात्यप्रादुर्भूतमाध्वसम्प्रदायेन योगं साधितवन्तः। रूपसनातनश्रीजीवगोस्वामिप्रभृतिमहापुरुषाणामासनानि बाबाजिजना अधिकृतवन्तः। तस्मात् श्रीचैतन्यपादप्रवर्त्तितो महान् सम्प्रदायः क्रमशो ध्वंसाभिमुखं धावन् आसीत्, किन्तु साम्प्रतं तस्य पुनरुत्थानलिङ्गं प्रत्यक्षीक्रियते। आशासे यत् सत्वरमेव तत्स्वविलुप्तगौरवं पुनरुद्धरिष्यति।

समुदयभारते एव श्रीचैतन्यप्रभावो लक्ष्यीक्रियते। यत्रैव भक्तिमार्गः परिज्ञायते तत्रैव लोके सादरं तद्विषयिणी चर्चा तत्पूजा च सम्पाद्यते। मत्प्रत्ययस्य कारणपर्याप्ततेयं यत् समुदिता वल्लभाचार्यसम्प्रदायाः श्रीचैतन्यप्रतिष्ठितसम्प्रदायस्य संस्कारोपेतशाखामात्रम्। किन्तु तदीयैः तथाकथितैः वङ्गीयानुगामिभिर्न ज्ञायते यत्तत्प्रभावोऽद्यापि कथङ्कारं समस्तभारतभूमौ सक्रियतया विद्यत इति। कथं वा तैर्ज्ञायेत? ते मठाधीशाः सम्पन्नाः, किन्तु तेऽनावृतपद्भ्यां भारतस्य द्वारि द्वारि प्रचारकार्यं सम्पादयन्त आसन्, सर्वेषां भगवन्तं प्रति प्रेमार्थं तैश्चाण्डाला अनुनीयन्ते स्म।

भारतस्य प्रदेशान्तराणां धर्मजीवनाद् वङ्गप्रदेशस्य विच्छिन्नत्वे कारणं तावत् वङ्गप्रदेशे सविशेषप्रथिता अद्भुता शास्त्रगर्हिता कुलगुरु-

प्रथा। सर्वप्रधानकारणं तावदेतदेव यदद्यावधि वङ्गप्रदेशोऽयं भारतीयाध्यात्मिकसाधनेषु सर्ववरिष्ठप्रतिनिधिभूताद् भाण्डारोपमात् सन्न्यासिसम्प्रदायस्य महतो जीवनान्नालभत शक्तिम्।

उन्नतवर्णोद्भवेभ्यो वङ्गीयेभ्यस्त्यागभावना न रोचते, भोगे हि तेषां प्रवृत्तिः। कथङ्कारं पुनस्ते आध्यात्मिकक्षेत्रे गभीरान्तदृष्टिमवाप्तुं क्षमाः? 'त्यागेनैकेऽमृतत्वमानशुः'[१५] इति प्रकारान्तरेण कथं वा तत्सम्भूयेत?

अपरतः सुदूरविस्तारिप्रभावसम्पन्ना महान्तः सन्न्यसन्तो नैके आचार्या हिन्दीभाषिभारतभूखण्डे वेदान्ततत्त्वं प्रतिगृहं नीतवन्तः। विशेषतश्च पञ्जाबकेशरी इत्युपाधिभाजो रणजित्सिंहस्य आधिपत्ये त्यागस्य यन्माहात्म्यं प्रचारितं तेन निम्नातिनिम्नजनैरपि वेदान्तदर्शनस्योन्नतोपदेशाः प्राप्ताः। पञ्जाबकृषीबलबालिकाभिः यथोचितगर्वेण साकमुच्यते तदीयवयनयन्त्रमपि सोऽहं सोऽहमिति रौतीति। किञ्च, हृषीकेशारण्ये सन्न्यासिवेशिनस्त्यागिमलापसारका वेदान्तमधीयाना मयावलोकिता येषां चरणतले गर्वान्विताभिजातजनोऽपि आसीनः सानन्दमुपदेशलाभेऽर्हः। कथं न वा स्यादेवम्? अन्त्यादपि परं धर्मम्—इत्यन्त्यजातिसकाशादपि ग्रहणीयः श्रेष्ठधर्मः।

अत एवोत्तरपश्चिमप्रदेशस्थाः पञ्जाबवास्तव्याश्च वङ्गमुम्बइमद्रासाधिवासिनामपेक्षया धर्मक्षेत्रे समधिकविद्यान्विताः। दशनामिवैरागिमार्गानुयायिप्रभृतिसम्प्रदायानां परिव्रजन्तो न्यासिनः प्रत्येकमपि जनस्य द्वारि द्वारि धर्मभावं प्रापयन्ति; तद्विनिमयमूल्यं हि रोटि-

काखण्डमात्रम्। सन्ति च तेषां मध्ये नैके महान्तो निःस्वार्थचरिताश्च, स्वाधीनसम्प्रदायस्य काचुसम्प्रदायस्य वास्ति सन्न्यासी कश्चन। तत्प्र-चेष्टयैव समस्तराजपुतानाख्यप्रदेशे शतशो विद्यालया दातव्याश्रमाश्च स्थापिताः। तेन अरण्यान्तरालवर्त्तिचिकित्सालय एकः स्थापितः, हिमा-लयस्य दुर्गमगिरिनदीनामुपरि आयससेतून् निर्मापयामास सः, किन्तु तेन मुद्रास्पर्शो न कदापि विधीयते; कम्बलमेकं व्यतीत्य न तस्य सांसारिकी काचित्सम्पत्, तस्मादेव लोके स कम्बलस्वामीत्यभिधीयते। तेन द्वारि द्वारि भिक्षया आहारः सङ्गृह्यते। मा भूद्गृहस्थस्य कोऽपि क्लेश इति धिया एकादिक्रमेण एकस्मादेव गृहात् कदापि स भिक्षां याचमान इति न दृश्यते। एवंविधसाधुश्च नैकाकी स एवापि तु शतशस्तादृशाः साधवः सन्ति। यावत् तादृशैर्भूदेवैर्भारतभूखण्डे जीवद्भिस्तदीयदिव्यचरितरूपदुर्भेद्यप्राचीरद्वारा सनातनधर्मो रक्ष्यते तावत् प्राचीनधर्मोऽयं विनाशमियादिति किं युष्माभिर्मन्यते?

अस्मिन् प्रदेशे (आमेरिकायाम्) पादरिजनाः संवत्सरमध्ये षण्मासान् यावत् प्रतिरविवासरं होराद्वयात्मककालं धर्मप्रचाराय त्रिंशत्सहस्रं चत्वारिंशत्सहस्रं पञ्चाशत्सहस्रं नवतिसहस्रपरिमितमपि धनं वेतनरूपेण प्राप्नुवन्ति। आमेरिकावास्तव्यैः खलु तदीयधर्मरक्षार्थं बहुलतया लक्षशो मुद्राव्ययः क्रियते, अपरतश्च कम्बलीस्वामिवद् देवतुल्याः सम्पूर्णतया स्वार्थं विजहतो जना आलस्यापन्ना इतस्ततो निरुद्देशयतया भ्रमण-शीलाश्च इत्येवं शिक्षिता वङ्गयुवानः। 'मद्भक्तानां ये भक्तास्ते मे भक्ततमा मताः'[१६] इति। भक्तानां मदीयानां खलु ये भक्तास्त एव मद्भक्तेषु अग्रगण्या इति मन्मतिः।

अत्यन्ताज्ञो वैरागी कश्चनान्तस्तरीयदृष्टान्तत्वेनोपकल्प्यताम्। तेन यदा कश्चन ग्रामो गम्यते तदा तेनापि तुलसीदासीयात् चैतन्यचरितामृताद्वा यत्किमपि ज्ञायतेऽथवा दाक्षिणात्यालवारजनसकाशाद् यत्तेनायत्तीकृतं तदेव ग्रामस्थजनान् शिक्षयितुं यत्नो विधीयते। इदं किं नोपकारपदवाच्यत्वं लभते? किञ्च, एतत्सर्वस्य विनिमयद्वारा तेन रोटिकाखण्डः कौपीनार्थं चीवरखण्डश्चावाप्यते। हे भ्रातरः! तादृशजनानां निर्दयसमालोचनात्प्राक् चिन्तयत यूयं—युष्मदीयस्वदेशवास्तव्यानां कृते युष्माभिः किं व्यधायीति, येषां धनव्ययेन यूयं शिक्षिताः, यान् निष्पीड्य युष्माभिः पदगरिमा रक्षणीयः, बाबाजी इत्याख्याधारिणः साधवो निरुद्देश्यतया इतस्ततो भ्रमणशीला इत्येवमध्यापनार्थं युष्मदीयशिक्षकेभ्यो वेतनं प्रदीयते।

अस्मदीयैः कतिपयैः स्वदेशोद्भूतवङ्गीयैः सनातनधर्मस्य पुनरुदयोऽयं हिन्दुधर्मस्य नवविकाश इत्येवं समालोचितः। तैः पुनरुत्थानमिदमभिनवमित्येवमाख्यापयितुं शक्यते। कारणं हि सनातनधर्मोऽयं सद्य एव वङ्गप्रदेशं प्रविशति, अत्र चाद्यावधि आहारविहारवैवाहिकदेशाचाराः केवलं धर्मत्वेन परामृश्यन्ते।

श्रीरामकृष्णशिष्यैर्योपदेशावली भारते सम्प्रचार्यते सा किं सच्छास्त्रेणानुमोद्यते न वेति क्षुद्रलेखेऽस्मिन् गम्भीरप्रश्नोऽयं विचारयितुं नास्ति स्थलम्। किन्तु लिङ्गानि अस्मदीयसमालोचकेभ्यो मया दास्यन्ते यद्द्वारा अस्मन्नयस्तैरितोऽपि स्पष्टतयावगन्तुं शक्येत।

प्राथम्येन कृत्तिवासकाशीदासयोः प्रणीतग्रन्थेभ्यो हिन्दुधर्मविषयिणी निश्चयात्मिका धीरापादयितुं शक्येति कदापि मया न तर्क्यते, यद्यपि

तदीयाः सुधोपमिता वाचोऽपि यैश्चाकर्ण्यन्ते तेऽपि पुण्यवन्तः। सनातनधर्मोऽवगन्तव्यश्चेद्वेददर्शनयोरध्ययनं विधेयं तथा समुदितभारतस्य मुख्यधर्मगुरूणां तच्छिष्याणाञ्चोपदेशावली अधिगन्तव्या।

भ्रातरः! यूयं यदि गौतमप्रणीतसूत्रादारभ्य वात्स्यायनभाष्यालोकेन 'आप्त'[१७]-सम्बन्धिगौतमीयमतवादं पठेत, शबरतदन्यभाष्यकृतां साहाय्येन मीमांसकमतालोचनं कुर्यात, अलौकिकप्रत्यक्षाप्तत्वसम्बन्धे तथा सर्वे आप्ता न वा, तादृशाप्तजनवाक्यत्वादेव वेदस्य प्रामाण्यम् इत्येवं विषयेषु तदीयमतवादाध्ययनं यदि विदध्यात, यदि महीधरप्रणीतयजुर्वेदभाष्योपक्रमणिकापठनावसरः प्राप्येत तदा युष्माभिरवगतं स्यात्तत्र यन्मनुष्याणामाध्यात्मिकजीवनसम्बद्धा वैदिकनियमजातसम्बद्धाश्च मनोहारिविचारा विलसन्ति। तस्माद्धेतोरनादिनिधनो वेद इति तै राद्धान्तितम्।

सर्गस्यानादित्वविषये वक्तव्यमिदं यत् तन्मतं न केवलं सनातनधर्मस्यापि तु बौद्धजैनधर्मयोरपि तन्मतं प्रधानभित्तिभूतम्।

समुदितभारतीयसम्प्रदायाः प्रायेण ज्ञानमार्गत्वेन भक्तिमार्गत्वेन वा विभक्तुं शक्याः। श्रीशंकराचार्यकृतशारीरकभाष्यस्य उपक्रमणिकाध्ययनं विधीयते चेद्युष्माभिरवलोक्येत यत् तत्र ज्ञाननिरपेक्षत्वं सम्पूर्णतः प्रतिपादितम्, इदमपि च राद्धान्तितं यत् ब्रह्मसाक्षात्कारो मोक्षो वा किञ्चिदनुष्ठानजातं मतं वर्णं जातिं सम्प्रदायं वा नावलम्बते। साधनचतुष्टयसम्पन्नो यः कोऽपि प्रमातृजन एव तत्राधिकारित्वं भजते। साधनचतुष्टयञ्च समन्तात् चित्तशुद्धिविधायकं कतिपयानुष्ठानमात्रमेव।

भक्तिमार्गविषये वाच्यं यत् भक्तिमार्गस्य कैश्चिदाचार्यैरुद्घोषितं यन्मुक्तये जातेर्लिङ्गस्य वा न सापेक्षत्वं, नापि मनुष्यजनेरावश्यकता, केवला भक्तिरावश्यिकीति वङ्गीयसमालोचयितृभिरपि चारु ज्ञायते।

ज्ञानं भक्तिश्च सर्वत्रैव निरपेक्षत्वेन प्रचार्यते। तद्धेतोः मोक्षावाप्तौ विशेषमतानुयायिनो वर्णविशेषस्य जातिविशेषस्य वाधिकारित्वमिति न केनाप्याचार्येण प्रतिपाद्यते। विषयेऽस्मिन् 'अन्तरा चापि तु तद्दृष्टेः'[१८] इति वेदान्तसूत्रोपरि शङ्कररामानुजमध्वप्रणीतानि भाष्याणि अध्येतव्यानि।

अधीयन्तां समुदयोपनिषदः, संहिताभागे कुत्रापि धर्मान्तरेषु मोक्षविषये सङ्कीर्णभावो नोपलभ्यते। धर्मान्तराणि प्रति सहानुभूतिभावः सर्वत्र विलसतितराम्, अध्वर्युवेदीयसंहितायाश्चत्वारिंशाध्यायस्य तृतीयायां चतुर्थ्यां वा ऋच्येवमाम्नायते—(यदि स्मर्यते मया सम्यक्) 'न बुद्धिभेदं जनयेदज्ञानां कर्मसंज्ञिनामि'[१९]-त्यभिप्रायो हिन्दुधर्मे सर्वत्र समुपलभ्यते। यावत् केनचित् सामाजिकनियमाः परिपाल्यमानाः सन्ति तावत् कदापि स्वाभीष्टदेवतानिर्वाचनार्थं, नास्तिकत्वादज्ञेयवादित्वाद्वा किं स निगृह्यते? सामाजिकनियमोल्लङ्घनात् कोऽपि नरः समाजेन शासितुं शक्यः, किन्तु न कोऽपि अत्यन्तपतितोऽन्त्यजोऽपि हिन्दुधर्मीयो मुक्तावनधिक्रियते। एतद्द्वयस्य संमिश्रणेन न प्रमदितव्यं युष्माभिः। अस्यां दृष्टान्तोऽवलोक्यताम्—मालाबारप्रदेशे उन्नतवर्णोद्भवेन जनेन सह चाण्डालस्य समपथे साहचर्यं नानुमन्यते, किन्तु स ख्रीष्टीयो महम्मदीयो वा भवति चेन्निर्बाधा गतिस्तस्य सर्वत्र, रीतिश्चेयं हिन्दुराजस्यैकस्याधिपत्ये बहुशताब्दपर्यन्तमावर्त्तते। बुद्धाविदं स्तोकमद्भुतं प्रतीयेत यदतिशयप्रतिकूलावस्थायामपि धर्मेतरान् प्रति सनातनधर्मस्य सहानुभूतिभावः प्रकाशते।

एकत्र विषये सनातनधर्मो धर्मान्तरेभ्यो वैलक्षण्यं बिभर्ति—भावमेकं प्रकाशयितुं साधुभिः संस्कृतशब्दराशिः प्रायशो निःशेषितो यदस्यामेव जनौ मनुष्यैः ब्रह्मोपलब्धव्यम्, अदैतवादश्चाग्रे स्तोकं पदं कृत्वा प्रतिपादयति यत् 'ब्रह्मविद् ब्रह्मैव भवति' इति। वाचेयं नूनमेव युक्तिसम्मता।

तन्मतस्य फलीभूतप्रेरणाया अतीवौदार्यान्वितो महान् भावः समुदेति —एतच्च केवलं वैदिक-ऋषिभिः निगदितमिति न; विदुरो, धर्म-व्याधोऽन्ये[२०] च प्राचीनमहापुरुषाः केवलमेतदुक्तवन्त इति न, किन्तु तद्दिने दादूपन्थिसम्प्रदायान्तर्भूतेन सन्न्यासिना निश्चलदासेन निर्भीकतया तदीयविचारसागरग्रन्थे उद्घोषितम् —

'जो ब्रह्मविद् वही ब्रह्म, ताकु वाणी वेद।
संस्कृत और भाषा में करत भ्रम की छेद।।' इति।

—यो ब्रह्मवित्स एव ब्रह्म; तद्वाक्यमेव वेद इति। संस्कृतेन देशीयभाषासु यया कयापि भाषयोच्यतां नाम, तेनैव लोकानामज्ञानं दूरीभवति।

अत एव द्वैतवादानुसारमीश्वरावाप्तिरद्वैतमतानुसारञ्च ब्रह्मभावापन्नतैव वैदिकोपदेशसमूहस्य लक्ष्यम्, अन्या या कापि शिक्षा वेदे उपनिबद्धा सा हि तल्लक्ष्यप्राप्तौ सोपानीभूता। भगवतो भाष्यकारस्य शंकराचार्यस्य माहात्म्यमिदं यत्स्वप्रतिभाबलेन तैः व्यासस्य भावसमूहोऽपूर्वतया विवृतः।

निरपेक्षसत्यरूपेण ब्रह्मैव केवलं सत्यम्; सापेक्षसत्यतया ब्रह्मणोऽस्य विविधप्रकाशोपरि प्रतिष्ठिता भारते भारताद् बहिश्च सर्वे सम्प्रदाया एव सत्यभूताः। किन्तु केचन कतिपयापेक्षयोन्नता इत्येवं वैलक्षण्यमात्रम्। मन्यताम्—समभावेन सूर्याभिमुखमुपसर्पतः कस्यचित् पुंसः प्रतिपदक्षेपं

सूर्यस्य नवनवदृश्यं जायते। यावन्न प्रकृतसूर्यनिकटे पदं कुरुते तावत्तत्सकाशे सुर्यस्याकृतिर्दृश्यं वर्णश्च प्रतिमुहूर्त्तं नवतां यास्यति। आदौ सूर्यो बृहद्गोलकपिण्डः प्रतिभातस्तत्समीपे, तदनन्तरं तदाकृतिः क्रमशो वर्धमानाऽऽसीत्।

प्रकृतादित्यो वस्तुतः कदापि तत्प्रथमदृष्टगोलकवद् अनन्तरदृष्टादित्यमसूहवद्वा नास्ति। तथापि निरवच्छिन्नतयादित्यं पश्यता जनेन तद्व्यतिरिक्तं वस्त्वन्तरं नैवादर्शायीति किं न सत्यम्? एवमेव समुदिताः सर्वेऽपि सम्प्रदायाः सत्यभूताः; कश्चनार्कान्तिकः कश्चिद्वा विप्रकृष्टः! स प्रकृतादित्य एव अस्माकम् 'एकमेवाद्वितीयम्' इति।

यदा च तादृशयथार्थनिर्विशेषब्रह्मण उपदेष्टा केवलो वेदः—इतराश्च ऐश्वरिकधारणाः क्षुद्रं सीमाबद्धं दर्शनमात्रम्, यदा सर्वलोकोप-कारिणी श्रुतिः साधकस्य करधारणेन तं शनैःशनैः तन्निर्विशेषपरब्रह्मप्राप्तये समुदयसोपानानां मध्यतो नयति, यदा च धर्मान्तराणि तादृशसोपानेषु प्रत्येकं रुद्धगतिस्थितिशीलसोपानमात्राणि, तदा जागतिकसमुदितधर्माः एतादृशस्य निरभिधस्य सीमारहितस्य वैदिकधर्मस्यान्तर्गताः।

शतशो जीवनव्यापिनी प्रचेष्टा विधीयताम्, अनन्तकालं त्वदीयान्तःस्थलमनुसन्धीय दृश्यताम्, तथापि तादृशो न कोऽपि महीयान् धर्मभाव आविष्कर्तुं शक्यो यो हि पूर्वत एव आध्यात्मिकत्वस्यानन्ताकराभ्यन्तरे न निधीयते।

हिन्दूनां तथाकथितपौत्तलिकताविषये वक्तव्यमिदं तत् कीदृशं भिन्नभिन्नरूपं भजते इत्यादौ अवलोक्यताम्, मन्दिरे उत प्रतिमायामाहोस्विद्देहमन्दिरे क्वोपास्यते उपासकगणेनेति अवगम्यतां प्राथम्येन।

तैः किं विधीयते इति प्रथमं तावद् निश्चयं जानीत (प्रतिशतं नवनवतिसंख्यकनिन्दुकेषु नैक एव अत्र विषयेऽज्ञत्वमावहन्ति) तदा वेदान्तदर्शनालोकेन तत्स्वयमेव व्याख्यातं स्यात्।

तथापि कर्माण्येतानि नावश्यकर्त्तव्यानि, वरं मानवशास्त्रं समुद्घाट्य पश्यत—तेन हि प्रत्येकमपि प्रवीणः चतुर्थाश्रमीभूतसन्न्यासग्रहणार्थ-मादिश्यते, तैश्च स धर्मो गृह्यतां नापि गृह्यतां नाम, तैरवश्यमेव समस्तकर्मजातं परिहेयम्।

सर्वत्रैवैतत् पौनःपुन्येन निगदितं यद् समुदयकर्मजातमेतज्ज्ञाने परिसमाप्तिमेति—'ज्ञाने परिसमाप्यते'[२१] इति।

एतत्समस्तकारणादेव देशान्तरबहुसज्जनापेक्षया हिन्दुकृषकः कश्चन समधिकधर्मभावसम्पन्नः। मद्भाषणे युरोपीयदर्शनस्य तद्धर्मस्य च बहु-शब्दानां व्यवहारात् कश्चन सुहृत् समालोचनाव्याजेनाभियोगोऽकारि। व्यवहृतेषु संस्कृतशब्देषु च परमाह्लादो जायेत मे। तद्धि एतदपे-क्षयानायाससाध्यं स्यात्, यतो हि संस्कृतं तावदेकमात्रमुपयुक्तसाधनं धर्मभावप्रकाशनाय। परन्तु बन्धुवरेण विस्मृतमेतद्यद् मद्भाषणस्य श्रोतृ-त्वेन पाश्चात्त्यनरनारीगणा एवासन्। यद्यपि हिन्दुभिः तदीयसंस्कृत-ग्रन्थार्था विस्मृताः, मिशनारीगणेनैव तेऽर्था आविष्कृता इति भारतीय-ख्रीष्टीयमिशनारीजनैः कथितं तथापि समवेतबृहन्मिशनारीगोष्ठीमध्ये मयैकोऽपि न दृश्यते येन एकापि संस्कृतबद्धा पङ्क्तिरवगम्यते, किन्तु तेषु नैकैः वेदवेदान्तयोः हिन्दुधर्मीययावत्पवित्रशास्त्राणाञ्च विषये समा-लोचयद्भिः भूयशः गरीयान् गवेषितार्थगर्भप्रबन्धः प्रवचनेन समुपस्थापितः।

कस्यचिद्धर्मस्याहं विरोधीति न सत्यम्, भारतीयख्रीष्टीयमिशनारी मया विरुद्ध्यते इत्यपि नावितथम्। किन्तु आमेरिकायां तेषां कतिपय-धनार्जनोपायविषये मया प्रतिवादः क्रियते। बालकबालिकानामध्येय-ग्रन्थेषु अमुषामालिखितचित्राणां कोऽर्थः? हिन्दुजनन्या तदपत्यं गङ्गायां कुम्भीरमुखे निक्षिप्यते इति चित्रेऽङ्कितम्। माता कृष्ण-काया, किन्तु तच्छिशुः श्वेताङ्गत्वेनाङ्कितः; शिशुगणं प्रति सम-धिकसहानुभूत्याकर्षणमधिकानुदानसंग्रहश्चैतस्योद्देश्यम्। एकत्र चित्रे केनचिद् पुंसा स्वकराभ्यां दारुस्तम्भैकबद्धा तदीया भार्या दह्यमाना दृश्यते; मन्यते भार्या प्रेता सती स्वभर्त्तृरिपुं पीडयेत् इत्येतादृशचित्रस्य कोऽभिप्रायः? बृहदाकाररथा राशिशः पुंसो विदल्य निध्नन्तीत्येता-दृशसमस्तचित्राणां कस्तावदभिप्रायः? तद्दिनेऽत्र (आमेरिकायाम्) बालानां कृते प्रकाशिते पुस्तके एकस्मिन् केनचित् पादरिमहोदयेन तदीयकलिकातादर्शनस्य वर्णनं कृतम्। तेनागादि—कलिकातामार्गे रथ एकः कतिपयधर्मोन्मत्तनृणामुपरितः गच्छन्नासीदिति तेनादर्शि।

मेमफिस्नगरे मया कश्चन पादरिमहोदयो वदन् श्रूतो यद् भारतस्य प्रत्येकमपि पल्लीग्रामे क्षुद्रबालकानां कङ्कालपूरिता एकैकशः पुष्क-रिणी विद्यते इति।

का क्षतिः साधिता हिन्दुभिः ख्रीष्टीयशिष्याणाम्, यथा तैः हिन्दवो दुष्टत्वेन हतभाग्यत्वेन पृथिव्याञ्च भयङ्करदानवत्वेन चाभिधीयेरन् इत्येवं प्रत्येकमपि ख्रीष्टीयबालकाय शिक्षा प्रदीयते। ख्रीष्टीयजनव्यतिरिक्ताः सर्वे विशेषतो हिन्दवो निन्द्या इत्येवं शिक्षात्र रविवासरीयविद्यालये

बालकबालिकानामङ्गीभूता, यथा शैशवकालादेव ख्रीष्टीयप्रतिष्ठानेषु तेऽनुदानपरा भवेयुः।

सत्यार्थं मा भवतु, अन्ततो नैतिकजीवनसमृद्धये स्वसन्ततीनां ताभिः ख्रीष्टीयमिशनारीजना नैवं प्रश्रयणीयाः। तदीयबालकबालिकाश्च प्राप्तवयसि अतीवनिर्दयमनुष्यत्वेन परिणता स्युरित्यत्र च किमाश्चर्यम्? यावदेवानन्तनरकपीडायाः प्रज्वलिताग्नेः गन्धकधूमस्य च वर्णना येन प्रचारकेण कर्त्तुं शक्या तस्या प्रतिपत्तिः प्राबल्यं वा मौलवादिषु तावदेवाधिकम्। पुनरुत्थानसम्प्रदायीयधर्मप्रचारश्रवणार्थं मत्सुहृतः काचन परिचारिका उन्मदागारं प्रेषिता। तत्कृते ज्वलद्गन्धकस्य नरकादेश्च परिमाणमतिरिक्तं जातम्।

पुनश्च माद्राजप्रदेशात् प्रकाशितः हिन्दुधर्मं विरुद्ध्य लिखितो ग्रन्थोऽवलोक्यताम्। केनचिद् हिन्दुजनेन ख्रीष्टीयधर्मविरोधेनैवंविधा पङ्क्तिरेका लिख्यते चेत्प्रतिहिंसया मिशनारीजना विषोद्गारं कुर्वन्तो दृश्यन्ते।

स्वदेशवासिनः! अत्र मया वत्सरैककालादपि अधिककालः स्थितः, एतेषां समाजस्य सर्वेऽशाः प्रायशो मया दृष्टाः। अधुना उभयदेशयोः मिथः तुलनया वो निगद्यते मया, मिशनारीजनाः सर्वत्र प्रचाररता यद्वयं दुष्टा इति; प्रकृत्या न वयं तादृशाः, प्रतिपादयन्ति च ते आत्मनः देवदूतत्वेन, तेऽपि न देवदूताः। मिशनारीजनैः हिन्दुविवाहप्रणाल्या दुर्नीतिः शिशुवधोऽन्ये च दोषा यावन्न्यूनतया कथ्यन्ते तावदेव तदीयकल्याणम्। तादृशाः बहवो देशाः सम्भवन्ति यत्रत्यवास्तविकचित्राणां समक्षं मिशनारीजनैरालिखितं हिन्दुसमाजस्य समुदितकाल्प-

निकचित्रं निष्प्रभं स्यात्। किन्तु वेतनग्राहिनिन्दुकता मज्जीवनस्य लक्ष्यं न। हिन्दुसमाजः समन्ताद्दोषवर्जित इत्येवं येन प्रतिपाद्यते चेत्प्रतिपाद्यतां नाम, मया तन्न कदापि प्रतिपाद्यते। समाजस्यैतस्य यावन्त्यस्त्रुट्योऽथवा शतशः शताब्दव्यापिदुर्विपाकवशाद् येऽवगुणाः प्रादुर्भूताः तद्विषये मदपेक्षया न केनापि ज्ञायते। विदेशिसुहृदः! यदि युष्माभिः याथार्थ्येन साहाय्यं विदधातुमागम्यते, नास्ति च विनाशि युष्मदीयोद्देश्यं तदा सिध्यतां वो मनोरथ इत्येवं प्रार्थना मामिका भगवत्सकाशे।

किन्तु अवसादापन्नायाः पतिताया जातेः मूर्ध्नि निरवच्छिन्नतया क्रमेण समयेऽसमये च गालिवर्षणेन स्वजातेः नैतिकश्रेयस्त्वप्रदर्शनमेव यदि व उद्देश्यं तदा मया स्पष्टमेतन्निगदितुं शक्यते, यदि स्तोकं न्यायपरायणतया सह तोलनं क्रियते तदा हिन्दवस्तावद् नीतिपरायणजातित्वेन जगतो जात्यन्तरापेक्षयानेकोन्नतासनं लप्स्यन्ते।

भारते तावद्धर्मः कदापि निगडनिगडिततया न संस्थापितः। न कोऽपि पुमान् तदीयेष्टदेवताग्रहणे सम्प्रदायनिर्वाचने आचार्यग्रहणे वा कदापि प्रतिबध्यते; तस्मादत्र यादृशोऽभ्युदयः सञ्जातो न तथान्यत्र।

अपरतश्च धर्माभ्यन्तरे विविधभावविकाशार्थं स्थिरबिन्दुरेकोऽपेक्षितः—समाजश्च तादृशस्थिरबिन्दुत्वेन स्थिरीकृतः। तत्फलतया समाजः कठिनशासनपूरितोऽचलश्च संवृत्तः। कारणं, स्वातन्त्र्यमेवाभ्युदयस्य केवलं सहायकम्।

पाश्चात्यदेशेषु किन्तु समाज आसीद् विविधभावप्रकाशनक्षेत्रं, स्थिरबिन्दुत्वेन च परिगणित आसीद्धर्मः। प्रतिष्ठितेन ख्रीष्टोपासनमन्दिरेण सहैक्यमत्यभजनमेवासीद्युरोपीयधर्मस्य मूलमन्त्रः, अद्यापि सोऽपरि-

वर्तितः; किञ्च यदि कश्चित् सम्प्रदायः प्रसिद्धमतात् स्तोकं स्वातन्त्र्यमवाप्तुमिच्छेत् तेन भूयशः शोणितपातस्य मध्यतः सकष्टं स्तोकं सौविध्यं लब्धव्यम्। एतत्फलञ्चैका महती समाजसंहतिः, किन्तु तत्र यद्धर्ममतं प्रचलितं तद्धि अतीवस्थूलजडवादमतिक्रम्य गन्तुं नालमभूत्।

साम्प्रतं हि पाश्चात्त्यदेशेष्वभावोऽयं भृशमनुभूयते। पुंसां यथार्थस्वरूपमात्मा चेत्येवं ह्यधुना पाश्चात्त्यदेशेषून्नतेश्वरतत्त्वान्वेषिगणस्य मूलमन्त्रः सञ्जातः। संस्कृतदर्शनमधीयानेन पुंमात्रेणैव ज्ञायते यद्वातोऽयं कुतः प्रवहन्नस्ति, किन्तु यावन्नानेन नवजीवनं सञ्चार्यते तावदेतेन न किमपि सम्पाद्यम्।

पुनश्च भारते नवनवावस्थितिसंघर्षेण समाजसंहतेर्नूतनतया संहतिविधानं सविशेषमपेक्षते। विगतशताब्द्याश्चतूर्णां त्रीनंशान् यावत् भारतं हि समाजसंस्कारसदोभिः समाजसंस्कर्तृभिश्च परिपूर्णतां गतम्। किन्तु अहो! तेषु सर्व एव वैयर्थ्यमभजन्त। न ज्ञातमेतैः समाजसंस्काररहस्यं; प्रकृतशिक्षाणीयविषया अज्ञातत्वेन प्रतिभाता एतेषां समक्षम्। अत्यन्तकर्मव्यापृतत्वादस्मदीयसमाजस्य यावन्तोऽवगुणास्तदर्थं धर्म एवाभियुक्तः। सुहृद्गात्रं मशकसंलग्नमिति दृष्ट्वा तज्जल्पप्रसिद्धेन पुंसा यथा भृशं प्रहारेण स समशकः सुहृत् निहतस्तद्वत् ते समाजस्य दोषाणां संशोधनकाले समाजध्वंसं साधयितुमुद्युक्ताः। किन्तु दैवानुकूल्येनास्मिन्नवसरे तैः पर्वतवदकम्प्ये दृढे गात्रे प्रहारः कृतः, परिशेषे तत्प्रतिघातबलेन ते स्वयमेव ध्वंसप्राप्ताः। ये च समस्ता निःस्वार्थपुरुषा महामनसश्च विपथनियन्त्रितचेष्टयासाफल्यं प्राप्तास्ते सर्व एव धन्य-

वादार्हाः! अस्मदीयनिश्चेष्टसमाजरूपं निद्रितदानवं जागरयितुं संस्कारोन्मत्ततायास्तादृशवैद्युतिकाघातस्यापेक्षासीत्।

आगम्यतां, अस्माभिरेतेषां शुभकामनया तदभिज्ञत्वलाभेन लाभान्वितैर्भूयताम्। ते स्तोकमपि न शिक्षिता यदभ्यन्तरदेशादेव विकाशः समारभते, बहिश्च स एव परिणमते; समुदयक्रमविकाशः पूर्वतनस्य कस्यचित् क्रमसंकोचनस्य पुनर्विकाशमात्रम्। बीजं तावत् परितः विद्यमाने पञ्चभूतेभ्य उपादानं संगृह्णातीति सत्यं, किन्तु वृक्षो हि स्वप्रकृत्यनुगुणः सम्पद्यत इति तेषामविज्ञातम्। यावन्न हिन्दुजातिरियं समन्ताद् विलुप्यते जातिर्नूत्नैका च तत्स्थानमधिकरोति तावत् प्राच्यप्रतीच्याभ्यां यावती चेष्टा क्रियतां नाम जीवद्दशायां भारतेन कदापि युरोपेण भवितुमशक्यम्।

यद्भारतं हि समुदितमहत्त्वनीतेराध्यात्मिकत्वस्य च प्राक्तना जननी, यस्यां भूमौ साधवः प्रव्रजन्त आसन्, यस्यां भूमौ ईश्वरकल्पाः पुंसोऽद्यापि निवसन्ति तादृशं भारतं किं विलोपं गच्छेत्? हे भ्रातरः! 'एथेन्सप्रदेशीयस्य'[२२] ज्ञानिमहात्मनोऽग्निवर्त्तिकां दधन् युष्माभिः साकं गन्तुं सम्मतोऽहम् एतादृशविततजगतः प्रत्येकशः नगरग्रामारण्यान्वेषणाय, क्वापि तादृशः पुमान् दृष्टश्चेद् दर्शनीयः स मह्यम्। फलेन परिचीयते वृक्ष इति सत्यम्। भारतस्य प्रत्येकरसालपादपतलपतितानि अनेकशः कीटदष्टानि अपक्वानि आम्रफलानि चिनुत, रचयत च शतसंख्यकान् गवेषणपूरितान् ग्रन्थान्। तथापि प्रत्येकमपि आम्रफलस्य यथार्थवर्णनं युष्माभिः कर्त्तुमशक्यम्। सुपक्वं सरसं रसालमेकं वृक्षमवचिनुत, तदैव आम्रविषयकसमस्ततत्त्वं युष्माभिरवगतं स्यात्।

एवमेव कोऽयं हिन्दुधर्म इति एतादृशैरीश्वरकल्पैः मनुष्यैः प्रकाश्यते। जातिरियं शताब्दैः सभ्यतां परिमापयति, यज्ञातिवृक्षः सहस्रवर्षव्यापिझञ्झावातं सहमानोऽपि तारुण्यस्याक्षयतेजसा साम्प्रतमपि गौरवान्वितः सन् दण्डायमानत्वेन विराजते, तादृशदेवमानवानां जीवनदर्शनेन तादृशजातेः स्वरूपं शक्तिः सम्भावना चावगम्यन्ते।

भारतं किं म्रियेत? तथा सति भुवः समुदयाध्यात्मिकत्वं विलुप्येत; चरितानां महान्त आदर्शाः सर्वे विलोपं गच्छेयुः; समुदितधर्मान् प्रति मधुरसहमर्मभावो विलुप्तः स्यात्; भावुकतासमूहश्च नंक्ष्यति; तत्स्थले कामविलासौ युगपत्तयाधिपत्यं करिष्यतः; वित्तं हि तादृशपूजायाः पूरोहितः; प्रतारणं, पाशवबलं, प्रतिस्पर्धिता च तादृशपूजापद्धतिः, मानवात्मा त तस्य बलित्वेन कल्पयिष्यन्ते। नेयं दशा कदापि भविता। कर्मशक्तितः सहिष्णुताशक्तिः प्रशस्यतरा। घृणाशक्तितः प्रेमशक्तिरधिकतरा शक्तिमती। भ्रान्ता हि ते यैस्तावत् हिन्दुधर्मस्य पुनरभ्युदयोऽयं केवलं देशप्रीतिजन्यावेगस्यैकं विकाशमात्रमिति मन्यते।

आगम्यताम्! प्रथमतः किमिदमभिनवं वृत्तमिति तदवगन्तुमस्माभिः यत्नो विधेयः। किं नेदमाश्चर्यकरं यद् एकत्र यथा साम्प्रतिकवैज्ञानिकगवेषणस्य प्रबलाक्रमेण पाश्चात्यमौलधर्माणां प्राचीनदुर्गजातं धूलिसात्क्रियते, एकत्र यथा वर्त्तमानविज्ञानस्यायोघनप्रहारेण केवलं विश्वासं ख्रीष्टोपासनालयसमितेः जनमताधिक्यं वाश्रित्य प्रतिष्ठितानि धर्ममतानि काचपात्राणीव चूर्णीक्रियन्ते, एकत्र यथा आक्रमणशीलाधुनिकचिन्तनस्य

क्रमश एधमानेन स्रोतसात्मनो मेलयितुकामानि धर्ममतानि सकलानि किंकर्त्तव्यविमूढानि जातानि, एकत्र यथा अपरसमुदयधर्मग्रन्थानां पुस्तकेभ्य आधुनिकचिन्तनस्य क्रमवर्धमानताडनया यावच्छक्यं विस्तृत औदार्योपेतोऽर्थो निष्क्रामितः, तेषु चाधिकाः तादृशप्राबल्यात् भग्नाः सन्तोऽप्रयोजनीयभाण्डारे स्तूपीकृततया स्थापिताः, एकत्र यथा चिन्तनशीलेषु नैके पुंसः ख्रीष्टोपासनालयस्य समुदयसंसर्गं परित्यज्य अशान्तिपयोधौ प्लाविततया विद्यमानाः सन्ति, अपरत्र तथैव ये च धर्मास्तादृशवेदरूपज्ञानस्य मूलप्रस्रवणात् पीतप्राणप्रदोदकास्तेषु केवलं हिन्दुधर्मो बौद्धधर्म एव पुनरुज्जीवितौ?

अशान्ताः पाश्चात्त्यनास्तिका अज्ञेयवादिनो वा केवलं गीतायामथवा धम्मपद एव लब्धाश्रयाः—यत्र तेषां मनांसि प्रशान्तानि निश्चिन्तानि च भवेयुः।

नियतिचक्रं पुनरावर्त्तितम्। यो हिन्दुश्च नैराश्यस्याश्रुपरिप्लुतनेत्राभ्यां तदीयप्राचीनवासभवनं रिपुप्रदत्ताग्निना वेष्टितमपश्यत्, साम्प्रतं हि वर्त्तमानचिन्तनस्य प्रखरालोकेन धूमेऽपसारिते तेन प्रत्यक्षीक्रियते —तद्वेश्मैव केवलं निजशक्त्या दण्डायमानत्वेनावतिष्ठते; अपराश्च ये ते सर्वे ध्वंसापन्ना अथवा हिन्द्वादर्शानुगुणेन नवनिर्मिताः। हिन्दुना स्वाश्रुमोचनं कृत्वा दृश्यते—येन कुठारेण तदूर्ध्वमूलाधःशाखाश्वत्थस्य मूलं छेत्तुं यः प्रयासो विहितः तेनैव वास्तविकास्त्रचिकित्सिकस्य शल्यकार्यं सम्पादितम्।

तेन प्रत्यक्षीक्रियते—तदीयधर्मसंरक्षणार्थं कृतं तदीयशास्त्रस्य विकृतार्थकरणेनान्येन केनचिद्वा छलाश्रयेण। न केवलमेतदपितु शास्त्रस्य

दुर्बलांशास्तेन दुर्बलत्वेनापादयितुं शक्याः, कारणं ते हि अरुन्धती-दर्शनन्यायाद् निम्नाधिकारिभ्यो विहिताः। तादृशाः प्राचीनऋषयो धन्य-वादार्हा यैस्तावदेवंविधा सर्वव्यापिनी सदाविस्तारशालिनी च धर्मपद्धति-राविष्कृता, जडराज्ये या कापि पद्धतिराविष्कृता या चाविष्करिष्यते ताः सर्वास्तेन सादरं ग्रहीतुं शक्याः। हिन्दुभिः ता नूतनतयावगन्तुं शिक्षिता आविष्कृताश्च, ये चाविष्काराः प्रत्येकमपि क्षुद्रधर्मसम्प्रदायस्य कृते भृशं क्षतिकरत्वेन प्रतिभाताः, ते च तदीयपूर्वपुंसां ध्यानलब्धस्य तुरीयभूमित आविष्कृतसत्यसमूहस्य बुद्धेरिन्द्रियज्ञानस्य च भूमौ पुनरा-विष्कारमात्रम्।

तस्मादेव कारणाद् तेन केनापि प्रकारेण तद्धि न त्याज्यम्, अथवा नान्यत्र तेन किमपि मृग्यम्। उत्तराधिकारक्रमेण तेन यदनन्तभाण्डारं प्राप्तं तस्मात् कियदं समासाद्य स्वकार्ये सम्पादिते सति तत्कृते तद्धि पर्याप्तं स्यात्। तत्कर्त्तुं तेन प्रवृत्तं, क्रमेण च इतोऽपि बहु करिष्यते। इदमेव किं न वास्तविकाभ्युत्थितेः कारणम्?

वङ्गीययुवानः! सविशेषं व आहूय मया निगद्यते—

भ्रातरः! व्रीडाकरं सदपीदं ज्ञातमस्माभिः यद् वैदेशिकैः यत्प्रकृत-दोषवशादे हिन्दुजातिर्निन्द्यते, तत्कारणं हि वयम्। भारतीयजात्यन्तर-मस्तकेषु भूयशोऽनेकगालिवर्षणस्य कारणं वयमेव। किन्तु ईश्वरो धन्यवादार्हः, एतद्धि अस्माभिरवगतं, तदाशीर्भिश्चास्माभिः केवलात्मान एव शुद्धीकरिष्यन्ते, तन्न, समुदयभारतमेव सनातनधर्मप्रचलितादर्शानु-सारं जीवननिर्माणाय साहाय्यं विदधातुं शक्यते। प्रथममेत तावत्,

क्रीतदासललाटे नियतिलिखितमीर्ष्यातिलकं प्रक्षालयामः। नासूयत कस्मा अपि। सकलशुभकर्मव्रतिनः साहाय्यविधानार्थं सततं सज्जीभवत। त्रिलोकस्य जीवमात्रमुद्दिश्य कल्याणावहमभिनन्दनं प्रेषयत।

आयात, अस्मदीयधर्मस्य केन्द्रीभूतं सत्यमेकं यद्धि हिन्दुबौद्धजैनानां समेषामेव साधारणानां परम्पराक्रमेण प्राप्यं तस्यैव भित्तिमाश्रित्य दण्डायमाना भवेम। तत्केन्द्रीभूतं सत्यम्—अयमेवानादिनिधनः सर्वव्यापी मानवात्मा यन्माहात्म्यं स्वयं वेदोऽपि प्रकाशयितुं नालम्, यन्माहात्म्यसकाशे अनन्तमादित्यचन्द्रतारकनक्षत्रपुञ्जं नीहारिकामण्डलञ्च बिन्दुतुल्यम्। न केवलं नरनारीषु प्रत्येकमपितून्नततमदेवेभ्य आरभ्य वः पदतलस्थकीटपर्यन्ताः सर्वे एव आत्मभूताः—केचनोन्नताः केचनावनताश्च। प्रभेदश्च परिमाणगतो न तु प्रकारगतः।

आत्मनोऽनन्तशक्तिरियं जडेषु प्रयुज्यते चेज्ज्ञागतिकाभ्युदयः सञ्जायते, चिन्तनेषु प्रयुज्यते चेन्मनीषाया विकाशो भवति स्वेषु च प्रयुज्यते चेन्मनुष्यो देवायते।

एत, प्रथमं तावदस्माभिः देवत्वमर्जनीयम्, तदनु अन्ये देवायेरन् तदर्थं साहाय्यं विधातव्यम्। स्वयं सिद्धाः सन्तोऽन्यान् सिद्धान् विदधातुं साहाय्यं कुरुत इत्येवं भवतु नो मूलमन्त्रः। नरा पापा इति नोच्यताम्; यूयं ब्रह्मस्वरूपा इति युष्माभिः निगद्यताम्। यदि च दुष्टो भवति कश्चन तथापि ब्रह्मैव स्मर्त्तव्यमस्माभिर्न पुनर्दुष्टः।

वेश्म यदि तिमिराच्छादितं भवेत्तदा सर्वदा तिमिरं तिमिरमिति खेदप्रकाशेन न कदापि तमोऽपसृयते, वरं हि आलोकानुसन्धानेन।

ज्ञायताम्—यत्किमपि अभावात्मकं, यदेव प्राक्तनभावान् भेत्तुमेव प्रवृत्तं, यदेव केवलं दोषदर्शनात्मकं, तदपक्षीयते एव; यदेव भावात्मकं, यदेव निर्माणतत्परं, यद् किमपि सत्यं प्रतिष्ठापयति, तदेवाविनश्वरं, तदेव च शाश्वतम्। एत, अस्माभिर्ब्रूवाणैर्भवितव्यम्—वयं सत्स्वरूपाः, ब्रह्म सत्स्वरूपम्, वयमेव ब्रह्मस्वरूपाः, शिवोऽहं शिवोऽहमिति कीर्त्तयन्तो वयमग्रे सरेम। चैतन्यमेवास्मल्लक्ष्यं न तु जडम्। प्रत्येकमपि वस्तुनो नामरूपे विद्येते, तदेव नामरूपातीतसत्ताधीनम्। एतदेव शाश्वतं सत्यमिति श्रुतिः प्रतिपादयति। आलोकानुसन्धानं विधेयम्, तमः स्वयमेव दूरीभूतं स्यात्। वेदान्तकेशरी गर्जयतु, शृगालाः स्वयमेव पलायन्ते। चतुर्दिक्षु भावोऽयं वितन्यमानो भवतु युष्माभिः, यदेव फलीभवतु नाम। विभिन्नरासायनिकपदार्था राशीक्रियन्ताम्, तेषां मिश्रणं स्वयमेव भविता। आत्मशक्तिं विकाशयत; तदीयशक्तिः भारतस्य सर्वत्र विस्तार्यताम्, यदावश्यकं तत् स्वयमेवासन्नं भवेत्।

युष्मदीयान्तर्निहितब्रह्मभावं विकाशयत, तत्परितश्च सुष्ठु सामञ्जस्येन मिलितं स्यात्। वेदोपवर्णितम् इन्द्र 'विरोचनसंवादं'[२३] स्मरत। उभाभ्यामेव तदीयब्रह्मविषयकोपदेशोऽवाप्तः। किन्तु दैत्येन विरोचनेन देहमेव ब्रह्मेत्येवं स्थिरीकृतम्, परन्तु इन्द्रस्य देवत्वादात्मैव ब्रह्मेति तेन निश्चितम्। तदिन्द्रस्य वः सन्ततितुल्याः; यूयं तस्यैव वंशोद्भवाः। जडं कदापि व ईश्वरो भवितुं नालं, देहं कदापि व ईश्वरो भवितुं न योग्यम्।

भारतं पुनरभ्युदेत्, किन्तु जडशक्त्या न, अपि तु चैतन्त्यशक्त्या, विनाशवैजयन्तीं समादधन्न अपि तु शान्तेः प्रेम्णश्च पताकां धारयत् —सन्न्यासिनां काषायवासो धारयत्, धनशक्त्या न अपि तु भिक्षापात्रं सहायीकृत्य। यूयं दुर्बला इति मा ब्रूत, वास्तविकतया स एवात्मा सर्व-शक्तिमान्। श्रीरामकृष्णदिव्यपादारविन्दस्पर्शेन कतिपययुवदलानामभ्युदयो जातस्तान् प्रति दिक्प्रपातं कुरुत। आसामप्रदेशादारभ्य सिन्धुं यावद्, हिमालयादारभ्य कन्याकुमारीकापर्यन्तं तैस्तदीयोपदेशामृतं प्रचारितम्। पदव्रजेन विंशतिसहस्रफुट्परिमितोर्ध्वस्थं हिमालयीयतुषारराशिमतिक्रम्य तैस्तिब्बतदेशस्य रहस्यमुद्घाटितम्। तैः चीरधारिभिः द्वारि द्वारि भैक्ष्यं सम्पादितम्। कियन्निपीडनं तदुपरि संवृत्तं, किं बहुना, आरक्षिपुरुषै-रनुस्रियमाणाः एते कारागारेषु निक्षिप्ताः, परिशेषे ते निर्दोषा इति यदा प्रमाणीकृतं सर्वकारसमक्षं तदा ते मोचिताः।

इदानीं ते केवलं विंशतिसंख्यकाः। परेद्युरेव संख्येयं द्विसहस्रे परिणमेत। हे वङ्गीययुवानः! युष्मद्देशार्थमिदमावश्यकम्, समुदयजग-दर्थमिदमावश्यकम्। अन्तर्निहितां वो ब्रह्मशक्तिमुद्बोधयत; तया शक्त्या क्षुत्तृषाशीतोष्णतादीनां सहने यूयं समर्था भवेत। विलासपूर्णसदने प्रोष्य सर्वप्रकारसुखसम्भोगद्रव्यैः परिवेष्टितानां नराणां स्वाभिमतधर्माचरणं देशान्तराणां कृते शोभातिशायि, किन्तु भारतस्य अन्तःस्थले तदपेक्ष-योन्नततरा प्रेरणा विद्यमाना। अनायासमेव भारतं हि शाठ्यं निश्चेतु-मलम्। युष्माभिस्त्यागः कर्त्तव्यः। जगत्सर्जनार्थं स्वयं पुरुषेण स्वार्थ-त्यागो विहितः, आत्मानं हि बलित्वेन प्रादात्। सुखस्वाच्छन्द्यनाम-

यशांसि पदवीं स्वजीवनमपि विसृज्य युष्माभिः मानवदेहरूपनिगडद्वारा तादृशः सेतुर्निर्मेयो यन्माध्यमेन लक्षशो मनुष्या जीवनपारावारपारं गन्तुमर्हाः स्युः।

समस्तशुभशक्तिं सम्मेलयत। कीदृशपताकाया अधो यात्रा त्वया विधीयत इति मा लक्षय। त्वदीया पताका नीलवर्णा, हरिद्वर्णा, लोहितेति मा गणय; समुदयवर्णसंमिश्रणेन प्रेम्णः शुभ्रां तीव्रां च दीप्तिं प्रकाशय। कार्यं सम्पादनीयं, यदेव फलं तद्धि स्वयं प्रकाश्यम्। कश्चन सामाजिकनियमस्त्वदीयब्रह्मत्वावाप्तौ प्रतिकूलतया प्रतीयमानो भवति आत्मशक्तेः सम्मुखतया स्थातुं सोऽनर्हः। भाविकाले किं सम्पत्स्यते तद्धि नावलोक्यते मया, दर्शनाग्रहोऽपि नास्ति मे। किन्तु दिव्यचक्षुर्भ्यां प्रतीतिगोचरमिदं मे यद् अस्मदीयप्राचीनजननी पुनर्जागरिता सती पुनर्नवयौवनशालिनी पूर्वापेक्षया च बहुगुणितमहिमान्विता भूत्वा तत्सिंहासनासीना विद्यते। शान्त्याशीर्वचोभिश्च साकमुद्घोषयत तस्या नाम।

इति

कर्मप्रेमतत्परः सदा युष्मदीयो विवेकानन्दः।

## पादटीका

१. एतत्त्रयं क्रमश ऋग्यजुरथर्ववेदानां प्रथममन्त्रांशभूतम्।
२. कठोपनिषत् १.२.५।
३. विवेकचूडामणौ तृतीयाध्याये।
४. सत्, चित्, आनन्दश्च।
५. रामानुजप्रवर्तितसम्प्रदायद्वयम्।
६. गुरुर्विजयतात्।
७. नानकानुयायिनां धर्मग्रन्थः।
८. पूजनीयः साधुजनः।
९. श्रीमच्छङ्कराचार्यप्रणीतवेदान्तभाष्यम्।
१०. उपनिषत्, गीता, ब्रह्मसूत्रश्च।
११. संहिता।
१२. पाणिनिव्याकरणमुपजीव्य प्रणीतं महाभाष्यम्, वेदार्थावबोधे सहायकम्।
१३. न्यायशास्त्रे प्रयुक्तं शब्दद्वयम्।
१४. शङ्कराचार्यप्रवर्त्तितदशनामिसम्प्रदायेषु अन्यतमः।
१५. त्यागेनैकेन इति पाठान्तरम्।
१६. आदिपुराणम्।
१७. प्राप्तः प्राप्नोत् — आत्मा साक्षात्कृतो येन।
१८. वेदान्तसूत्रम् ३.४.३६।
१९. गीता ३.२६।
२०. महाभारतम्, वनपर्व।
२१. गीता ४.३३।
२२. डायोजिनिस्महोदयः।
२३. छान्दोग्योपनिषदोऽवशिष्टांशो (८.७-१२) द्रष्टव्यः।

# स्वदेशवासिनः प्रत्यावेदनम्

एकत्र नव्यभारतेन प्रतिपाद्यते—पाश्चात्त्यदेशोचितान् भावभाषा-हारवेशभूषाचरणादीन् समाश्रित्यैव वयं भारतीयाः पाश्चात्त्यजातिरिव बलवीर्यसम्पन्नाः स्यामेति; अपरत्र प्राचीनभारतेन निगद्यते—मूढाः! अनुकरणेन परकीयभावो न स्वगतो भवति, विनार्जनं न किमपि स्वकीयं सम्पद्यते; सिंहत्वचावरणेन खरः किं सिंहायते?

एकत्र नव्यभारतं ब्रुते—पाश्चात्त्यजात्या यद्विधीयते तत्समीचीनं; तत् समीचीनं न स्याच्चेत् ते एतावता प्रबलाः कथंकारं सम्पन्नाः? अपरत्र च प्राचीनभारतेन निगद्यते—विद्युदालोकस्यातिप्राबल्येऽपि तस्य मुहूर्तस्थायित्वम्, बालक! चक्षुस्ते प्रतिहन्यते, सावधानेन भाव्यम्।

किं तर्हि पाश्चात्त्यजगतो नः शिक्षितुमेव नास्ति किमपि? किं तर्हि अलमस्मदीयप्रचेष्टया? वयं किं सम्पूर्णाः? समन्ताच्च नः समाजः किं निश्छिद्रः? भूयशः शिक्षितुं विद्यते, आमृतिप्रयत्नो विधेयः, प्रयत्न एव मानवजीवनस्योद्देश्यम्। यावज्जीवं शिक्षेति श्रीरामकृष्णपादा ऊचुः। यस्य पुंसः समाजस्य वा शिक्षितुं किमपि नास्ति स हि मृत्युमुखाभि-यात्री। शिक्षार्थं विद्यते—किन्तु भीरप्यस्ति।

मन्दधीः कश्चन बालकः श्रीरामकृष्णसमक्षं सततं शास्त्रं निन्द-न्नासीत्। एकदा तेन गीताश्लाघा विहिता। तच्छ्रुत्वा भगवता श्रीराम-

कृष्णेनागादि—मन्ये केनचिदाङ्गलपण्डितेन गीताप्रशंसा कृता, तस्मात्तेनापि प्रशस्यत इति।

हे भारतवासिनः! इयमेव प्रबला बिभीषिका। पाश्चात्त्यानुकरणमोह एतावता प्रबलः सम्पन्नो यदुत्तमानुत्तमज्ञानं बुद्धिविचारश्च शास्त्राद्विवेकाद्वा न निष्पद्यते। यो भावो यदाचरणञ्च श्वेताङ्गैः प्रशस्यते तदेवोत्तमम्, यदेव च निन्द्यते तद्धि अनुत्तमम्। अहो दुर्भाग्यम्! एतदपेक्षया कोऽन्यः परिचयः स्यान्नैर्बुद्ध्यस्य?

पाश्चात्त्यनार्यः स्वातन्त्र्येण विचरणशीलाः, तस्मात्तदेव वरम्; पाश्चात्त्यनार्यः स्वयंवराः, अत एव तदेवाभ्युदयस्योन्नतसोपानभूतम्; अस्मदीयवेशभूषाशनवसनजातं पाश्चात्त्यमनुष्या गर्हन्ते, तस्मात्तदसमीचीनं; मूर्तिपूजा दोषावहेति पाश्चात्त्यैरुच्यते; मूर्तिपूजा दूषितेत्यत्र कः सन्देहः?

पाश्चात्त्यैरेकस्या देवताया पूजनं मङ्गलप्रदत्वेन मन्यते इत्यतः अस्माकं देवाः देव्यश्च गङ्गोदके विसृज्यन्ताम्। पाश्चात्त्यमनुष्यैः जातिविभागो गर्हितत्वेनाभिमन्यते, तस्मात् यावन्तो वर्णाः एकीक्रियन्ताम्। बाल्योद्वाहो निखिलदोषमूलमिति कथयन्ति पाश्चात्त्यपुंस इत्यतो नूनमेव सोऽपि असमीचीनतया ग्राह्यः।

इमाः रीतयो रक्षणोपयोगिन्यस्त्यागार्हा वेति नास्माभिः प्रतिपाद्यते; किन्तु पाश्चात्त्यानामवज्ञादृष्टिरेवास्मदीयरीतिनीतीनां गर्हितत्वे कारणमिति चेत्तदवश्यमेव प्रतिवादयोग्यम्।

वर्तमानलेखकस्य पाश्चात्त्यसमाजविषयकं किञ्चित्प्रत्यक्षं ज्ञानं विद्यते; तेनेदमेवाधार्यते यत् पाश्चात्त्यसमाजाद् भारतीयसमाजस्य

मूलगते जाते उद्देश्ये चैतावदेव वैलक्षण्यं यत् पाश्चात्त्यानुकरणेन निर्मितं समाजमात्रमेवास्मद्देशे वैफल्यं व्रजेत्। पाश्चात्त्यसमाजेष्वनिवसद्भिः, पाश्चात्त्यसमाजेषु नारीजातेः पवित्रतासंरक्षणाय स्त्रीपुंसयोः युगपद् सञ्चरणे च प्रचलितविधिनिषेधान् अजानद्भिः यैः तयोः निर्बाधं युग-पत्संचरणं प्रशस्यते तान् प्रति नास्ति अस्मदीया अणीयस्यपि सहानुभूतिः। आङ्गलदेशे जनिं लभमानाः जात्यन्तरजाः स्पानियार्ड-पोर्त्तुगीज्-ग्रीक्देशीया इत्येवमप्रतिपादयन्त आत्मन आङ्गलत्वेन परिचाययन्ति।

बलवन्तं प्रति धावन्ति सर्वे; गौरवान्वितस्य गरिमाच्छटास्पर्शो भवतु स्वगात्रे इत्येवं धीर्दुबलमात्रस्यैव। भारतीया यदा युरोपीयवेश-भूषासज्जिता दृश्यन्ते तदा प्रतीयते, शङ्के पददलितैर्विद्याविहीनैर्दरिद्र-भारतवासिभिः सह साजात्यस्वीकारे एते लज्जन्ते!! चतुर्दशशतं वर्षाणि यावत् हिन्दुशोणितलालितः पार्सीगण इदानीं न एतद्देशोद्भवः। जाति-हीनब्राह्मणम्मन्यस्य ब्रह्मण्यगौरवनिकटे महारथिनां कुलीनब्राह्मणानां वंशमर्यादा विलीयते। कटितटमात्रावृता अज्ञाः मूढाः नीचजात्युत्पन्नाः सर्वे अनार्यजातिस्था इति साम्प्रतं च पाश्चात्त्यैः शिक्षा प्रदीयते! ते नाधुनास्मदीयजात्युद्भवाः!!

## स्वदेशमन्त्रः

भोः भारतवासिनः! किमिमां परानुवादितां परानुकृतिं परमुखा-पेक्षितां किमेतद् दासोचितदौर्बल्यं किमेतद् घृण्यं निन्द्यं च नैष्ठुर्य-मात्रमाश्रित्योन्नताधिकारो युष्माभिरधिगंस्यते? किमिमां व्रीडाकरीं कापुरुषतामवलम्ब्य वीरभोग्या स्वतन्त्रता युष्माभिरधिगंस्यते? हे भारतवासिनः! युष्मन्नारीणामादर्शभूता सीता सावित्री

दमयन्तीति न विस्मर्तव्यम्। सर्वत्यागी शङ्कर उमानाथो व उपास्य इति न विस्मर्तव्यम्। न हि इन्द्रियसुखाय स्वसुखाय वा युष्माकमुद्वाहो धनं वा जीवनं वेति न विस्मरत। मा विस्मर्यतां यूयमाजन्मन एव मातुः कृते बलित्वेनोपहृताः। महामायाच्छायामात्ररूपो वः समाज इति मा विस्मरत। नैतद् विस्मरणीयम् अन्त्यजा वैधेया दीना अज्ञाः खलपूजनाश्च युष्माकं समानशोणिताः, युष्माकं भ्रातरः। हे वीराः साहसमादत्त, सदर्पं घोषयत वयं भारतवासिनः, भारतवासिनो नः सहोदराः। वदत मूर्खभारतवासिनः, दरिद्रभारतवासिनः, ब्राह्मणभारतवासिनः, चण्डालभारतवासिनो नो भ्रातरः। यूयमपि कटिमात्रवस्त्रावृताः सन्तः सदर्पं सम्बोध्योद्घोषयत भारतवासिनो नो भ्रातरः, भारतवासिनो नः प्राणाः, भारतस्य सर्वा देवता अस्माकम् ईश्वरमूर्त्तयः। भारतीयसमाजोऽस्माकं शिशुशय्या यौवनोपवनं वार्धक्यस्याश्रयणीया वाराणसी। ब्रूत भ्रातरो भारतस्य मृत्तिका नो नाकः, भारतस्य हितमेवास्मद्धितम्। रात्रिन्दिवं च प्रार्थय, हे गौरीनाथ, हे जगदम्बिके, मनुष्यत्वं नोऽर्पय, मातर्दवय मे दौर्बल्यम्, अपनीयतां मे कापुरुषता, मनुष्यान्नः कुरुष्व।

# हिन्दुधर्मः श्रीरामकृष्णश्च

(प्रबन्धोऽयं हिन्दुधर्मः क इति नाम्ना १३०४तमे वङ्गाब्दे भगवच्छ्री-रामकृष्णपादानां पञ्चषष्ठितमजन्मोत्सवस्य प्रतिपालनसमये पुस्तिकाकारेण प्रथमं प्रकाश्यतां नीतः)

शास्त्रशब्देनानादिनिधनो वेदः परामृश्यते। धर्मशास्तौ केवलो वेदोऽयं सक्षमः। पुराणादीनि पुस्तकेतराणि स्मृतिशब्दवाच्यानि; यावच्च तानि श्रुतिमनुसरन्ति तावदेव तेषां प्रामाण्यम्। द्विविधं हि ऋतम्। यद्धि साधारणमनुष्याणां पञ्चेन्द्रियग्राह्यं तदुपस्थापितानुमानेन च ग्राह्यमित्येकविधम्। यच्चातीन्द्रियसूक्ष्मयोगजशक्त्या ग्राह्यं तदपरविधम्। प्रथमोपायेन सङ्कलितं ज्ञानं विज्ञानमित्याख्यायते। द्वितीयप्रकारेण सङ्कलितं ज्ञानञ्च वेद इत्यभिधातुं शक्यः।

वेदाख्योऽनादिनिधनोऽलौकिको ज्ञानराशिः सदातनः, यद्द्वारा विधात्रा स्वयं सर्गस्थितिप्रलयाः क्रियन्ते।

इयमतीन्द्रियशक्तिः यस्मिन् पुंसि आविर्भवति, तस्याभिधा ऋषिः, तया च शक्त्या यदलौकिकज्ञानं तेनोपलभ्यते तस्य नाम वेदः।

इयमृषित्वापत्तिः वेदद्रष्टृत्वापत्तिश्चैव यथार्थधर्मानुभूतिः। यावन्नैतस्योन्मेषस्तावज्ज्ञेयं यद् धर्मः केवलं वाचि प्रतिष्ठितः, धर्मराज्यस्याद्यसोपाने पदप्रतिष्ठा तदापि न जाता। निखिलदेशकालपात्रव्यापि वैदिकशासनं नाम वेदस्य प्रभावो देशविशेषे कालविशेषे पात्रविशेषे वा

नाबद्धः। सर्वजनीनधर्मव्याख्याता केवलो वेदः। अस्मद्देशीयेतिहास-पुराणादिषु ग्रन्थेषु म्लेच्छदेशीयधर्मग्रन्थसमूहे च यद्यपि अलौकिकं ज्ञानवेत्तृत्वं विद्यमानत्वं बिभर्ति तथापि अलौकिकज्ञानराशेः सार्वप्रथम्येन सम्पूर्णतोऽविकारिसंग्रहतया आर्येषु प्रथितो वेदनामधेयश्चतुर्धा विभागोपेतोऽक्षरराशिः समन्तात् सर्वोन्नतपदवीमधिकुरुते, निखिल-जगतः सपर्यार्हस्तथा आर्यीयाणां म्लेच्छीयानां वा समुदयधर्मग्रन्थानां प्रमाणभूमिः।

आर्यजात्याविष्कृतस्य प्रतिपादितपूर्वस्य वेदाख्यशब्दराशेः विषये एतदपि अवधेयं यत् तन्मध्ये यल्लौकिकं न चार्थवादो नापि ऐतिह्यं स एव वेदः।

ज्ञानकाण्डः कर्मकाण्डश्चेति द्विधा विभागोऽस्य वेदराशेः। कर्म-काण्डे क्रियाफलयोः मायाधिकृतजगदन्तर्भूतत्वात् ते देशकालपात्रादि-नियमैः परिवर्तितत्वं नीते नीयते नेष्येते च। सामाजिका रीतयो नीतयश्चापि कर्मकाण्डमिममवलम्ब्यैव व्यवस्थिता इत्यतस्ता अपि कालानुरूपं परिवर्त्त्यर्यन्ते परिवर्तिष्यन्ते च। लोकाचाराश्चापि सर्वे सच्छास्त्रस्य सदाचारस्य चाविसंवादितयाङ्गीकरिष्यन्ते। सच्छास्त्रविगीतं सदाचारविरोधि च लोकाचारमात्रं प्रति पारतन्त्र्यापन्नतैव आर्यजातेरधः-सम्पाते प्रधानकारणेषु आन्यतम्यं भजते।

ज्ञानकाण्डो वेदान्तभागो वैव निष्कामकर्म-योग-भक्ति-ज्ञानानि सहायीकृत्य मुक्तिप्रदस्य मायापारनेत्तृत्वस्य पदवीमधितिष्ठन् देशकाल-पात्रादिभिः अप्रतिहन्यमानः सन् सार्वलौकिकस्य सार्वभौमस्य सार्व-कालिकस्य च धर्मस्य केवल उपदेष्टा इत्याख्यायते।

कर्मकाण्डमाश्रितैः मन्वादितन्त्रैराधिक्येन देशकालपात्रानुरूपा सामाजिककल्याणावहकर्मविषयिणी शिक्षा प्रदत्ता। वेदान्तान्तर्निहिततत्त्वानि समुद्धृत्य अवतारादीनां महाचरितवर्णनमुखेन तादृशसकलतत्त्वानि पुराणादितन्त्रैः वैशद्येन व्याख्यायन्ते, क्रियते चानन्तभावमयस्य प्रभोर्भगवतः कश्चन भावविशेषं प्राधान्येनोपजीव्य तत्तद्भावानामुपदेशः।

किन्तु कालवशाद् सदाचारभ्रष्टा वैराग्यहीना लोकचारमात्रनिष्ठा आर्यसन्तानाः तत्सकलभावविशेषाणां सविशेषशिक्षार्थम् आपातप्रतिस्पर्धिवत् स्थितानां मन्दधियां मनुष्याणां कृते स्थूलया बहुविशदीकृतभाषया च स्थौल्येन वैदान्तिकसूक्ष्मतत्त्वानां सम्प्रचारिपुराणादितन्त्राणामपि मर्माविर्बोधेऽनर्हाः सन्तः अनन्तभावसमष्टिभूतमखण्डं सनातनधर्मं खण्डशो विभज्य साम्प्रदायिकेर्ष्या क्रोधानलञ्चोद्वोध्य तन्मध्ये मिथः आहुत्यर्थं सततं प्रयतमाना यदा एतद्धर्मभूमिं भारतवर्षं प्रायशो नरकभूमौ परि-णीतवन्तस्तदा कस्तावत् प्रकृतधर्मं आर्यजातेस्तथा नित्यं विवदमाने, आपातप्रतीतौ बहुधा विभक्ते, सर्वप्रतिस्पर्धिनि, आचारसर्वस्वसम्प्रदायैः समाच्छन्ने, स्वदेशिनां भ्रान्तिस्थले वैदेशिकानाञ्च घृणास्पदे हिन्दुधर्माख्ये युगयुगान्तरव्यापिविखण्डिते देशकालप्रभाववशाच्चेतस्ततो विक्षिप्ते धर्मखण्डसमूहे क्व यथार्थमैक्यम्—कालवशाच्च नाशोपेतस्य एतस्य सनातनधर्मस्य सार्वलोकिकं सार्वकालिकं सार्वदेशिकं च स्वरूपं निजजीवने निधाय लोकानां समक्षं सनातनधर्मस्य जीवद्दृष्टान्तभूतमात्मानं प्रदर्शयितुं जगद्धिताय च भगवान् श्रीरामकृष्णोऽवातरत्।

कथंकारं हि सदातनस्य सृष्टिस्थितिलयानां विधातुः सहयोगिभूतं शास्त्रं संक्षिप्तसंस्कारे ऋषिहृदये आविर्भवति इत्येतत्प्रदर्शनार्थम् एव-

म्प्रकारेण शास्त्रं प्रमाणीकृतं चेद् धर्मस्य पुनरुदयः पुनःसंस्थापनं पुनः-प्रचारश्च सम्भवेदिति हेतोः वेदमूर्त्तिना भगवता एतादृशकलेवरेण बाहीकशिक्षा प्रायशः सर्वतोभावेनोपेक्षिता।

प्रकृतधर्मरूपस्य वेदस्य तथा धर्मोपदेष्टृत्वस्य ब्राह्मणत्वस्य संरक्षणायै भगवान् पौनःपुन्येन कायं कलयतीति स्मृत्यादिषु प्रथितम्।

प्रपतितस्रोतस्विन्या जलराशिः समधिकवेगवान् सञ्जायते, पुनरुत्थिततरङ्गसमूहः समधिकतया विस्फारितः सम्भूयते। प्रतिपातानन्तरमार्यसमाजोऽपि श्रीमद्भगवतः कारुणिकनियन्तृत्वेन विगतामयः सन् पूर्वापेक्षयाधिकतरो यशस्वी वीर्यवान् च सम्पद्यते इतीतिहासप्रसिद्धम्।

प्रतिसम्पातानन्तरं पुनरभ्युत्थितः समाजोऽन्तर्गूहितं सनातनपूर्णत्वं बाहुल्येन प्रकाशयति, सर्वभूतान्तर्यामी प्रभुश्चापि प्रत्येकमवतारे आत्मस्वरूपम् आतिशय्येनाभिव्यनक्ति।

भारतभूमिरियं वारं वारं मूर्च्छाहता सम्पन्ना, भारतस्य विधाता विदधौ पुनः पुनरात्माभिव्यक्त्येमां पुनरुज्जीविताम्।

किन्तु गतप्राया ईषदवशिष्टयामा वर्त्तमानकालीना घोरविषादरजनीव काचिदपि अमानिशा पुण्यभूमिमेतां न समाच्छादयामास। एतत्पात-गभीरगर्भसन्निकटे प्राक्तनपाताः समस्ता गोष्पदोपमिताः। तथा च तत्कारणादेव एतत्प्रबोधस्य समौज्ज्वल्येन पुनर्बोधनेतराणि सूर्यालोके तारकावलीव प्रतीयन्ते। एतादृशपुनरभ्युत्थितेः महौजसः समक्षं पौनःपुन्येन सम्पादितपूर्वमोजः प्रायशो बाललीलायेत।

सम्पातदशायां सनातनधर्मस्य निखिलभावसमूहो योग्याधिकारिणामभावात् इतस्ततो विक्षिप्तत्वेन क्षुद्रशः सम्प्रदायाकारेण परिरक्ष्यमाण आसीत् तेषु च नैकांशा विलोपं प्राप्ताः।

एतन्नवाभ्युदये नवबलेन बलीयांसो मानवसन्ताना विखण्डितां विक्षिप्ताश्चाध्यात्मिविद्यां राशीकृत्य तस्या धारणेऽभ्यासे चार्हाः स्युस्तथा विलुप्तविद्यां पुनराविष्कर्त्तुं ते समर्था भवेयुः; एतस्याद्यनिदर्शनस्वरूपेण तावत् परमकारुणिकाः श्रीमद्भगवत्पादाः सर्वयुगापेक्षया समधिकसम्पूर्णं, सर्वभावसमन्वितं, सर्वविद्यासहायं युगावताररूपं प्रकाशयामासुः। नवयुगीयधर्मोऽयं समग्रजगतो विशेषतश्च भारतवर्षस्य भूतिनिदानं तथा एतन्नवयुगीयधर्मप्रवर्त्तकः श्रीमद्भगवान् पूर्ववर्तिनां श्रीयुगीयधर्मप्रवर्तकानां पुनःसंस्कृततया प्रकाशते। भोः मानवाः! विश्वसत, धारयत चेदम्।

मृतो जनो न पुरायाति। अवसिता रात्रिर्नावर्तते पुनः। विगतोच्छ्वासो न पुनस्तद्रूपं प्रदर्शयति। जीवः समकायं न द्विर्धत्ते। भोः मनुष्याः! जडपूजां विहाय यूयं चैतन्यसपर्यार्थमाहूयध्वे। गतानुशोचनातः साम्प्रतिकप्रयासे मयाहूयध्वे। विलुप्तमार्गस्य पुनरुद्धृत्या व्यर्थबलापचयात् सद्यो विनिर्मिते वरिष्ठे सन्निकृष्टपथे आहूयध्वे; धीमन्तः! अवगम्यताम्।

यच्छक्तेरुन्मेषमात्रमेव जागरितो दिग्दिगन्तव्यापी प्रतिध्वनिः, तत्पूर्णावस्था कल्पनापटेऽनुभूयताम्; व्यर्थसन्देहं दौर्बल्यं दासजात्युचितेर्ष्याद्विषौ च परिहाय एतन्महायुगचक्रपरिवर्तने सहायता विधीयताम्।

वयं प्रभोः वशंवदाः, प्रभोः पुत्राः, प्रभोः लीलासहायकाश्चेत्येवम्प्रत्ययं दार्ढ्येण समादधतोऽवतरत कर्मक्षेत्रेषु।

# भारतम् — वर्तमानं भविष्यच्च

आर्यबाबाख्यजनानां समादरो विधीयतां, प्राचीनभारतस्य गौरवमहोरात्रमुद्घोष्यतां, यावता च युष्माभिः डम्रवैः निनाद्यताम्, उच्चवर्णीया यूयं किं जीविताः? यूयं हि दशसहस्रवत्सरीयशवाः!! ये चलच्छ्मशानम् इत्येवं युष्मदीयपूर्वजैः विगीयन्ते, भारते यत्किमपि जीवत्तिष्ठति तत्तेषां मध्ये एव। चलच्छ्मशानीभूताश्च यूयम्। युष्मदीयवेश्मचत्वराणि संग्रहशालातुल्यानि, युष्मदीयाचारव्यवहाररीतिनीतीनां दर्शनेन प्रतीयते यत् पितामहीसकाशात् कथा निशम्यते मया, युष्माभिः सह साक्षात्कारेणालापेन च गृहं प्रत्यावृत्तस्य मे ज्ञानमिदं जायते यत् चित्रशालायां चित्राणि आलोक्य प्रत्यागतोऽहम्। भारतस्योन्नतवर्णोद्भवा यूयं मायासंसारस्यास्य प्रकृततया प्रहेलिका, प्रकृता च मरुमरीचिका। यूयं भूतकालावलम्बिनः—लुङ्लिङ्लिटश्चेत्येतत्सर्वं युगपत्। वर्तमानकाले युष्मद्दर्शनेन मन्यते यदसौ हि अजीर्णताजन्यं दुःस्वप्नम्। भाविकालेन शून्या यूयम्, यूयम् इतो लोपलुपश्च। स्वप्नलोकीयजना यूयम्, किमर्थोऽयं विलम्बो युष्मदीयः? प्रेतभारतवपुषः शोणितमांसरहितकङ्कालश्रिता यूयम्, किमर्थं न यावच्छीघ्रं रजस्सु परिणम्य यूयं वायौ मिश्रिता भवथ? हुँ, युष्मदीयासु अस्थिमयाङ्गुलिषु पूर्वपुरुषैः सञ्चितानि कतिपयानि अमूल्यरत्नानामङ्गुरीयकाणि सन्ति, पूतिगन्धस्य युष्मद्गात्रस्यालिङ्गनेन पूर्वकालीना नैका रत्नमञ्जुषाः सन्ति संरक्षिताः।

एतावत्कालं तद्दानार्थं सौविध्यं नाभूत्। साम्प्रतम् आङ्ग्लाधिपत्ये—निर्बाधविद्याचर्चाकाले उत्तराधिकारिभ्यस्तत् समर्प्यतां, याव-च्छीघ्रं प्रदीयताम्। शून्ये भवथ यूयं विलीनाः, भातु च नवं भारतम्। कर्षकस्योटजं भित्वा हलं धारयत् भातु, धीवरमालाकरचर्मकारान्त्यजानामुटजस्य मध्यतः। भातु पण्यशालातः, भर्जनकारिणश्चुल्लीपार्श्वतः। भातु शिल्पशालातः, हट्टतः, आपणतः। भातु अरण्यतो गिरितश्च। एते सहस्रशो वर्षाणि निपीडनं सोढवन्तः, नीरवं सोढवन्तः—तेनावाप्तैतैरपूर्वसहिष्णुता। सनातनदुःखभोगमेते कृतवन्तः, तेन प्राप्ता एतैरचला जीवनशक्तिः। मुष्टिमेयसक्तुमदन्ति चेत् जगत् परावर्त्तयितुं समर्था ह्येते; रोटिकार्धं प्राप्नुवन्ति चेत् एतदीयं तेजस्त्रैलोक्यमपि धारयितुं नालम्; रक्तबीजस्य प्राणस्वरूपा ह्येते। प्राप्नुवन्तश्चैते अद्भुत-सदाचारबलं यद्धि त्रैलोक्येऽपि दुरापम्। एतावती शान्तिः, एतावती प्रीतिः, एतावत् प्रेम, एतावता तूष्णीमवलम्ब्याहोरात्रं कायश्रमः कार्यकाले च सिंहतुल्यो विक्रम एतेषाम्!! अतीतस्य कङ्कालचय! एतदग्रतस्तावकम् उत्तराधिकारि भावि-भारतम्। त्वदीयासौ रत्नमञ्जुषा, त्वदीयमाणिक्य-निर्मिताङ्गुरीयकं निक्षिप्यतामेतेषां मध्ये, यावच्छीघ्रं शक्यं निक्षिप्यताम्, विलयस्व च त्वं वायौ, अदृश्यो भव, उत्कर्णेन केवलेन त्वया भवितव्यम्; यदैव च त्वद्विलयस्तदैव श्रोष्यते कोटिजीमूतस्यन्दी त्रैलोक्य-कम्पकारी भावि-भारत-स्योद्बोधनध्वनिः—वाहे गुरु की फतह इति। अर्थात् आचार्यस्य जयः, धन्य आचार्यः, जीयतामाचार्यः इत्युत्साहवाक्यं रणसङ्केतप्रदं पञ्जावप्रदेशस्थशिखसम्प्रदायव्यवहृतस्येति।

# युरोपस्य नवोदयः

कोऽयं युरोपमहादेशः? कृष्णा ईषच्छ्यामाः पीताः शोणितवर्णा एशिया-आफ्रिका-आमेरिकावास्तव्या नराः सर्वे युरोपपदावनताः किमर्थम्? किमर्थमेव वैते एतत्कलिकालाधिपतयः?

युरोपमहादेशोऽयमवगन्तव्यश्चेत् पाश्चात्त्यीयधर्मस्याकरभूतात् फ्राँसदेशाद् बोधः कर्तव्यः। धरण्या हि आधिपत्यं युरोपे, युरोपस्य महाकेन्द्रं हि पेरिस्नगरी पाश्चात्त्यसभ्यता, रीतिनीतयः, आलोकतमसी, उत्तमानुत्तमे इत्येतत्समेषां शिष्टः परिपुष्टो भावश्चात्रास्मिन् पेरिस्नगर्यालये।

इयं पेरिस्नगरी खलु महोदधिर्यत्र मणिमुक्तप्रबालादिरत्नानि यथेष्टं लभ्यानि, किञ्च, मकरकुम्भीरा अपि नैकेऽस्मिन्। फ्राँसदेशोऽयं युरोपस्य कर्मभूमिः। रम्योऽयं देशः—चीनीयान् कतिपयान् अंशान् विहाय एतादृशो देशो न क्वापि दृश्यः। नातिशीतौष्ण्यं, अत्यन्तमुर्वरा मृत्, अतिप्रावृट् नास्ति, अनावृष्टिरपि नास्ति, निर्मलं हि तद्गगनम्, निस्तापातपः, तृणश्रीः, क्षुद्रशो गिरयः, चीनीयवंशपादपाः, तनीयस्यस्तटिन्यः, क्षुद्रशः प्रसवणानि - तज्जले रूपम्, भूस्थले मोहः, वायौ औन्मत्त्यम्, आनन्दो वियति। निसर्गः सुन्दरः, मानुषा अपि सौन्दर्यप्रियाः। आबालवृद्धवनिता धनाढ्या दरिद्राश्च तदीयसदनचत्वराणि घर्षणेन मार्जनेन सज्जीकरणेन परिपाट्या च चित्रीकृत्य स्थापितवन्तः। जापानदेशं केवलं व्यतिरिच्य दृश्यमिदं न कुत्रापि लभ्यम्। तदेवेन्द्र-

भुवनतुल्यमट्टालिकापुञ्जम्, नन्दनकाननोपमितानि उद्यानानि, उपवनमयं कृषिक्षेत्रम्, सर्वेषु स्तोकं रूपं स्वल्पीयः सुचित्रं द्रष्टुं प्रयासः, साफल्यमपि लब्धम्।

## पेरिस्नगरी फ्राँसदेशश्च

पेरिस्नगरीयं तद्युरोपीयसभ्यतागङ्गाया गोमुखम्। बृहद्राजधानीयं मर्त्यस्यामरावती, सदानन्दनगरी च। एतादृशो भोग एतादृशो विलास एतादृशश्चानन्दो न लण्डन्-नगर्यां न बार्लिन्-नगर्यां न कुत्रापि च। लण्डन्-नगर्यां नियुयोर्कनगर्यां च धनाधिक्यं, बार्लिन्-नगर्यां विद्या धीश्च पर्याप्ता, परं नास्ति सा फ्राँसदेशीया मृत्, नास्ति च तादृशः फ्राँसीयमानवः। वित्तमस्तु, विद्याबुद्धिर्भवतु, नैसर्गिकी अभिरामतापि भवतु नाम—क्व मानवाः? मृतप्राचीनग्रीकसभ्यताया जन्मना अद्भुतमिदं फ्राँसीयचरितमुद्भूतम्—सदा हर्षोपेताः, सदा सोत्साहिनः, अतीव चञ्चलाश्च पुनरतिगाम्भीर्योपेताः, सर्वकर्मसूत्साहस्तेषाम्, प्रतिबन्धकतायाञ्च सत्यां पुनस्ते निरुत्साहिनः। किन्तु नैराश्यमिदं तदास्येषु न रमते दीर्घकालम्—ते च भवन्ति पुनर्जागरिताः।

पेरिस्विश्वविद्यालयोऽयं युरोपस्यादर्शभूतः। जगतो विज्ञानसदः एतदीयप्रतिष्ठानस्य प्रतिलिपिः; पेरिस्नगरीयं औपनिवेशसाम्राज्यस्य गुरुभूता, सर्वासु भाषास्वेव युद्धशिल्पस्य परिभाषिताः शब्दाः फ्राँसीया एव; एतेषां रचनानामनुवादसमस्ता युरोपीयभाषायाम्; दर्शनविज्ञान-शिल्पानाञ्च पेरिस्नगरीयमाकरभूता, सर्वत्र एतेषामनुकृतिः।

एते तावत् नागराः, जात्यन्तरोद्भूताः सर्वे ग्राम्याः। विद्याक्षेत्रेऽस्तु विज्ञानक्षेत्रे भवतु उत शिल्पे समाजनीतौ च भवतु, एतैः यत् क्रियते तद्धि पञ्चाशद्वर्षेभ्यः पञ्चविंशतिवर्षेभ्यो वा परं जार्मान्देशीयैराङ्गलजनैश्चाचर्यते। फ्राँसीयसभ्यतेयं स्कोट्लैण्डप्रदेशमस्पृशत्, स्कोटाधिपतिः इङ्गलेण्डप्रदेशस्याधीश्वरो बभूव, फ्राँसीयसभ्यतया इङ्गलेण्डप्रदेशः प्रोद्बोधितः; स्कोटाधिपतिना इङ्गलेण्डप्रदेशे स्टुवार्टवंशकाले राजकीयसमाजप्रभृतयः प्रतिष्ठापिताः।

फ्राँसदेशोऽयं पुनश्च स्वातन्त्र्यस्य वासभूमिः। प्रजाशक्तिः एतत्पेरिसनगरीतो युरोपावधिं महावेगेनान्दोलयति, तद्विनादेव युरोपस्य नवविग्रहो निर्मितः। साम्य-स्वाधीनता-भ्रातृत्वभावानां (एगालितेलिबार्ते-फ्रातेर्निते) स ध्वनिः फ्राँसदेशात् प्रयातः, फ्राँसदेश इदानीं भावान्तरमनुसरति, किन्तु युरोपस्य जात्यन्तराणि साम्प्रतमपि तं फ्राँसविप्लवं दृढं धारयन्ति।

स्कोट्लेण्डप्रदेशस्य जनैकेन प्रथितेन वैज्ञानिकपण्डितप्रवरेणाकथि मत्समक्षं यत् पेरिस्नगरी तावत् विश्वस्य केन्द्रीभूतम्, येन देशेन यावता पेरिस्नगर्या साकं संयोगः साधयितुं शक्यते तावदेव सा जाति-रभ्युदयं प्राप्स्यति। वचः इदमतिरञ्जितमपि नानृतम्; परन्तु एतदपि सत्यं यत् केनापि जगते नूतनो भावः कश्चन सम्प्रचारयितुं कांक्ष्यते चेत् तदा पेरिस्नगरी एव किल तत्प्रचारस्थलम्। पेरिस्नगर्यामस्यां ध्वनिरुद्बुद्ध्यते चेत् युरोपेणापि प्रतिध्वनिः नूनं विधास्यते। भास्कर्य-शिल्पिनः, चित्रकरा, गायकाः, नर्त्तक्यश्चास्यां महानगर्यां प्रतिष्ठां प्राप्नुवन्ति चेदन्यदेशेषु तद्धि सौकर्यादिव प्रतिष्ठितं भवेत्।

पेरिस्नगरीयं महाकदर्यो वेश्यापूर्णो नरककुण्ड इत्येवम्, अस्मदीय-देशे तावत् पेरिस्नगर्या एतस्याः केवलं निन्दैवाकर्ण्यते। एतच्चावश्यम् आङ्ग्लैरेव प्रतिपाद्यते, किञ्च, देशान्तरीयाणां येषां वित्तं विद्यते जिह्वोपस्थीयभोगं व्यतिरिच्य भोगान्तरं येषां जीवनेऽशक्यं तैः जिह्वो-पस्थोपकरणमयं विलासमयं पेरिसनगरमेव प्रत्यक्षीक्रियते।

किन्तु लण्डन्-बार्लिन्-भियेना-नियुयोर्कनगराणि अपि तादृशवार-वनिताभिः परिपूर्णानि, किन्तु वैलक्षण्यमेतदेव यद् अन्यदेशीयाना-मिन्द्रियचर्चा पशुतुल्या, सभ्यपेरिस्नगर्या मलं स्वर्णप्रलेपाच्छादितम्; वन्यशूकरस्य पङ्ककेलिस्तथा मयूरस्य विततपक्षं नृत्यमनयोर्मध्ये यत् पार्थक्यं तदेव नगरेतराणां पैशाचिकभोगतः पेरिस्नगरीयविलासस्य पार्थक्यम्।

उच्यतां तावत् कस्या जातेर्नास्ति भोगविलासेच्छा? तथा न स्याच्चेत् संसारेऽस्मिन् यस्य स्तोकं धनमर्जितं तेन किमर्थं पेरिस्-नगर्यभिमुखधावनं क्रियते? राजानश्च किमर्थमत्यन्तसंगोपनेन भिन्ना-भिधां धारयन्तो विलासविवर्तेऽस्मिन् अवगाहनेनात्मनः पवित्रीकर्त्तुम् अभ्यायान्ति? इच्छा सर्वत्रैव, उद्योगव्यतिक्रमो न कुत्रापि अवलोक्यते मया; तथापि एते फ्राँसीयाः सुसिद्धाः, जानन्ति च भोक्तुम्, विलासस्य सोन्नतशिखरमधिरूढा ह्येते।

तथापि अधिकानि तावत् कुत्सितानि नृत्यादीनि विदेशिनां कृते। फ्राँसीया नरा भृशं सावधानाः, व्यर्थव्ययं ते न कुर्वन्ति। एतादृशो घोरविलासः, एता अतिथिशालाः पानशालाश्च यत्र सकृत् भोजनेन

सर्वस्वान्ततापद्येत, एतानि सर्वाणि खलु मूढवैदेशिकानां धनाढ्यानां कृते। फ्राँसीयजना अतीव सुसभ्याः, रीतिनीतय एतैः ज्ञायन्ते, एतैः समादरातिशयो विधीयते, रूप्यकाणि सर्वाणि एतैः निष्काश्यन्ते स्मित-हासश्च विधीयते।

# भगवान्बुद्धः

## (डेट्रयेट्–नगरे प्रदत्तं भाषणम्)

तेषु तेषु सम्प्रदायेषु वयं पश्यामः एकैकस्याः साधनधाराया विशिष्टं विकासम्। बौद्धधर्मे निष्कामकर्मणो भाव एव प्रबलः। भवन्तः बौद्धब्राह्मण्यधर्मयोः सम्बन्धविषये मा भ्राम्यन्तु, अत्र बहूनामयं भ्रमो भवति। ते मन्यन्ते यद्बौद्धसम्प्रदायः सनातनपन्थिभिः सम्बन्धहीनः पूर्णतः स्वतन्त्रः कश्चन सम्प्रदायः। वस्तुस्थितिस्तु तथा न। अयमस्माकं सनातनधर्मस्यैव सम्प्रदायविशेषः। गौतमाभिधेयेन महापुरुषेणायं सम्प्रदायः प्रतिष्ठापितः। तत्कालगतस्य अविरतदार्शनिकविचारस्य तथा जटिलानुष्ठानपद्धतिजातस्य विशेषतः जातिभेदस्य विषये तस्य महत्य-श्रद्धाऽऽसीत्। केचिद्वदन्ति, 'वयं कस्मिंश्चित्कुलविशेषे जाताः, ये अस्मिन्कुले न जातास्तेभ्यो वयं श्रेष्ठतराः।' इति। भगवान्बुद्धः जातिभेदस्येदृशव्याख्यानस्य विरोधमकार्षीत्। स पौरोहित्याजीवानां दुष्कौशलस्यापि महान् विरोधी आसीत्। अतस्तेन तादृशस्य सम्प्रदायस्य प्रचारः कृतः यत्र सकामभावस्य लेशोऽपि नासीत्। तथैव स दर्शनविषये ईश्वरविषये च विविधमतानां समालोचनं कर्तुं नेहते स्म। तद्विषये च स पूर्णतः अज्ञेयवादी आसीत्। ईश्वरसद्भावविषये बहुभिर्बहुधा पृष्टः स प्राय उत्तरति स्म यत्, 'नाहमस्मिन्विषये

किञ्चिदपि जानामि।' इति। मनुष्यस्य वास्तविकं कर्तव्यं किमिति विषये पृष्टः स कथयति स्म, 'उत्तमकर्माणि कुरु तथा उत्तमो भव।' इति।

कदाचित् पञ्चविप्रास्तमुपसर्प्य तेषां विवादस्य मीमांसां कर्तुमवोचन्। तेष्वेकोऽवदत्, 'मच्छास्त्रेषु ईश्वरस्य स्वरूपं तल्लाभविषयकं च तत्त्वमित्थें प्रत्यपादि।' इति। अपरस्त्वाह, 'नहि, नहि। सर्वमनेन अन्यथैवोच्यते। मच्छास्त्रं तु तद्विषये अन्यथैव प्रत्यपीपदत्।' इति। एवमितरोऽपि ईश्वरस्य स्वरूपं तल्लाभोपायश्च स्वशास्त्रीयमतान्यनुसृत्य व्यवदन्त। समेषां तेषां वचांसि साग्रहं निशम्य स प्रत्येकमपि पप्रच्छ, 'भोः, कस्यचिदपि शास्त्रे किमित्थं प्रतिपादितं वर्तते यद् ईश्वरः कोपनस्तथा प्रतिहिंसापरायण उतापवित्रः?' इति।

विप्रैः सर्वैरप्यैकमत्येनाङ्ग्यकारि, 'नहि, सर्वेष्वपि शास्त्रेषु ईश्वरः पूतस्तथा कल्याणगुणोपेतः।' इति। बुद्धेन भगवताऽभाणि, 'बन्धवः! तर्हि कुतो नादौ भवन्तः शुद्धाः पवित्राः कल्याणकृतश्च भवितुं यतन्तां, येन भवन्त ईश्वरः कीदृशं वस्त्विति ज्ञातुं प्रभवेयुः।' इति।

नाहं सर्वाण्यपि तस्य मतानि समर्थयामि। स्वस्य कृते एव दार्शनिकविचारस्यावश्यकतामनुभवामि। बहुषु विषयेषु तेन सह मे वैमत्यं वर्तते। किन्तु वैमत्यमस्तीति तस्य चरित्रस्य, तस्य भावस्य सौन्दर्यं न ग्रहीष्यामीति कीदृशमिदम्? विश्वस्यास्याचार्येषु केवलस्य तस्यैव कार्येषु न कोऽपि बाह्य आग्रह आसीत्। अपरे सर्वेऽपि महापुरुषा आत्मानमवतारमघोषयन्। सर्वैरप्युक्तं, 'यो हि मयि विश्वसिति, स नूनं गमिष्यति नाकम्।' इति। किन्तु भगवान्बुद्धः अन्तिमश्वासं

यावत्किमुवाच? सोऽवादीत्, 'न कोऽपि मोक्षलाभे ते साहाय्यं नाचरिष्यति। स्वयमेव सहायीभव। स्वयत्नेन साधय स्वस्य मोक्षम्।' इति। स्वविषये तेनोक्तं, 'बुद्धशब्दस्य आकाशेनेवानन्तेन ज्ञानेन भूषितत्वमित्यर्थः। अहं गौतमः। अहं तामवस्थामलभे। यदि यूयमपि प्राणान्पणीकृत्य यतेध्वं यूयमपि तल्लप्स्यध्वे।' इति। सर्वविधाः कामनाः अभिसन्धींश्च सोऽत्यजत्। तस्मात्, स्वर्गस्यैश्वर्यस्य वाऽऽकाङ्क्षां नाकार्षीत्। स राजसिंहासनस्याशां सर्वविधं सौख्यं च निःशेषं परित्यज्य भारतवर्षस्याध्वसु भ्रामं भ्रामं भिक्षाटनेनोदरं पूरयन्नवर्तत, समुद्रेणेव विशालेन हृदयेन च मानवानां जीवजन्तूनां च कल्याणं यथा स्यात्, तं मार्गं प्रचारयति स्म। जगति स एवैको महापुरुषो यो हि यज्ञे वलीभूतानां पशूनां जीवनं रक्षितुं स्वजीवनं दातुं सिद्धोऽभवत्। सकृत् कश्चिद्राजानं सोऽवोचत्, 'यदि यागेषु छागशिशुं हुत्वा ते स्वर्गलाभः स्यात्, तर्हि नृहननेनेतोऽप्यधिक उपकारो भवेत्। तस्मात्कुतो न मामेव यागे वलिं दद्याः?' इति। वाक्यमिदं श्रुत्वा विस्मितोऽभूद्राजा। किन्त्वयं पूर्णतः सर्वाभिसन्धिभ्यो मुक्त आसीत्। कर्मयोगिनामयमादर्शभूतः पुरुषः। यामुच्चावस्थामयं प्राप्नोत्, तयैवेदं ज्ञातुं शक्यते यत्, कर्मभिर्वयमपि आध्यात्मिकतायाः चरमं शिखरमारोढुं क्षमा भविष्याम इति।

बहूनां कृते, ईश्वरविश्वासेन साधनमार्गः सुगमो भवति। किन्तु बुद्धस्य जीवनं पर्यालोच्येदं स्पष्टं प्रतीयते यद्यदि कश्चिदीश्वरे काञ्चिदपि श्रद्धां न दध्यात्, न कस्मिन्नपि दार्शनिकमते विश्वसेत्, न कस्यापि सम्प्रदायस्यानुसारी न स्यात्, न वा मन्दिरादिकमपि गच्छेत्, तथाच

प्रकटतया नास्तिको जडवादी च भवति तथापि स तां चरमामवस्थां लब्धुं क्षमः स्यात्। तन्मतस्य कार्यकलापस्य च विचारणे न नो लेशमात्रमप्यर्हताऽस्ति। यद्यहं बुद्धस्यापूर्वहृदयवत्ताया लक्षभागस्यैकमपि भागं प्राप्नुयां तर्हि आत्मानं धन्यं मन्येय। स्यादपि यद्बुद्ध ईश्वरे विश्वसिति स्म, अथवा स ईश्वरविश्वासी नासीत्, तन्मया न चिन्त्यते। किन्तु अपरैः भक्त्या, योगेन, ज्ञानेन च या पूर्णता समधिगता तेनापि साऽधिगता। केवलमत्र तत्र विश्वासेनैव न सिद्धिं विन्दति मनुष्यः। मुखे धर्मस्येश्वरस्य वार्ताया उच्चारणमात्रेण न किमपि सिध्यति। शुकोऽपि यच्छिक्षते तदावर्तयति। निष्कामकर्मणैव सिद्धिर्विन्द्यते।

## तस्य वाचकः प्रणवः

भवन्मनसि यो भावो वर्तते, तस्य प्रतिरूपः कश्चिच्छब्दोऽपि वर्तते; नास्माच्छब्दात्स भावः पृथक्कर्तुं शक्यः। एकस्यैव वस्तुनः बाह्यांशः शब्द इति, अन्तरंशश्च भाव इत्याख्यायते। विश्लेषणेन न कोऽपि भावं शब्दात्पृथक्कर्तुं शक्नोति। केचनैकत्र भूत्वा एकस्य भावस्य कृते कः शब्दः प्रयोक्तव्य इति निश्चिन्वन्त एव भाषामाविरकार्षुरिति बहूनां मतम्। किन्तु अयं भ्रम इति प्रमाणितम्। यावन्मनुष्याः सन्ति तावदेव शब्दो भाषा च वर्तेते। भावशब्दयोः कः सम्बन्धः? यद्यपि वयं पश्यामो यद्, एको भाव एकेनैव शब्देन प्रकाशयिष्यत इति न। विंशतौ भिन्नेषु देशेषु समानस्य भावस्य कृते भिन्नाः भिन्नाः भाषाः सन्ति। किन्तु यस्य कस्यापि भावस्य प्रकटनाय एकः शब्दो नूनमावश्यको भवति, किन्तु समानस्य भावस्य प्रकाशकाः शब्दाः सर्वे समानध्वनिविशिष्टा एव स्युरिति नियमो नास्ति। भिन्नजातीयानां भिन्नभाषासु शब्दस्य ध्वनयो भिद्यन्ते। अतोऽस्माकं टीकाकारैरुक्तं, 'यद्यपि भावशब्दयोः सम्बन्धः नैसर्गिकः किन्तु एकस्य शब्दस्य एकस्य भावस्य च सम्बन्धः अनतिक्रमणीयो भवतीति नावश्यकम्।'[1] इति। इमे शब्दा यद्यपि भिन्ना भवन्ति किन्तु भावस्य शब्दस्य च परस्परं सम्बन्धः स्वाभाविकः। यदि वाच्यावचकयोः प्रकृतः सम्बन्धः स्यात्तर्ह्येव शब्दभावयोः स्वाभाविकः सम्बन्धोऽस्तीति वक्तुं शक्यते। नोचेत्, स वाचकः शब्दः कदापि

सामान्यतो व्यवहर्तुं न शक्येत। वाचकः वाच्यपदार्थस्य प्रकाशकः। यदि स वाच्यपदार्थः पूर्वमेवास्ति तथा भृशं परीक्षया वयं पश्यामो यदयं वाचकः शब्दो बहुधा इमं वाच्यपदार्थं बोधितवानस्ति तदैव वयं निर्धारयामो यदनयोर्वाच्यवाचकयोः कश्चिद्यथार्थसम्बन्धोऽस्तीति। यदि ते पदार्थाः सम्प्रति नोपलभ्येरन्नपि सहस्रं जनाः वाचकद्वारेणैव तान्पदार्थान् प्रतिपद्यन्ते। वाच्यवाचकयोः स्वाभाविकः सम्बन्धः अवश्यमस्ति। अतो यदैवायं वाचक उच्चार्यते स तं वाच्यपदार्थं चित्ते जागरयति। सूत्रकारेणोक्तम् 'ईश्वरस्य वाचकः प्रणवः' इति। कुतस्तेनास्मिन्शब्दे एतावद्बलमाहितम्? ईश्वर इति भावं बोधयितुं सन्ति खलु शतशः शब्दाः। एकेन भावेन सह सहस्रशः शब्दानां सम्बन्धो भवति। ईश्वर इति भावः सहस्रेण शब्दैः सम्बद्धः, तेषु प्रत्येकमपि शब्द ईश्वरस्य वाचकः। समीचीनमिदम्। तथापि तेषु शब्देषु कश्चिदेकः शब्दो निर्धार्यः। तेषां वाचकानामेकं सामान्यमधिष्ठानं—साधारणी शब्दभूमिर्निर्णेतव्या। यश्च शब्दः साधारणो वाचको भविष्यति स एव श्रेष्ठतम इति परिगणयिष्यते। स च सर्वेषामपि ईश्वरवाचकशब्दानां प्रातिनिध्यं वहन्नीश्वरस्य यथार्थो वाचको भविष्यति। कस्यापि शब्दस्योच्चारणकाले वयं गलबिलं तालु चाधारत्वेनोपयुञ्ज्महे। कोऽपि तादृशः शब्दोऽस्ति किं य इतरेषां शब्दानां प्रकाशस्थानं, यः सर्वापेक्षया स्वाभाविकः शब्दः?—ॐ(अउम्) इति तादृशः शब्दः। सर्वेषामपि शब्दानामाधारस्थलम्। तस्य प्रथममक्षरम् 'अ'कारः सर्वेषां शब्दानां मूलम्—सर्वेषामपि शब्दानां तत्कुञ्चिकास्वरूपम्। तद्धि जिह्वायास्तालुनश्च कमप्यंशमस्पृष्ट्वैवोच्चार्यते। 'म'कारस्तु वर्गीय-

वर्णानामन्तिमः। तस्योच्चारणे ओष्ठयोः पिधानं भवति। उकारश्च जिह्वामूलात् मुखस्य मध्यं यावच्छब्दाधारस्य सीमां यावदुपसर्पतीव। इत्थञ्च ॐ इति शब्देन शब्दोच्चारणस्य सर्वविधो व्यापारः प्रकटितो भवति। तस्मादेवायं स्वाभाविको वाचकः—स एव तत्तच्छब्दानां जननीरूपेणावतिष्ठते। यावन्तः शब्दा उच्चारयितुं शक्याः, यावतां च शब्दानामुच्चारणेऽस्माकमस्ति सामर्थ्यं तेषां सर्वेषामपि सूचकः स शब्दः।

इमान्यनुमितानि तत्त्वानि विहायापि वयं पश्यामः, भारतवर्षे विविधाः सम्प्रदायाः सन्ति। सर्वेषामपि केन्द्रे ॐकार एव वर्तते। वेदेष्वाम्नाता अपि विविधा भावाः तमेव ॐकारमाश्रित्य वर्तन्ते। सम्प्रति विषयोऽयं विचारणीयो यत्, आमेरिकादेशेन इंलण्डदेशेन इतरदेशेन च सह कोऽस्य सम्बन्धः। अस्य सरलमुत्तरमिदं भवति यत्, सर्वेष्वपि देशेषु ॐकारस्य व्यवहारः सुशकः। यतो हि भारतवर्षे यावन्तः सम्प्रदायाः सन्ति तेषां सर्वेष्वपि सोपानेषु ॐकारः परिरक्षितोऽस्ति। तथैवायं शब्द ईश्वरसम्बन्धीयानां विविधानां भावानां प्रकटनायोपयुज्यते। अद्वैतवादिनः, द्वैतवादिनः, द्वैताद्वैतवादिनः, भेदाभेदवादिनः—किं बहुना नास्तिका अपि तेषां श्रेष्ठतममादर्शं प्रकटयितुम् ॐकारमवललम्बिरे। यदि मानवेष्वधिकाधिकानां जनानां धर्मभावप्रकटनाय अयं शब्द उपयुक्तः, तर्हि सर्वस्य देशस्य सर्वोऽपि वर्गः तमवलम्बितुमर्हति। GOD इति आङ्ग्लेयं शब्दं स्वीकुर्मश्चेदेतद्वक्तव्यं भवति यदनेन शब्देन यो भावः प्रकाश्यते सोऽत्यन्तं सीमितो वर्तते। यदि तद्व्यतिरिक्तस्य कस्यचिद्भावस्य प्रकटनमिष्यते तर्हि विशेषणं

किञ्चित्तत्र देयम्—यथा सगुणः, निर्गुणः, पूर्णः, परम इत्यादिकम्। अन्यासु भाषास्वपि ईश्वरस्य वाचका ये शब्दाः सन्ति तेषां विषयेऽपीदं वक्तव्यम्। तेषामपि सीमितभावप्रकटनस्य सामर्थ्यं वर्तते। किन्तु ॐकारे सर्वेऽपि भावा निहिताः। तस्मादेव सर्वैस्तद्ग्राह्यम्।

## पादटीका

१. सर्व एव शब्दाः सर्वाकारार्थाभिधानसमर्था इति स्थित एवैषां सर्वाकारैरर्थैः स्वाभाविकः सम्बन्धः—व्यासभाष्यस्य वाचस्पतिमिश्रकृत-टीकायाम्।

# यतेरादर्शस्तत्प्राप्त्युपायश्च

भ्रातरः सन्तानाश्च,

दीर्घस्य भाषणस्य भाषणपाटवप्रदर्शनस्य च नायं कालः। कांश्चन विषयान्युष्माकं पुरस्तात्प्रकटयितुमहमीहे। आशासे, इमान्विषयान् कार्यरूपेण परिणमयिष्यथ यूयमिति। प्रथमतः, कोऽस्माकमादर्शः स ज्ञेयः। द्वितीयतः, तान् आदर्शान् कार्यरूपेण परिणमयितुं क उपाय इत्यपि बोध्यम्। युष्मासु ये सन्न्यासिनः तैः परस्योपकाराय यतनीयम्। यतः सन्न्यासि-शब्देन तदेव ज्ञायते। त्यागविषये सुदीर्घस्य भाषणस्य कालो न वर्तते। संक्षेपेण तस्य लक्षणमहं निर्दिशामि—मरणप्रीतिः। सांसारिको जनो जीवने प्रीणाति। सन्न्यासिना मरणे प्रेतव्यम्। तन्नाम आत्महत्यां कुरु इति नैव। तन्न भवितुमर्हति। यतो हि आत्महत्याकारिणो मरणे प्रीतिमन्तो न भवन्ति। दृश्यते च—आत्महत्यां कर्तुं प्रयतमानः कोऽपि सकृदसफलः सन्पुनर्नात्महननाय यतते। तर्हि मरणप्रीतिर्नाम का? तस्य तात्पर्यमिदम्—अस्माकं मरणं निश्चतम्। एतदपेक्षया स्थिरं सत्यमन्यन्नास्ति। तर्हि कुतो न वयं कस्यचन महत उद्देश्यस्य कायपातं कुर्मः? अस्माकं सर्वाणि कार्याणि—आहारो विहारः अध्ययनं—यत्किमपि वयं शरीरेण साधयामः, तत्सर्वमस्मान् आत्मत्यागाय प्रेरयेत्। यूयमाहारेण शरीरं पुष्णीथ। किन्तु किं तेन पुष्टेन शरीरेण यदि तदपरस्य कल्याणाय

वयं नोत्सृजामः? अध्ययनादिभिः मनः पुष्णीथ। किन्तु किं तेन यदि परकल्याणाय यूयं स्वजीवनं नोत्सृजेत? यतो हि, जगदिदमखण्डसत्तारूपं —तस्य नगण्यः क्षुद्रः अंशस्त्वम्; तस्मादिमं क्षुद्रमहम्भावं न सम्प्रवर्ध्य भ्रातॄणां कोटेः सेवनमेव तव स्वाभाविकं कर्म, तन्न क्रियते चेदेवा-स्वाभाविकम्। उपनिषदस्तां महतीं वाणीं किं न स्मरथ?—

'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति।।'[१] इति।

युष्माभिः मन्दं मन्दं जीवनं त्यक्तव्यम्। मरण एव स्वर्गलाभः—मरणे एव सर्वं कल्याणं प्रतिष्ठितं भवति। तद्विपरीतवस्तुन्येव सर्वविध-मकल्याणमासुरिकं च तत्त्वं निहितम्।

तत इममादर्शं साकारं कर्तुमुपाया ज्ञेयाः। प्रथमत इदमवधेयम्, असम्भवस्यादर्शस्य दृढतरग्रहणेनालम्। अत्यन्तमुच्चतर आदर्शः जातिं दुर्बलां हीनां च विदधाति। बौद्धानां जैनानां च धर्मसंस्कारादनन्तरं तदेवाघटत। अपरतः, 'अतिप्रबलकर्मी' भवति चेदपि भ्रमाय। यदि ते स्वल्पतराऽपि कल्पनाशक्तिर्न स्यात्, यदि त्वां नियमयितुं कश्चिदादर्शो न स्यात्तर्हि त्वं कश्चित्पशुरेव। अत आदर्शमपि न खर्वं कुरु न च कर्मणोऽप्युपेक्षां कुरु। द्वयमपि 'अत्यन्तभूतम्' वर्जनीयम्। अस्मद्देशस्य प्राचीनो भावोऽयं, गुहायामासीनो ध्यानेन कायत्यागः। किन्तु विषयोऽयं सुष्ठु अवधार्यम्। अहमितरेषामपेक्षया पूर्वमेव मोक्षं लभेय इति भावोऽपि दोषायैव। मनुष्यः शीघ्रमथवा मन्दमवबुध्यत एव यद्, यदि स तस्य भ्रातुर्मोक्षायापि न यतेत तर्हि स स्वयं कदाचिदपि मुक्तो न भवेत्। यथा वो जीवने

प्रबलेनादर्शेन सह प्रबलं कर्मकरत्वमपि युक्तं भवेत्तथा कार्यम्। युष्माभिः गभीरतया ध्यानधारणाभ्यां प्रस्तुतैर्भाव्यं, परक्षणे च मठस्थं क्षेत्रं क्रष्टुमपि प्रस्तुतैर्भाव्यम्। दुरूपां शास्त्रीयसमस्यां समाधातुमपि प्रस्तुतैर्भाव्यं, परक्षणे च क्षेत्रे यच्छस्यमुत्पन्नं तद्विक्रेतुं विपणीं गन्तुमपि सन्नद्धैर्भाव्यम्। युष्माभिः शौचालयशोधनपर्यन्तं लघुतरेभ्यो गृहकर्मभ्यः सन्नद्धैर्भाव्यम्। न केवलमत्र, अन्यत्रापि।

युष्माभिश्चेदं स्मर्तव्यं यद्, अस्य मठस्योद्देश्यमस्ति मनुष्यनिर्माणम्। अमुक ऋषिरिदमवोचदिति केवलं ज्ञायते चेन्न पर्याप्तम्। न त ऋषयोऽद्य सन्ति—तैः सह तेषां मतमपि दूरमपास्तम्। यूष्माभिरपि ऋषिभिर्भाव्यम्। यूयमपि मनुष्याः, महापुरुषा अवताराश्च यादृशा मनुष्यस्तथैव यूयमपि मनुष्याः। स्वचरणैर्युष्माभिः स्थातव्यम्। शास्त्रपाठेन किं साध्यते? ध्यान-धारणादिभिर्वा कियत्साध्यते? मन्त्रतन्त्राणि वा किं कुर्युः? युष्माभिरियं नवीना पद्धतिः मनुष्यनिर्माणपद्धतिरवलम्बनीया। मनुष्यः स एव भवति यः तथा बलशाली येन स बलावतर इति वक्तुं शक्येत, किन्तु तस्य हृदये नारीसुलभा कोमलता वर्तते, न सा कोमलता दौर्बल्यम्। युष्मान्परितो ये कोटिशः प्राणिनः सन्ति तेभ्यो वो हृदयानि रोदनं कुर्युः, किन्तु यूष्माभिः दृढचित्तैर्भाव्यम्। एतदपि बोद्धव्यं, स्वतन्त्रचिन्ता यथा आवश्यकी तथैव आज्ञावहताऽप्यपेक्ष्यते। आपाततः, एतद्द्वयं मिथो विरुद्धं प्रतिभायात्, किन्तु युष्माभिराभ्यां मिथो विरुद्धाभ्यां गुणाभ्यां विशिष्टैर्भाव्यम्। यद्यध्यक्षा नदीमवतीर्य नक्रान्ग्रहीतुमादिशेयुस्तर्हि आदौ युष्माभिस्तत्कार्यं, ततः किमपि प्रष्टुमर्हथ। यद्यादेशोऽन्याय्योऽपि

स्यात्, तदापि प्रथमं तेषां वाक्यान्यनुसृत्य कार्याणि कुरुत। ततः प्रतिवदत। सम्प्रदायेषु, विशेषतः वङ्गीयसम्प्रदायेष्वयं महान्दोषः, यस्य मतं किञ्चिदिव भिद्यते स एव पृथक् सम्प्रदायमारचयति। प्रतीक्षितुं किञ्चिदपि सहिष्णुता न भवति। अतो युष्माभिः स्वसम्प्रदाये श्रद्धाशीलैर्भाव्यम्। अत्राबाध्यानां नास्ति स्थानम्। यदि कोऽप्यबाध्यो भवति निर्ममः सन् तं निष्कासय—विश्वासहन्ता कोऽपि न स्यादत्र। वायुरिव मुक्तस्तथा अबाधगतिको भव, किन्तु लतेव श्वेव च नम्रस्तथा आज्ञावहो भव।

## पादटीका

१. श्वेताश्वतरोपनिषद् ३.१६।

# गीतातत्त्वम्

*(स्वामिपादाः कलिकातायां निवासकाले प्रायशस्तदानीन्तने आलमबाजारमठ एव निवसन्ति स्म। तस्मिन्समये कलिकातावास्तव्याः केचिद्युवानः कृतपूर्वसन्नाहाः स्वामिनां सकाशाद् ब्रह्मचर्यव्रते सन्न्यासव्रते वा दीक्षिता अभूवन्। तान् गीतोपनिषदादीनामुपदेशेन ध्यानधारणादिशिक्षणेन च स्वामिनो भविष्यत्कर्मण उपयुक्तान्कुर्वन्त आसन्। कस्मिंश्चिद्दिने गीताव्याख्यानावसरे तैरुक्तानां वचनानां सारः केनचिद् ब्रह्मचारिणा लिखितः। तदेवात्र गीतातत्त्वमिति नाम्ना सङ्कल्यते।)*

गीतेतिग्रन्थः महाभारतस्यांशविशेषः। गीताबोधने यत्नात्प्राक्केचिद्विषया ज्ञेयाः। प्रथमतः, गीताग्रन्थः यथार्थत एव महाभारतस्यांशो वा? अर्थात्सोंऽशः वेदव्यासेन विरचितो वा? द्वितीयतः, कृष्ण इति कश्चिदासीद्वा? तृतीयतः, गीतायां यस्य युद्धस्योपवर्णनमस्ति तद्युद्धं वास्तवे अघटत वा? चतुर्थतः, अर्जुनादय ऐतिहासिका जना वा? तत्रापि प्रथमतः सन्देहकारणानि विचारयामः।

## प्रथमः प्रश्नः

वेदव्यासनाम्ना परिचिता बहवो जना आसन्। तेषु बादरायणो व्यासो वा द्वैपायनो व्यासो वा—कोऽस्य प्रणेता? व्यास इति तूपाधिमात्रम्। यो हि पुराणं किमपि रचयामास स एव व्यास-नाम्नाऽभिधीयते। यथा विक्रमादित्यः। इदमप्येकं सामान्यं नाम।

शङ्कराचार्येण भाष्यरचनात्पूर्वं गीताग्रन्थः सामान्यजनेषु तथा परिचितो नासीत्। तस्मात्परमेव सामान्यजनेषु गीताया विशेषः परिचयोऽभूत्। केचिद्वदन्ति गीताया बोधायनभाष्यं पूर्वं प्रचलित-मासीत्। यद्येतत्प्रमाणयितुं शक्यते तर्हि तस्याः प्राचीनत्वं व्यासकर्तृत्वं च सिध्यतीव। किन्तु वेदान्तदर्शनस्य बोधायनभाष्यमासीदिति यच्छ्रूयते, यद्भाष्यमवलम्ब्य रामानुजेन श्रीभाष्यं कृतमिति, शाङ्करभाष्ये उद्धृतो यो भाष्यांशः बोधायनेन कृत इति यदनुमीयते, दयानन्देनापि यस्य वचो बहुधा विचारितं तद्भाष्यं समग्रं भारतमन्विष्यापि मया नाधिगतम्। एवञ्च श्रूयते यत्, रामानुजोऽप्यपरस्य सकाशात्कीटदष्टमेकं पुस्तकं प्राप्य ततः स्वभाष्यं रचयामास। वेदान्तस्य बोधायनभाष्यमेव यद्येतावति अनिश्चयान्धकारे निमग्नं, तर्हि गीताविषये तत्कृतस्य भाष्यस्य प्रामाण्य-कल्पनं व्यर्थप्रयासमात्रमेव। केचनैतदप्यनुमिन्वन्ति यद् गीता शङ्करा-चार्येणैव प्रणीतेति। तन्मते शङ्कराचार्य एव गीतां विरचय्य महाभारते तां प्राक्षिपत्।

## द्वितीयः प्रश्नः

कृष्णविषयकः संशयो हि—छान्दोग्योपनिषदि प्राप्यते यत्, देवकीपुत्रः श्रीकृष्णः घोरनाम्न ऋषेरुपदेशं प्राप। महाभारतस्य कृष्णः द्वारकाया राजा, विष्णुपुराणोपवर्णितः कृष्णो गोपीजनवल्लभः, भागवते च कृष्णस्य रासलीला वर्णिता। प्राचीनकाले अस्माकं देशे मदनोत्सवो

नाम कश्चिदुत्सव आसीत्। सम्प्रति दोलोत्सवत्वेन परिणमय्य जनाः सम्प्रति कृष्णस्य स्कन्धमारोपयन्। रासलीलादिकमपि तथा नारोपितमित्यत्र किं प्रमाणम्? पूर्वमस्मद्देशे ऐतिहासिकसत्यानुसन्धानप्रवृत्तिरत्यल्पाऽऽसीत्। अतो यथाभिमतं यः कोऽपि यत्किमप्युक्तवान्। पूर्वञ्च यशस्य-भिरुचिर्जनानां न्यूना आसीत्। तस्मादेवमप्यभवत्, कश्चन कञ्चन ग्रन्थं प्रणीय स्वगुरोर्नाम्ना अन्यस्य कस्यचिद्वा नाम्ना प्रचारयामास। एतेषु स्थलेषु सत्यानुसन्धित्सोरैतिहासिकस्य महती विपत्तिः। पूर्वं भूगोलज्ञानमपि जनानां किञ्चिदपि नासीत्। बहुभिः कल्पनया इक्षुसमुद्र-दधिसमुद्र-क्षीरसमुद्रादिकं विरचितम्। पुराणे दृश्यते, कश्चिदयुतवर्षाणि, कश्चिद्वा लक्षवर्षाणि जीवित आसीदिति। वेदेषु पुनः प्राप्यते 'शतायुर्वै पुरुषः' इति। अत्र कमनुसरेम वयम्? अतः कृष्णस्य विषये इदमित्थमिति ऐतिहासिको निर्णयः असम्भव एव। जनानां ह्ययं स्वभावो यत्, कस्यचन महापुरुषस्य प्रकृतचरित्रं परतो जनैः विविधाः अस्वाभाविकाः कल्पनाः क्रियन्ते।

कृष्णस्य विषये इत्थं भासते यत्, स कश्चिद्राजा आसीदिति। एतत्प्रायशः सम्भवति यतो हि, प्राचीनकाले अस्माकं देशे राजानः ब्रह्मज्ञानप्रसारतत्परा आसन्। अन्यदप्यवधेयं, गीताकारो यो वा भवतु, तत्र या शिक्षा दीयते सम्पूर्णे महाभारतेऽपि सैव शिक्षा प्राप्यते। तस्मात्प्रायः, तस्मिन्काले कश्चिन्महापुरुषः नवीनतया इदं ब्रह्मज्ञानं प्रचारितवान्। एतदपि दृश्यते यत्प्राचीनकाले एकैकः सम्प्रदाय आगतः, ततस्तस्य किञ्चित्शास्त्रं प्रचारपथमागतम्। केभ्यश्चिद्दिनेभ्यः परं स सम्प्रदायस्तच्छास्त्रमित्युभयमपि लुप्तम्। अथवा सम्प्रदायो लुप्तः किन्तु तस्य शास्त्रमवशिष्टम्। अतोऽनुमीयते यत्, गीता प्रायस्तादृशस्य

सम्प्रदायस्य शास्त्रं यः सम्प्रति लोपं गतः। किन्तु तत्र उच्चभावा निहिता आसन्।

## तृतीयः प्रश्नः

कुरुपाञ्चालयुद्धस्य उत्कृष्टं प्रमाणं नोपलभ्यते। अथापि तद्युद्धमभवदित्यत्र न कोऽपि संशयः। अन्यः कश्चिद्विषयः—युद्धसमये एतावतो ज्ञानस्य भक्तेः योगस्य चोपदेशाः कुतः समागताः? किं तस्मिन्काले कोऽपि साङ्केतिकलिपिकुशलो जनस्तत्रासीद्यः तान्सर्वानुपदेशान्विलिलेख? केचिद्वदन्ति युद्धमिदं रूपकमात्रम्। अस्याध्यात्मिकं तात्पर्यं—सदसत्प्रवृत्तेः सङ्ग्रामः। अयमप्यर्थोऽसङ्गतो न स्यात्।

## चतुर्थः प्रश्नः

अर्जुनादीनामैतिहासिकताविषये सन्देहोऽयम्—शतपथब्राह्मणमत्यन्तं प्राचीनो ग्रन्थः। तत्र सर्वेषामपि आश्वमेधिकानां नामान्युल्लिखितानि। किन्तु तत्रार्जुनस्य नाममात्रमपि नास्ति। किन्तु परीक्षिज्जनमेजयादीनां नामान्युल्लिखितानि। किन्तु महाभारतस्य वर्णनानुसारं युधिष्ठिरार्जुनादयः अश्वमेधमकुर्वन्।

अत्रेदं विशेषतो ध्येयम्—एषामैतिहासिकतत्त्वानामन्वेषणेन नो धर्मशिक्षाया न कोऽपि सम्बन्धः। यद्यद्यैव तत्सर्वं मिथ्येति प्रतिपाद्यते, न काऽपि तेनास्माकं हानिः। तर्हि किमेतावता ऐतिहासिकगवेषणेन प्रयोजनम्? प्रयोजनमस्त्येव। सत्यमस्माभिर्ज्ञेयम्। कुसंस्कारबद्धैरस्माभिर्न भाव्यम्। अत्र एतद्विषये स्वल्पैव धारणा वर्तते। बहूनां सम्प्रदायानामयं

विश्वासोऽस्ति यत्, उत्तमविषयस्य प्रचारे यदि किञ्चिन्मिथ्या उच्यते तेन च तस्य विषयस्य प्रचारे साह्यं स्यात्तर्हि तत्र न कोऽपि दोषः। अर्थात्, फलमुपायस्य न्याय्यत्वं प्रतिपादयति। तस्मादेव बहुषु तन्त्रेषु 'पार्वतीं प्रति महादेव उवाच' इति दृश्यते। किन्तु वयं सत्यं ध्यायेमहि, सत्ये विश्वस्याम। कुसंस्कारो मनुष्यं तथा बध्नाति यत्, महम्मद-ईशख्रीष्टादयोऽपि महापुरुषा बहुषु कुसंस्कारेषु विश्वासवन्त आसन्। युष्माभिः सत्यं लक्षणीयं, कुसंस्काराः पूर्णतस्त्याज्याः।

## गीताया वैशिष्ट्यम्

इदानीमयं प्रश्नः—गीतायां किमस्ति? उपनिषद आलोचनेनेदं दृश्यते यत्, तत्र बहुषु अप्रासङ्गिकविषयेषु सहसा कस्यचन महासत्य-स्योपस्थापनं क्रियते। यथा अरण्ये किञ्चित्सुन्दरतरं पाटलपुष्पं—तस्य मूलपत्रकण्टकादिसमेतम्। किन्तु गीता का—गीतायामिमानि सत्यानि सुष्ठु व्यवस्थापितानि—यथा पुष्पस्तवकमुत पुष्पस्रक्। उपनिषदि श्रद्धाविषये बहु किमपि प्राप्यते। किन्तु भक्तिविषये तत्र किमपि नास्ति। गीतायां भक्तेर्विषये पुनः पुनरुपदिश्यते। तथैव भक्तेर्भावोऽपि परिस्फुटो वर्तते।

सम्प्रति गीतायाः कांश्चन मुख्यान्विषयानवलम्ब्य चर्चामहे। प्राचीनतरधर्मशास्त्रेभ्यः किं गीताया वैशिष्ट्यम्? वैशिष्ट्यमिदं—पूर्वं ज्ञान-योग-भक्त्यादिकं सर्वमासीत्किन्तु मिथो विवादमापन्ना आसन्ते। न केनापि तेषु सामञ्जस्यं कर्तुं यत्नः कृतः। गीताकारेण तद्विषये यत्नः

कृतः। किन्तु तेनापि यादृशः समन्वयभावो दर्शयितुं न शक्तः, ऊनविंशशतके भगवता रामकृष्णपरमहंसेन स साधितः।

द्वितीयतः, निष्कामकर्म—निष्कामकर्मशब्देनाद्य बहवो बहु किमपि बुध्यन्ते। केचिद्वदन्ति, निष्कामः भवेन्नाम, उद्देश्यहीनः स्यादिति। यदि सत्यमेव सोऽर्थः स्यात्तर्हि हृदयहीनाः पशवो भित्तयश्च निष्कामकर्मिणः स्युः। केचित्पुनः जनकस्य दृष्टान्तेन स्वं निष्कामकर्मित्वेन परिचाययन्ति। किन्तु जनकेन पुत्रोत्पादनं न कृतम्। एभिस्तु पुत्रोत्पादनद्वारेणैव जनकत्वसम्पादनस्य यत्नः क्रियते। वस्तुतः निष्काकर्मी पशुरिव जडहृदयो हृदयहीनो वा न। तस्य हृदयं प्रेम्णा सहानुभूत्या च तथापूर्णं यत्, समग्रं जगत्स प्रेम्णाऽऽलिङ्गितुं शक्नोति। ईदृशं प्रेम सहानुभूतिश्च लोकेन झटिति नावबुध्यते। अयं समन्वयभावो निष्कामकर्म चेत्येतद्द्वयं गीताया वैशिष्ट्यद्वयम्।

## गीतायाः कश्चिच्छ्लोकः

सम्प्रति गीताया द्वितीयाध्यात्किञ्चित्पठामः। 'तं तथा कृपयाविष्टमि'त्यादिश्लोके कथं सुन्दरकाव्येनार्जुनस्य दशा वर्णिता। ततः श्रीकृष्ण अर्जुनायोपदिशति 'क्लैब्यं मा स्म गमः पार्थ' इत्यादि। किमर्थमत्र भगवान् अर्जुनं युद्धे प्रवर्तितुमुपदिशति? अर्जुनस्य वास्तविकसत्त्वगुणस्योद्रेकाद्युद्धेऽप्रवृत्तिर्नागता। तमोगुणादेव युद्धे इच्छाभाव आसीत्। सत्त्वगुणिनां जनानामयं स्वभावो यत्, ते सामान्यसमये यथा तथैव विपत्स्वपि शान्ताः। किन्तु अर्जुनस्य मनसि भयमागतमासीत्।

तस्मिंश्च युद्धप्रवृत्तिरासीदेवेत्यत्र प्रमाणं यत्स युद्धायैवागतवान्। प्रायः अस्माकं जीवनेऽपीदृशी घटना दृश्यते।

बहवो मन्यन्ते, वयं सात्त्विकाः, किन्तु वस्तुतस्ते तामसिकाः। बहवः अत्यन्तमशौचभावमाश्रित्य मन्यन्ते वयं परमहंसा इति। कारणं शास्त्रं कथयति परमहंसो हि जडोन्मत्तपिशाचवद्भवन्तीति। परमहंसैः सह बालस्य तुलना क्रियते, किन्तु तत्रेदं ध्येयं यदियं तुलना एकदेशिनीति। परमहंसो बालकश्च नाभिन्नः। एकः ज्ञानातीतः, अपरस्मिन् ज्ञानस्योन्मेषोऽपि न जातः। प्रकाशपरमाणोरतितीव्रं स्पन्दनमतिमृदुस्पन्दनं चास्माकं दृग्गोचरं न भवति। किन्तु उभयोर्महान्भेदः। एकत्र प्रबलस्तापः, अपरस्मिंस्तस्य अत्यन्ताभावः। सत्त्वतमसी केषुचिदंशेषु समाने दृश्येते किन्तु तयोर्महान्भेदः। तमः सत्त्वस्य वेषं धृत्वा आगन्तुमिच्छति, अत्र दयारूपेण समागतम्।

अर्जुनस्यास्य मोहस्यापनयनाय भगवता किमुक्तम्? यथाहं प्रायो वदामि, जनान्पापिनो नोक्त्वा तस्मिन्या महाशक्तिर्विद्यते तद्विषये तस्य दृष्टिमाकर्षय। भगवानपि तथा वदति, 'नैतत्त्वय्युपपद्यते' इति। त्वमेवात्मा स्वस्वरूपं विस्मृत्यात्मानं पापिनं रोगिणं शोकग्रस्तं च मनुषे। एतत्त्वयि नोपपद्यते। अतो भगवानाह, 'क्लैब्यं मा स्म गमः पार्थ' इति। जगति पापतापौ रोगशोकौ न सन्ति। यदि किञ्चित्पापं जगति स्यात्तदिदं भयं नाम। येन कार्येण त्वयि शक्तिरुद्रिक्ता भवति तदेव पुण्यम्। यच्च ते तनुमनसी दुर्बले विदध्यात्, तदेव पापम्। इदं दौर्बल्यं त्यज। 'क्लैब्यं मा स्म गमः पार्थ' इति— त्वं वीरः, त्वयीदं क्लैब्यं नोपपद्यते।

यदि यूयं जगते इदं तत्त्वं श्रावयितुमर्हथ — 'क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते' इति तर्हि दिनत्रये जगतः सर्वे रोगशोकाः पापतापाश्चापगमिष्यन्ति। अत्रत्यवायौ भयस्य कम्पो वहति। इमं कम्पं परिवर्तय। त्वं सर्वशक्तिधरः, यत्र कुत्रापि गच्छ, मा भैषीः। महापापिन्यपि जुगुप्सां न कुर्याः। तस्य बहिर्भागमेव न पश्य। तस्यान्तर्यः परमात्माऽधितिष्ठते तं पश्य। समग्राय जगते वद, त्वयि पापं नास्ति, तापो नास्ति, त्वं महाशक्तेराधारः।

अनेनैकेनैव श्लोकेन सम्पूर्णगीतापाठस्य फलं लभ्यते। कारण-मस्मिन्नेव श्लोके गीतायाः समग्रो भावो निहितः।

# प्रश्नोत्तरम्

## (मठस्य दैनन्दिन्याः सङ्गृहीतम्)

प्र. गुरुरिति कः अभिधातुं शक्यते?

उ. यस्तेऽतीतं भविष्यं सर्वं वक्तुं शक्नुयात् स गुरुः। पश्य मम गुरुर्मम भूतभविष्यगं सर्वमवदत्।

प्र. भक्तिः कथं लभ्यते?

उ. भक्तिस्तव अन्तरेव वर्तते। केवलं तस्योपरि कामकाञ्चनयोरावरणं वर्तते। तदावरणं निस्सारितं चेदन्तर्वर्तिनी सा भक्तिः स्वयमेव प्रकाशिता भविष्यति।

प्र. भवान्वदति, स्वपादयोस्तिष्ठ। अत्र स्वं नाम किम्?

उ. अवश्यमेव परमात्मनिर्भरता मम वचनास्योद्देश्यम्। किन्तु अस्मिन् 'अपक्वे मयि' निर्भरताया अभ्यासोऽपि क्रमशः अस्मान्युक्तस्थलं नयति, यतो हि जीवात्माऽपि परमात्मनः प्रकाशान्न भिन्नः।

प्र. यद्येकमेव वस्तु यथार्थं सत्यं, तर्हि योऽयं द्वैतबोधः—यः सर्वदा सर्वस्य जायते स कुत आयातः?

उ. विषयो यदा प्रथमतोऽनुभूयते, तस्मिन्क्षणे द्वैतबोधः कदापि न भवति। इन्द्रियेण सह विषयस्य संयोगात्परं यदाऽस्माभिः तज्ज्ञानं बुद्धौ आरोप्यते तदैव द्वैतबोध आयाति। विषयानुभवकाले यदि द्वैतबोधः अभविष्यत्तर्हि ज्ञेयं ज्ञातुः स्वतन्त्रतया ज्ञाता च ज्ञेयात् स्वतन्त्रतया अवस्थातुमशक्ष्यत्।

प्र. सुसमञ्जसचरित्रनिर्माणस्य प्रकृष्ट उपायः कः?

उ. येषां चरित्राणि तथा निर्मितानि तेषां सङ्ग एवास्य उत्कृष्टतम उपायः।

प्र. वेदस्य विषये भवतां का दृष्टिः?

उ. वेद एव प्रमाणपदवाच्यः। किन्तु वेदस्य ये भागा युक्तिविरुद्धास्ते भागा न वेदपदवाच्याः। अन्येषु शास्त्रेषु पुराणादिषु तावदेव ग्राह्यं यावन्न वेदविरुद्धम्। वेदात्परं जगति यत्र कुत्रापि यः कोऽपि धर्मभाव आविर्भूतस्स सर्वोऽपि वेदादेवोद्भूत इति ज्ञेयम्।

प्र. य एष सत्यत्रेताद्वापरकल्यात्मकयुगविभागः शास्त्रेषूपलभ्यते, तत्किं ज्योतिषशास्त्रस्य गणनया प्रमाणितमुत कल्पनामात्रम्?

उ. वेदेषु एतादृशयुगविभागस्योल्लेखः कोऽपि नास्ति। एतत्तु पौराणिकयुगे कपोलकल्पनया सृष्टम्।

प्र. शब्दभावयोः कोऽपि वास्तविकः सम्बन्धोऽस्ति? अथवा यः कोऽपि शब्दो यं कमपि भावं बोधयितुं क्षमः? किं मनुष्या येन केनापि भावेन यं कमपि शब्दं समबध्नन्?

उ. विषयेऽस्मिन्बहवो विवादाः भवितुमर्हन्ति। निश्चयोऽत्र दुष्करः। एवं भाति यत्, शब्दभावयोर्वर्तते कश्चित्सम्बन्ध इति। किन्तु स सम्बन्धो नित्य इति कथं वक्तुं शक्यते? पश्य, एकमेव भावं बोधयितुं विविधासु भाषासु कियन्तो वा शब्दा उपयुज्यन्ते। कश्चन सूक्ष्मः सम्बन्धः स्यादपि योऽस्माभिरिदानीमपि ग्रहीतुं न पार्यते।

प्र. भारतस्य कार्यप्रणाली कीदृशी भवेत्?

उ. प्रथमतः, सर्वे यथा कार्यशीला भवेयुस्तथा तेषां शरीरं यथा सबलं स्यात्तादृशी शिक्षा प्रदेया। एवं द्वादश पुरुषसिंहा जगदेव जेष्यन्ति। किन्तु लक्षमेषाणां गणेनापि तदशक्यम्। द्वितीयतः, सुमहतोऽपि पुरुषस्यादर्शमनुकर्तुं शिक्षा न दातव्या।

प्र. रामकृष्णमिशन् भारतस्य पुनरुत्थानाय कीदृशं भागं वक्ष्यति?

उ. अस्मात्मठात्बहवश्चरित्रवन्तो जना निर्गत्य समग्रं विश्वमाध्यात्मिकतायाः प्लावनेन प्लावयिष्यन्ति। तेन सार्धमेव अपरेषां विषयाणामप्यौन्नत्यं भविष्यति। इत्थं ब्राह्मणक्षत्रियवैश्यानामभ्युदयो भविष्यति, शूद्रजातिर्न भविष्यति। तैरिदानीं यानि कार्याणि क्रियन्ते तानि यन्त्रैः करिष्यन्ते। भारतस्य वर्तमानः अभावः—क्षात्रशक्तेः।

प्र. जन्मान्तरे मनुष्यस्य पश्वादिनीचयोनिं प्रति गमनं सम्भवति किम्?

उ. अवश्यं सम्भवति। पुनर्जन्म कर्मनिर्भरं भवति। यदि कश्चित्पशुवदाचरेत्तर्हि स पशुयोनिं गमिष्यत्येव।

प्र. मनुष्यः पुनः पशुयोनिं प्राप्स्यति कथं तन्न बुध्यते। क्रमविकास-नियमेन स यदि सकृन्नरयोनिं प्राप्तोऽस्ति तर्हि स कथं पुनः पशुयोनिं प्राप्स्यति?

उ. कुतः? यदि पशुर्मनुष्यो भवितुमर्हति तर्हि कुतो न मनुष्यः पशुर्भवितुमर्हति? एकमेव सद्वस्तु वर्तते—मूलं तु सर्वेषां समानमेव।

प्र. कुण्डलिनी इति कश्चन पदार्थः किं वस्तुतः अस्माकं स्थूलशरीरे वर्तते?

उ. श्रीरामकृष्णो वदति स्म, योगिनो यत्पद्ममिति वदन्ति तद्वस्तुतः मानवशरीरे न वर्तते। योगाभ्यासेन तत्सर्वमुत्पद्यते।

प्र. विग्रहाराधनेन मुक्तिर्लप्स्यते किम्?

उ. विग्रहाराधनेन साक्षान्मुक्तिर्न लभ्यते—किन्तु मोक्षस्य गौणं साधनं तत्, मोक्षमार्गे सहायकम्। विग्रहाराधनं न निन्द्याम्। यतो हि बहूनां कृते विग्रहः अद्वैतोपलब्धये मनः प्रस्तौति। अद्वैत-ज्ञानलाभेनैव मनुष्यस्य मोक्षः सम्भवति।

प्र. अस्माकं चरित्रस्य उन्नततम आदर्शः कः स्यात्?

उ. त्यागः।

प्र. भवान्वदति, बौद्धसम्प्रदायो भारते घोरामवनतिमानीतवानिति—एतत्कथम्?

उ. बौद्धाः सर्वानपि सन्न्यासिनं सन्न्यासिनीं वा कर्तुमयतन्त। सर्वे तथा भवितुं नार्हन्ति। एवमनर्होऽपि भिक्षुरभूत्। क्रमशस्तेषु त्यागभावना क्षीणतां गता। अन्यत्कारणम्—धर्मस्य नाम्ना तिब्बतस्य अन्येषां च देशानाम् अनार्याचरणानामनुकृतिः। तेषु स्थलेषु धर्मप्रचारं कर्तुं गत्वा तेषु ते दुराचाराः पदमकुर्वन्। ते च धर्मस्य नाम्ना तद्भारते आनयन्।

प्र. उत माया अनाद्यनन्ता?

उ. समष्ट्या माया अनाद्यनन्ता। व्यष्ट्या किन्तु सा सान्ता।

प्र. माया नाम का?

उ. वस्तुत एकमेव वर्तते। तज्जडमुत चैतन्यमिति येन केनापि नाम्ना अभिदधातु नाम, तयोर्मध्ये एकं विहायापरस्य कल्पनमशक्यम्। एतदेव माया अज्ञानं वा।

प्र. मोक्षः कः?

उ. मोक्षो नाम पूर्णं स्वातन्त्र्यम्। सदसतोरुभयविधयोर्बन्धनान्मोक्षः। आयस-शृङ्खलाऽपि शृङ्खला, हैमशृङ्खलाऽपि शृङ्खला। श्रीरामकृष्णो वदति स्म, पदे कण्टकं लग्नं चेत्, तदुद्धर्तुं कण्टकान्तरमपेक्षितं भवति। उद्धृते कण्टके तूभयमपि क्षेप्तव्यं भवति। एवं सत्प्रवृत्तिभिरसत्प्रवृत्तयो दमनीयाः। ततः सत्प्रवृत्तयोऽपि जेतव्याः।

प्र. भगवत्कृपां विना मोक्षो न सम्भवति किम्?

उ. मोक्षस्येश्वरस्य च न कोऽपि सम्बन्धः। मोक्षस्तु अस्मासु पूर्वमेव वर्तते।

प्र. अस्मासु यन्मत्पदवाच्यं तन्न देहादिभ्य उत्पन्नमित्यत्र किं प्रमाणम्?

उ. अनात्मेव 'अहम्' इत्यपि देहादिभ्यो जातम्—प्रकृतस्य 'मम' अस्तित्वस्य केवलं प्रमाणं तस्य प्रत्यक्षत उपलब्धिः।

प्र. वास्तविकज्ञानी वास्तविकभक्तो वा को भवेत्?

उ. प्रकृतज्ञानी स, यस्य हृदि अगाधं प्रेम यश्च सर्वावस्थासु अद्वैततत्त्वं साक्षात्कुरुते। प्रकृत भक्तश्च स, यः जीवात्मानं परमात्माभिन्नं जानन्प्रकृतं ज्ञानमलभत, सर्वस्मिंश्च स्निह्यति, सर्वेभ्यश्च यस्य हृदयं क्रन्दति। भक्तिज्ञानयोर्य एकं पक्षमालम्ब्यापरं निराकरोति न स भक्तो न वा ज्ञानी— स तु तस्करः, वञ्चकः।

प्र. ईश्वरसेवनेन किं प्रयोजनम्?

उ. यदि ईश्वरास्तित्वे विश्वसिषि तर्हि ईश्वरसेवनस्य बहूनि कारणानि भवितुमर्हन्ति। सर्वं शास्त्रं वक्ति यदीश्वरसेवनं नाम तस्य स्मरणमिति। यदि तस्मिन्विश्वासोऽस्ति तर्हि जीवनस्य प्रतिपदक्षेपं तस्य स्मरणस्य हेतुरुस्थास्यते।

प्र. मायावादः अद्वैतवादाद्भिन्नो वा?

उ. न। मायावादमन्तरेण अद्वैतवादस्य काऽपि व्याख्या न सम्भवति।

प्र. ईश्वरः अनन्तः। स मनुष्यरूपं धृत्वा कथं लघीयान्भवति?

उ. ईश्वरः अनन्त इति तु सत्यमेव। किन्तु यादृशमानन्त्यं युष्माभिः कल्प्यते तादृशमानन्त्यं न। अनन्तो नाम काचित्प्रकाण्डा जडसत्तेति युष्माकं भावना। ईश्वरो मनुष्यरूपं धर्तुं न शक्नोतीत्युक्ते युष्माभिश्चिन्त्यते यत्, प्रकाण्डोऽयं साकारः पदार्थः लघीयान्भवितुं नार्हतीति। किन्तु ईश्वरः तथा अनन्तो न। तस्यानन्त्यं चैतन्यस्यानन्त्यम्। अतः मनुष्यरूपधारणेनापि तस्य स्वरूपं न हीयते।

प्र. केचिद्वदन्ति, पूर्वं सिद्धो भव, ततः कार्ये तवाधिकारो भविष्यति। केचिच्च वदन्ति, आरम्भत एव कार्यं करणीयमिति। भिन्नयोरनयोर्मतयोः सामञ्जस्यं कथं स्यात्।

उ. यूयं भिन्नयोः पदार्थयोः भ्राम्यथ। कर्म नाम मनुष्यस्य सेवा अथवा धर्मप्रचारकार्यम्। प्रकृतप्रचारे तु सिद्धपुरुषं विहायापरस्य नास्त्यधिकारः। अथापि सेवायां सर्वस्याप्यधिकारो विद्यते। न केवलं तावत्, यावत्पर्यन्तं वयमपरस्य सेवां स्वीकुर्मः, तावत्पर्यन्तमस्माभिरपरस्य सेवाऽपि कर्तव्या एव।

# देववाणी

## मङ्गलवारे, जुनमासस्य पञ्चविंशे 1895-वर्षे

यदैव सुखं भोक्ष्यसे ततः परमेव दुःखमागमिष्यति—इदं दुःखं साक्षात् तदैवागच्छेत्, विलम्बेन वाऽऽगच्छेत्। य आत्मा यावान् उन्नतः, तस्य सुखानन्तरभाविदुःखमपि तावच्छीघ्रमागमिष्यति। यद्द्वय-मिच्छामस्तन्न सुखं नापि दुःखम्। उभयमपि अस्माकं प्रकृतं स्वरूपं विस्मारयति। उभयमपि शृङ्खलम्—एकमायसमपरं च हैमम्। आत्मा उभयस्यापि पारे वर्तते—तत्र न सुखं नापि दुःखम्। सुखं दुःखमित्युभयमप्यवस्थाविशेषः, अवस्था च विपरिणामिनी। किन्तु आत्मा आनन्दमयः, अपरिणामी, शान्तिस्वरूपः। आत्मा लब्धव्य इति नास्ति, पूर्वस्मादेव सोऽस्माभिरधिगतोऽस्ति, केवलं तस्योपरि यन्मलं पतितं, तत्संशुध्य तस्य दर्शनं प्राप्तव्यम्।

अस्मिन्नात्मस्वरूपे प्रतिष्ठितो भव, तदैव वयं जगति सुष्ठु प्रीतिमन्तो भविष्याम। उन्नततरे भावे सुप्रतिष्ठितो भव, अहमेव सः अनन्तात्म-स्वरूपः—एतज्ज्ञात्वा जगत्प्रपञ्चे शान्त्या दृष्टिर्देया। जगदिदं लघुशिशोः क्रीडेव, वयं च तज्जानीमः, अतः जगति यद्वा भवतु, किमप्यस्मान्वि-चलितान्न कर्तुं शक्नुयात्। यदि प्रशंसया मन आनन्दितं भवेत्, तर्हि निन्दया विषण्णमप्यवश्यं भवेत्। इन्द्रियस्य—मनःपर्यन्तस्यापि सुख-समुदयोऽनित्यः, किन्तु अस्मास्वेव तन्निरपेक्षं सुखं वर्तते, यत्सुखं

बाह्यवस्तुनिर्भरं न भवति। तत्सुखं पूर्णतया स्वायत्तं सुखं, तत्सुखमानन्दस्वरूपम्। सुखाय बाह्यस्यापेक्षामकृत्वा यथा यथा वयम् आभ्यन्तरापेक्षिणो भवेम—यथा यथा अन्तस्सुखा अनन्तरारामा भवेम तथा तथा वयमाध्यात्मिका भवेम। अयमात्मानन्द एव धर्मपदाभिधेयो भवति।

अन्तर्जगत्—यद्वास्तविकं सत्यं, तद्बहिर्जगदपेक्षया अनन्तगुणेन बृहत्। बहिर्जगत् तत्सत्यस्यान्तर्जगतः छायामयप्रक्षेपमात्रम्। जगदिदं न सत्यं न वा मिथ्या, सत्यस्येदं छायामात्रम्। कविनोक्तं कल्पना सत्यस्य स्वर्णिमच्छायेति।

यदा वयं सृष्टेरन्तः प्रविशामः, तदैव साऽस्मभ्यं प्राणमयी भवति। अस्मान्विहाय जगत्तु अचेतनं प्राणहीनं जडमेव। वयमेव जागतिकपदार्थेभ्यः प्राणान्दद्मः, किन्तु मूर्खवत् एतद्विस्मृत्य कदाचित्ततो बिभीमः, कदाचिच्च तद्भोक्तुमुद्युक्ता भवामः।

ताः धीवरस्त्रिय इव मा भूत। काश्चिद्धीवरस्त्रियः मत्स्याधानीः शिरसि निक्षिप्य विपण्या गृहं प्रत्यागच्छन्त्य आसन्। मध्ये मार्गमेव महती वृष्टिरागता। गृहं गन्तुमसमर्थास्ताः पथिपार्श्वस्थे मालिनीगेहे रात्रिं यापयितुमाश्रयमलभन्त। मालिनी यस्मिन्प्रकोष्ठे तासां शयनव्यवस्थामकार्षीत्तस्य प्रकोष्ठस्य पार्श्वे एव कुसुमोद्यानम्। रात्रौ सुमधुरः कुसुमामोदः धीवरस्त्रीणां नासापथं प्राविशत्। तस्माच्च सौरभात्पराजयमानासु तासु काचिद्धीवरस्त्री अवोचत्, अस्माकं मत्स्याधानीः जलेनाभ्युक्ष्य शिरःप्रान्ते संस्थापयामः। तथाकृत्वा यदा मत्स्यगन्धः तासां घ्राणेन्द्रियगोचरोऽभूत्तदा ताभिः नासारवपुरस्सरं सुखमयी निद्रा प्राप्ता।

संसारोऽयं मत्स्याधानीव—नास्माभिः सुखभोगाय तस्यापेक्षा कार्या। ये कुर्वन्ति तथा, ते तामसिका बद्धा जीवाः। केचिच्च राजसिकाः सन्ति, तेषामहङ्कारः अत्यन्तं प्रबलः। ते च सदैवाहमहमिति ब्रुवते। तदा तदा ते सत्कार्याणि कुर्वन्ति, कृते यत्ने ते धार्मिका भवितुमर्हन्ति। किन्तु सात्त्विकप्रवृत्तिका जना एव श्रेष्ठाः—ते सदैवान्तर्मुखीनाः—आत्मनिष्ठाः। प्रतिजनमिदं सत्त्वं रजस्तमश्च वर्तते। कालविशेषे मनुष्ये तस्य तस्य गुणस्य प्राधान्यं दृश्यते।

सृष्टिर्नाम काचिन्निर्मितिरिति न—सृष्टिर्नाम यः साम्यभावो नष्टस्तस्य पुनस्तदवस्थापादनाय यत्नः, महदेकं कूपीछिद्रपिधानं यदि खण्डशः कर्तयित्वा जले पात्यते तर्हि तस्य खण्डाः एकीभूय पृथक् पृथग्वा यथा जलस्योपरि आगन्तुं यतन्ते तथा। यत्र जीवनं यत्र जगत्, तत्र किञ्चिदकल्याणं किञ्चिदशुभमवश्यं स्थास्यति। अशुभस्य लेशादेव जगदिदं सृष्टम्। जगति लेशतो यदशुभमस्ति तदत्यन्तं शुभम्। यतो हि साम्यभावे सति सर्वं नष्टं स्यात्। साम्यं विनाशश्च समार्थकौ। यावदिदं जगच्चलति तावत्शुभाशुभमपि चलिष्यति। किन्तु यदा वयं जगदतिक्रम्य स्थास्यामः, तदा शुभाशुभयोरुभयोः पारं गमिष्यामः—परमानन्दं च लभामहे।

जगति दुःखरहितं सुखम् अशुभरहितं शुभं च प्राप्तुं काचिदपि सम्भावना न वर्तते। यतो हि जीवनस्यार्थो भवति विनष्टः साम्यभावः। अस्माकमपेक्षितस्तु मोक्षः—न जीवनं नापि शुभं न वा सुखम्। सृष्टिप्रवाहः अनन्तकालं यावच्चलति। न तस्यादिर्विद्यते न वान्तः। यथा

अगाधस्य ह्रदस्योपरि चरन्सदागतिमयस्तरङ्गः। तस्मिन्ह्रदे तथा गभीराणि स्थलानि वर्तन्ते यत्र वयमिदानीमपि गन्तुं नापारयाम। कानिचन च स्थलानि सन्ति यत्र साम्यभावः पुनः स्थापितोऽस्ति—किन्तु उपरितनस्तरङ्गः सदैव वहति, तत्र अनन्तकालमेव साम्यावस्थालाभस्य यत्नश्चलति। जीवनं मरणञ्च एकस्यैव विषयस्य नामभेदमात्रम्—एकस्या एव मुद्रायाः पृष्ठद्वयम्। उभयमेव माया—अवस्थाया अस्याः स्फुटतया बोधस्यावकाशो नास्ति, कस्मिंश्चित्क्षणे जीवितुं यत्नश्चलति, परक्षणे एव विनाशस्य मृत्योर्वा प्रयत्नः। अस्माकं यथार्थरूपम् आत्मा अस्य सर्वस्यापि पारे तिष्ठति। अस्माभिरीश्वरास्तित्वमङ्गीक्रियते—स ईश्वरः वस्तुतः स एवात्मा यस्माद्वयं पृथगभूम तथा अस्मभ्यं पृथगिति विचिन्त्य यम् उपास्महे। किन्तु स उपास्यः सर्वदैवास्माकं वास्तविक आत्मा—एकः अद्वितीयः ईश्वरः—यः परमात्मेत्यभिधीयते।

तां नष्टां साम्यावस्थां पुनः प्राप्तुमस्माभिः प्रथमं तमः रजसा अभिभवितव्यं, ततः रजः सत्त्वेन जेतव्यम्। सत्त्वं नाम सैव स्थिरा धीरा प्रशान्ता अवस्था, या क्रमश एधते, अन्ते अपरे भावाः निःशेषमपगमिष्यन्ति। बन्धनं छित्त्वा निक्षिप, मुक्तो भव, यथार्थतः ईश्वरतनयो भव, तदैव ईशख्रीष्ट इव पितरं द्रष्टुं शक्ष्यसि। धर्म ईश्वरश्च अनन्तशक्तेः अनन्तवीर्यस्य च वाचकौ। दौर्बल्यं दासत्वं परित्यज। यदि त्वं मुक्तस्वभावो भवसि, तदैव त्वं केवल आत्मा। यदि त्वं मुक्तस्वभावो भवसि तदैवामृतत्वं ते करतलगतं भविष्यति। यदि मुक्तस्वभावो भवसि तदैव वक्ष्यामि—ईश्वरो यथार्थत एवास्ति।



जगन्मह्यं नाहं जगते। शुभाशुभे नो दासरूपे, न वयं तयोः दासभूताः। पशोः स्वभावः—अग्रगामित्वं न, यस्यामवस्थायां वर्तते तस्यामेवावस्थायां स्थितिः, मनुष्यस्य स्वभावः—अशुभं परित्यज्य शुभं प्राप्तुं यत्नः करणीयः। देवस्य च स्वभावः—शुभाशुभाभ्याम् अयतित्वा सर्वदा आनन्दमयस्थितावस्थानम्। अस्माभिर्देवैर्भाव्यम्। हृदयं समुद्रमिव महत्कुरु, सांसारिकतुच्छतायाः पारं गच्छेद्धृदयम्। अशुभस्यागमनेऽपि आनन्दोन्मत्ता भवत। जगत् चित्रमिव पश्य। एतज्ज्ञानीहि, जगति किमपि त्वां विचलितं कर्तुं न शक्नुयात्, एतच्चावबुध्य जगतः सौन्दर्यमुपभुङ्क्ष्व। जागतिकं सुखं कीदृशं जानासि? यथा लघुबालाः क्रीडन्तः कर्दमात्काचखण्डं प्राप्नुवन्। जगति सुखदुःखे शान्त्या पश्य, शुभाशुभरूपमुभयं समानं पश्य—उभयमपि ईश्वरस्य लीला, अतः शुभाशुभयोः, सुखदुःखयोः सर्वत्र आनन्दं प्राप्नुहि।



मम गुरुर्वदति स्म, सर्वे नारायणरूपा एव। किन्तु व्याघ्रनारयणाद्दूरे स्थातव्यम्। सर्वं जलं नारायणरूपमेव, किन्तु मलिनं जलं पेयं न भवति इति।

गगनमयस्थाल्यां ज्वलतः रविचन्द्रदीपकौ—मन्दिरान्तरगमनेन किं प्रयोजनम्? सर्वं चक्षुस्तवैव चक्षुः, किन्तु न ते चक्षुर्वर्तते, सर्वे हस्तास्तवैव हस्ताः, किन्तु न ते हस्तोऽस्ति।

किमपि प्राप्तुं न यतस्व, कस्याप्यप्राप्तावपि न यतस्व—यदागच्छति तद् गृहाण, यदृच्छालाभसन्तुष्टो भव। कस्मिंश्चिदपि अविचालित्वमेव मोक्षः स्वातन्त्र्यं वा। केवलेन सहनेन न भविष्यति, पूर्णतया अनासक्तो भव। तस्य षण्डस्य कथां स्मर।

कश्चिन्मशकः बहोः कालात् एकस्य षण्डस्य शृङ्गे उपविष्ट आसीत्— बहुकालं यावदुपवेशनात्परं तस्य विवेकबुद्धिः उदिता यत्, कदाचित्तस्योपवेशनेन षण्डस्य महत्कष्टं स्यादिति। अतः स षण्डमाहूयापृच्छत्, भ्रातः षण्ड, बहोः कालादहं तव शृङ्गे उपविष्टोऽस्मि, प्रायस्ते कष्टं भवति, सम्प्रत्येवाहं गमिष्यामि। षण्डेनोत्तरितम्, नैव भोः, सपरिवारस्त्वमागत्य मे शृङ्गे वासं कुरु— किं तेन मे?



## बुधवारः, जुनमासस्य षड्विंशदिवसः

यदा अस्माकम् अहंज्ञानं न भवति, तदैव वयं सर्वोत्तमानि कार्याणि कुर्मः, अपरम् अस्मदीयभावेन सर्वापेक्षया अधिकतया अभिभूतं कर्तुं पारयामः। श्रेष्ठाः प्रतिभाशालिनो जनाः सर्वे एतज्जानन्ति। गीतायां भगवता उक्तं, 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन' इति। —हे अर्जुन, त्रिलोक्यां मम कर्तव्यं किमपि नास्ति। तस्मिन्पूर्णतया स्थितिपरो भव, पूर्णतया अनासक्तो भव, तदैव त्वया किमपि कार्यं भविष्यति। याभिः शक्तिभिः कार्याणि भवन्ति न ताः वयं द्रष्टुं शक्नुमः,

केवलं तासां फलमेव वयं द्रष्टुं शक्नुमः। अहङ्कारमपसारय, नाशय, विस्मर, त्वां निमित्तीकृत्य ईश्वरः कार्यं साधयिष्यति—एतत्तु तस्यैव कार्यम्। अस्माभिः किमपि करणीयं नास्ति—केवलमपसर्तव्यं, तस्मै कार्यं कर्तुं दातव्यम्। यथा यथा वयमपसरेम, तथा तथा ईश्वरः अस्मासु प्रकटो भविष्यति। आमाहंकारं दूरीकुरु। पक्काहङ्कार एव तिष्ठतु।

इदानीं वयं यथा स्मः, तदस्माकं चिन्तनस्यैव फलस्वरूपम्। तस्मात्, यूयं किं चिन्तयथ तद्विषये अवधानं कुरुथ। वाक्यं गौणम्। चिन्तनान्येव चिरस्थायीनि, तेषां गतिरपि दूरव्यापिनी। यद्वयं चिन्तयामः तत्रैवास्माकं चरित्रस्य चिह्नं भवति। सज्जनस्य कस्यचिद्वालिषु जल्पनेषु च तस्य हार्दं प्रेमपावित्र्यं च तिष्ठति यदस्माकं शुभमातनोति।

किमपि न कामय। ईश्वरं भावय, किन्तु फलं किमपि न काङ्क्षय। ये कामनाहीनास्तेषामेव कार्याणि फलप्रसूनि। भिक्षोपजीविनः सन्न्यासिनः जनानां द्वारेषु धर्मं वहन्ति, किन्तु ते मन्वते यद्वयं न किमपि कुर्म इति। न किमपि तैः काङ्क्ष्यते सर्वं कार्यं तेषाम् अज्ञातमेव सिध्यति। यदि ते ऐहिकज्ञानवृक्षस्य फलं सेवन्ते[१], तर्हि तेषामहङ्कार आगच्छेत्तथा यत्किमपि लोककल्याणाय ते कुर्वन्ति तत्सर्वं लुप्यन्ति। यदैव वयम् अहमिति वदामस्तदैव वयं मूर्खा भवामस्तथा वदामः, वयं ज्ञानं लभामह इति, किन्तु बद्धनयना बलीवर्दा इव वयमपि तैलपेषणयन्त्रे अविरतं भ्रमामः। भगवान्सुष्ठु आत्मानं गोपयित्वा तिष्ठति। सर्वापेक्षया अधिकानि कार्याणि स कर्तुं शक्नुयात्। आत्मानं जय, तर्ह्येव सर्वं जगत्ते पदतले पतिष्यति।

सत्त्वगुणमास्थिता वयं सर्वेषां वस्तूनां प्रकृतं रूपं द्रष्टुं पारयामः, तदा वयं पञ्चेन्द्रियाणां बुद्धेश्चागोचरं लोकं प्राप्नुमः। अहङ्कार एव स वज्रदृढः प्राचीरः योऽस्मान्बध्नाति—सत्यस्य मुक्तं वायुं प्रापयितुं नालम्—सर्वविषयेषु सर्वकर्मसु अहं मम इत्यादिभावान् मनसि आनयति—अहममुकं कार्यं कृतवान् इत्यादिकं वयं भावयामः। इमं क्षुद्रमहङ्कारं दूरीकुरु, अस्मासु योऽहङ्काररूपः दुष्टभावो वर्तते तं पूर्णतया नाशय। 'नाहं नाहं त्वमेव त्वमेव' इति मन्त्रमुच्चारय, हृदयेनैतदनुभव, जीवने तं भावमानय। यावदिदमहम्भावापन्नं जगत्यक्तुं न शक्नुयाम तावन्न वयं स्वर्गं प्रवेष्टुं न शक्ष्यामः—न कोऽपि तत्कर्तुमशकत्, न वा शक्ष्यति। संसारत्यागो नाम अस्याहङ्कारस्य पूर्णविस्मरणम्। अहङ्कारस्य विषये पूर्णमवहेलनम्। देहे उषितुं शक्यते, किन्तु वयं यथा देहस्य न भवामः। अयं दुष्टोऽहङ्कारः पूर्णतया नाशनीयः। यदा जनास्त्वामनुत्तमं वक्ष्यन्ति, तदा त्वं तान् आशीर्भिर्वन्दस्व। चिन्तय, ते तव कियन्तमुपकारं कुर्वन्तीति। अनिष्टं यदि कस्यचिद्भवेत्तत्तु तेषामेव। तादृशं स्थानं गच्छ यत्र सर्वे त्वयि जुगुप्सन्ते, ते तव अहङ्कारं पूर्णतया मारयित्वा त्वत्तः बहिः क्षेप्स्यन्ति। तर्हि त्वं भगवतः अत्यन्तं समीपं गमिष्यसि। यथा वानरी तस्याः शावं दृढमाश्लिष्य तिष्ठति, किन्तु अन्ततः अगतिकतया दूरे क्षिप्त्वा तं पददलितमपि करोति तथैव वयमपि संसारं दृढमाश्लिष्य तिष्ठामः, किन्तु अन्ते यदा तं पददलितं कुर्मः तदैव वयमीश्वरस्य समीपं गन्तुमधिकारिणो भवामः। न्यायधर्माय यदि अपरस्यात्याचारः सोढव्यो

भवति तर्हि वयं धन्याः। यदि वयं लेखितुं पठितुं न जानीमस्तर्हि वयं धन्याः, अस्मान् ईश्वराद्दूरीकर्तुं समर्था विषया न्यूना अभूवन्।

भोगस्तु लक्षभोगः सर्पः—सोऽस्माभिः पादाभ्यां दलनीयः। वयमिमं भोगं परित्यज्य अग्रे गच्छामः, किमपि न प्राप्य वयं कदाचिन्नैराश्येनावसन्ना भवामः किन्तु तत्र लग्नो भव, लग्नो भव—कदापि न परित्यज। संसारोऽयमसुर इव। संसारोऽयमेकं राज्यमिव—अस्माकं तुच्छः अहङ्कारः तस्य राजा। तमपसृत्य दृढतया तिष्ठ, कामकाञ्चने, नामयशसी च परित्यज्य दृढतया ईश्वरं गृहाण, अन्ततः वयं पूर्णमौदासीन्यं लभामहे। इन्द्रियचरितार्थत्वमेव सुखमिति धारणा पूर्णतया जडवादिनी। तस्मिन्यथार्थसुखस्य लेशोऽपि न वर्तते, यत्सुखं तत्तु तस्य प्रकृतानन्दस्य प्रतिविम्बमात्रम्।

ये ईश्वरसमर्पितास्ते तथाकथितकर्मिभ्यः विश्वस्य कृते अधिकं कार्यं कुर्वन्ति। आत्मानं पूर्णतया शुद्धं कृतवान् एतादृश एको जनः सहस्राद्धर्मप्रचारकेभ्यः अधिकं कार्यं साधयति। चित्तशुद्ध्या मौनेन च वाक्ये बलमागच्छति।

पद्ममिव भव। पद्ममेकत्रैव तिष्ठति, किन्तु यदा प्रस्फुटितं भवति तदा सर्वतः मधुकराः स्वयमेवागच्छन्ति।

श्रीयुक्तः केशवचन्द्रसेनस्य श्रीरामकृष्णस्य च मध्ये कश्चन विशेष आसीत्। श्रीरामकृष्णः जगति कुत्रापि पापं न पश्यति स्म—स कुत्रापि जगति अशुभं किमपि न पश्यति स्म, अतः तदाशुभं दूरीकर्तुं यत्नं कर्तुमपि नोत्सहते स्म। केशवचन्द्रश्च कश्चन महान्नैतिक संस्कारको नेता

भारतवर्षीयब्राह्मसमाजस्य प्रतिष्ठाता आसीत्। द्वादशवर्षेभ्यः परं शान्तप्रकृतिरयं महापुरुषः न केवलं भारते अपि विश्वस्य भावराज्ये किञ्चिन्महत्परिवर्तनं साधितवान्। ईदृशाः नीरवमहापुरुषाः वास्तविकमहा-शक्तेराधारभूताः—ते प्रेमतन्मयाः सन्तः जीवनं यापयन्तः भवरङ्ग-मञ्चाद्गच्छन्ति। ते कदापि अहं मम इति न वदन्ति। ते आत्मानमीश्वरस्य यन्त्रं मत्वा धन्या भवन्ति। एतादृशा एव बुद्धख्रीष्टादीनां निर्मातारः। ते सर्वदैव ईश्वरेण सह तादात्म्यं लभन्ते, वास्तवजगतः बहुदूरे कस्मिंश्चिद्भावराज्ये निवसन्ति। न किमपि ते वाञ्छन्ति न वा किमपि ज्ञात्वा कुर्वन्ति। ते एव वस्तुतः जगतः सर्वेषामुच्चभावानां प्रेरकाः—ते जीवन्मुक्ताः, पूर्णतया अहङ्कारशून्याः। तेषां क्षुद्रः अहङ्कारः अदृश्यतां गतः, न काऽप्याकाङ्क्षा वर्तते। तेषां व्यक्तित्वं लुप्तं, ते तत्त्वस्वरूपाः।

## सोमवारः, जुलैमासस्य प्रथमदिनम्

(श्रीरामकृष्णदेवः)

श्रीरामकृष्णस्य पिता कश्चिन्निष्ठावान् ब्राह्मण आसीत्—तादृशः यः खलु सर्वेषां ब्राह्मणानां दानमपि न प्रतिगृह्णाति स्म। जीविकार्थं सामान्यैः इव कार्याणि साधयितुं तस्य नासीदवकाशः। नापि पुस्तिका-विक्रयणेनान्यत्र वा वेतनार्थिना भाव्यम्, नापि कस्मिंश्चिद्देवमन्दिरे पौरोहित्यस्याप्यवकाशस्तस्यासीत्। प्राय आकाशवृत्तिरेव तेनाङ्गीकृताऽऽसीत्। अयाचितं यल्लभते स्म तेनैव तस्य जीवनं चलति स्म। तथापि

तत्कस्माच्चित्पतिताद् ब्राह्मणात्स न स्वीकरोति स्म। हिन्दुधर्मे देवमन्दिरस्य तथा प्राधान्यं नास्ति। यदि सर्वाण्यपि मन्दिराणि विध्वस्तानि स्युस्तथापि धर्मस्य लेशमात्रमपि हानिर्न स्यात्। हिन्दूनां मतं त्वेवं यत्, स्वस्मै गृहनिर्माणं पापायेति, केवलं देवाय अतिथिभ्यश्च गृहनिर्माणं कर्तुं शक्यते। तस्मादेव जना देवस्य निवासाय मन्दिरादिकं निर्मान्ति।

प्रबलपारिवारिकदारिद्र्यकारणात् श्रीरामकृष्णः स्वल्पे एव वयसि कस्मिंश्चिन्मन्दिरे पौरोहित्यकर्म स्वीकृतवान्। मन्दिरे जगज्जनन्याः मूर्तिः प्रतिष्ठिताऽऽसीत्—तां प्रकृतिं कालीं वाऽपि वदन्ति। काचिन्नारीमूर्तिः कस्याश्चित्पुरुषमूर्तेरुपरि स्थिता—तेनेदं प्रकाशितं भवति यत्, मायावरणस्योन्मोचनं न भवति चेदस्माभिर्ज्ञानं न लभ्यते। ब्रह्म स्वयं स्त्री पुरुषो वा न—सः अज्ञातः अज्ञेयश्च। स यदाऽऽत्मानं प्रकाशयति तदा स माययाऽऽत्मानमावृत्य जगज्जननीरूपं धरति सृष्टिप्रपञ्चं वितनोति च। यः पुरुषः शयानोऽस्ति स शिवो ब्रह्म वा, स मायावृतः सन्शवरूपं धृतवान्। अद्वैतवादी ज्ञानी वदति, अहं बलेन मायां खण्डयित्वा ब्रह्म प्रकाशयिष्यामीति। किन्तु द्वैतवादी भक्तः कथयति, वयं तां जगज्जननीं प्रार्थयामश्चेत् सा द्वारं त्यक्ष्यति, तदैव च ब्रह्म प्रकाशितं भविष्यति, तस्या एव हस्ते कुञ्चिका वर्तत इति।

प्रत्यहं मातरं कालिकां सेवमानस्य पूजयतश्चास्य तरुणस्य हृदये तथा तीव्रा व्याकुलता भक्तिश्च समजनि यत स नियमेन पूजाकर्म कर्तुमसमर्थो जातः। तस्मात्तत्कर्म परित्यज्य स मन्दिरचत्वरे एव

विद्यमाने लघुनि वने नक्तन्दिवं ध्यानधारणे कर्तुं समारभत। तद्वनं गङ्गायामेवासीत्। एकस्मिन्दिने गङ्गायाः प्रबलस्रोतसा एकं कुटीरं निर्मातुं योग्यानि वस्तूनि प्लवन्ति तस्य समीपमागतानि। तैर्निर्मिते कूटीरे स्थित्वा स निरन्तरं प्रार्थयमानः क्रन्दति स्म—जगज्जननीं विना अपरस्य विषयस्य चिन्तनं—स्वशरीरक्षायाः चिन्तनमपि तस्मादपास्तम्। तस्य कश्चिदात्मीयः अस्मिन्समये प्रत्यहमागत्य दिने सकृत्तं भोजयति स्म—तस्य लालनञ्चापि करोति स्म। केभ्यश्चिद्दिनेभ्यः परं काचन सन्न्यासिनी समागत्य मातरं प्रापयितुं तस्य साहाय्यं चकार। तस्य यः कोऽपि यादृशोऽपि गुरुरपेक्षित आसीत्, ते स्वयमेव तस्य सकाशमागता आसन्। सर्वस्य सम्प्रदायस्य कश्चन साधुः स्वयमागत्य तमुपदिदेश, स च साग्रहं सर्वस्याप्युपदेशान्शृणोति स्म। किन्तु स केवलं जगन्मातुरे-वोपास्तिं करोति स्म—तस्मै सर्वमपि मातृमयं प्रतिभाति स्म।

श्रीरामकृष्णः कमपि विरुध्य किमपि कठिनं वाक्यं नावादीत्। तस्य हृदयं तथा उदारमासीद्यत्, सर्वोऽपि सम्प्रदायस्तमात्मीयं मनुते स्म। स सर्वस्मिन्नपि प्रीणाति स्म। तस्य दृष्ट्या सर्वाणि मतानि सत्यान्यासन्, सर्वस्यापि स्थानं तस्य सविधे आसीत्। स मुक्तस्वभाव आसीत्, किन्तु सर्वस्य विषये समानेन प्रेम्णैव तस्य मुक्तस्वभावस्य परिचयो लभ्यते, वज्रतुल्यकठोरतया न। एवं कोमलस्वभावा जना एव नवीनान्भावानाविष्कुर्वन्ति, तथा प्रबलकार्योत्साहिनो जनाः तान्भावान्सर्वत्र प्रसारयन्ति। सेण्टपल-महोदयोऽन्तिमपर्यायभुक्त आसीत्। तत्सहायेन सत्यस्यालोकः चतसृषु दिक्षु विस्तीर्णो बभूव।

सेण्टपलस्य युगमिदानीं तु न वर्तते। अस्माभिरेवास्य युगस्य नवीनेन प्रकाशेन भाव्यम्। अस्माकं युगस्य किञ्चिद्विशिष्टं प्रयोजनं तादृशस्य कस्यचित्सङ्घस्य—यः स्वत एव आत्मानं देशकालोपयोगिनं विधास्यति। यदा स भविष्यति, तदा स एव जगतः अन्तिमः सम्प्रदायो भविष्यति। संसारचक्रं चलिष्यति—अस्माभिस्तस्य साहाय्यं कार्यं, तत्र बाधा-प्रदानेन न किञ्चित्सेत्स्यति। विविधा धर्मभावरूपास्तरङ्गा उत्तिष्ठन्ति पतन्ति च, तेषां च तरङ्गाणां शीर्षे तद्युगस्यावातारो विराजते। रामकृष्णः वर्तमानयुगस्योपयोगिनीं धर्मशिक्षां दातुं समागमत्, तस्य धर्मः निर्मितिमूलः, तत्र ध्वंसमूलं किमपि नास्ति। तेन नवीनतया प्रकृतेः सकाशं गत्वा सत्यं ज्ञातुं यत्नः कर्तव्योऽभवत्, तस्मात्स वैज्ञानिकं धर्ममलभत। स धर्मः कमपि किमप्यङ्गीकर्तुं न वदति, परीक्षितुं वदति। वदति, 'अहं सत्यमद्राक्षं, त्वमपीच्छसि चेद् द्रष्टुं शक्ष्यसि। अहं यत्साधनं कृतवान्, तादृशमेव साधनं त्वमपि कुरु तर्हि त्वमपि अहमिव सत्यं द्रक्ष्यसि' इति। ईश्वरः सर्वस्य समीपमागमिष्यति —तत्सामञ्जस्यं सर्वस्यापि आयत्तं वर्तते। श्रीरामकृष्णः यमुपदेशमदात्, स हिन्दुधर्मस्य सारभूतः, तेन स्वयं रचितं किमपि नवीनं तत्त्वं न। स स्वयमपि कदाचित् एतत्सर्वं मम स्वीयमिति न प्रत्यजानीत, यशस आकाङ्क्षाऽपि तस्य नासीत्। यदा तस्यायुः चत्वारिंशद्वर्षाणि तदा स प्रचारयितुमारेभे। किन्तु प्रचाराय स कदापि बहिर्न गतवान्। ये तस्य समीपमागत्योपदेशान्ग्रहीष्यन्ति तेभ्यः स प्रतीक्षते स्म।

हिन्दुसमाजस्य प्रथामनुसृत्य तस्य पितरौ तस्य यौवनस्य प्रारम्भे कयाचित्पञ्चवर्षीयया बालया तस्य विवाहमकारयत्। बाला सुदूरस्थ-

पल्ल्यां स्वपरिजनैः सहैव निवसति स्म—तस्या युवा पतिः कीदृशेन कठोरसाधनेन ईश्वरमुपसर्पतीति विषये तस्या ज्ञानमपि नासीत्। यदा सा प्रवृद्धा तदा तस्याः पतिः भगवत्प्रेमतन्मयः सञ्जात आसीत्। सा पद्भ्यामेव स्वग्रामात्दक्षिणेश्वरकालीमन्दिरे पत्युः समीपमागता। पतिं वीक्ष्यैव तयावगतं तस्या कीदृश्यवस्थेति, यतो हि सा स्वयं महापवित्रा विशुद्धा उन्नतस्वभावा आसीत्। सा तस्य कर्मणि साहाय्यमेवेच्छति स्म, तस्याः कदाचिदपीत्थमाकाङ्क्षा नासीद्यत्, तं गृहस्थं करिष्यतीति।

श्रीरामकृष्णः भारते महत्सु अवतारपुरुषेषु अन्यतम इति पूज्यते। तस्य जन्मदिनं तत्र धर्मोत्सवत्वेन परिपाल्यते।

## मङ्गलवारः, जुलैमासस्य द्वितीयं दिनम्

(जगज्जननी)

शाक्ता जगतस्तां सर्वव्यापिनीं शक्तिं मातरं मत्वा पूजयन्ति—कारणं, मातेति आह्वानात्मिष्टं सम्बोधनं किमपि नास्ति जगति। भारते मातैव नारीचरित्रस्य उन्नततम आदर्शः। ईश्वरस्य मातृत्वेन, प्रेम्णः उन्नततमविकासत्वेन पूजनमेव हिन्दुभिः दक्षिणाचारो दक्षिणमार्गो वेति अभिधीयते। अनेनोपासनेन आध्यात्मिकी अभ्युन्नतिर्भवति—मोक्षो लभ्यते—अनेन कदाचिदप्यैहिको लाभो न भवति। तथा च तस्या भीषणरूपस्य—रुद्रमूर्तेरुपासनमेव वामाचारो वाममार्गो वेति अभिधीयते। सामान्यतः अनेन सांसारिकोन्नतिः सम्यग्भवति, किन्तु आध्यात्मिकी अभ्युन्नतिस्तथा न भवति। क्रमशः कालेन तस्माद् अवनतिरपि भवति, ये चेत्थं साधनं कुर्वन्ति सा जातिरेव ध्वंसते।

जनन्येव शक्तेः प्रथमविकासरूपा, जनकस्य धारणाया जनन्या धारणैव भारते उच्चतरेति विवेच्यते। मातेति नाम्नैव शक्तिभावः, सर्वशक्तिमत्ता—ऐश्वरिकशक्तेर्भावश्चायाति, यथा शिशुः स्वमातरं सर्वशक्तिमतीं भावयति—माता सर्वं कर्तुं शक्तेति। सैव जगज्जननी भगवती अस्माकमन्तर्निवासिनी प्रसुप्ता कुण्डलिनी—तस्या उपास्तिं विना न वयं कदाचिदप्यात्मज्ञाने समर्था भवामः।

सर्वशक्तिमत्ता, सर्वव्यापिता, अनन्ता दया—भगवत्या जगज्जनन्या इमे गुणाः। जगति यावत्यः शक्तयो भवन्ति सर्वासां सैव समष्टिरूपिणी। जगति यावतीनां शक्तीनां विकासः सर्वमपि सैव माता। सैव प्राणरूपिणी, बुद्धिरूपिणी, प्रेमरूपिणी। सा समग्रजगति वर्तते, किन्तु सा जगतः पृथग्भूता। सा व्यक्तिः काचित्—सा ज्ञातुं शक्या, द्रष्टुं च शक्ता (यथा रामकृष्णस्तां ज्ञातवान्दृष्टवांश्च)। तस्मिन्नेव जगन्मातृभावे संस्थिता वयं यथेष्टं कर्तुं शक्नुमः। सा शीघ्रातिशीघ्रमस्माकं प्रार्थनमुत्तरयति।

सा इच्छानुसारं यदा कदापि, येन केनापि रूपेण अस्माकं दृग्गोचरा भवेत्। तस्या जगज्जनन्या नाम रूपं च उभयमपि भवितुमर्हति, अथवा रूपं विना केवलं नामापि भवितुमर्हति। एतेषु विविधेषु भावेषु तामुपासीना वयं तादृशीं दशां प्राप्नुमो यत्र नामरूपे न वर्तेते, शुद्धसत्तामात्रं विराजते।

यथा कस्यचिच्छरीरस्य सर्वे कोषा मिलिताः सन्तः एकं मनुष्यं रचयन्ति, तथैव प्रत्येकं जीवात्मा यथा एकैककोषरूपः, तेषां च

समष्टिरेव ईश्वरः—तच्च अनन्तं पूर्णं तत्त्वं (ब्रह्म) ततोऽपि ज्यायः। समुद्रो यदा स्थिरो भवति, तदा स ब्रह्मेति वक्तुं शक्यते, यदा च समुद्रे ऊर्मयः उत्तिष्ठिन्ति तदा तमेव मातेति शक्तिरिति वदामः। सा शक्तिर्महामाया वा देशकालनिमित्तरूपा। तद् ब्रह्मैव माता। तस्य रूपद्वयम्—एकं सविशेषं सगुणं वा, अपरं निर्विशेषं निर्गुणं वा। प्रथमरूपेण तद् ईश्वरः, जीवः, जगच्च। द्वितीयरूपेण तत् अज्ञातमज्ञेयं च। तस्मादेव निरुपाधिकसत्तारूपात ईश्वरो जीवे जगच्चेति त्रित्वभावः आगतः। सर्वा सत्ता—या चास्माकं वेद्या सा हि त्रिकोणात्मकास्तित्वरूपा, अयमेव विशिष्टाद्वैतभावः।

तस्या एव जगदम्बिकाया एको बिन्दुः कृष्णः, एकः कणः बुद्धः, अपरश्च कणः ख्रीष्टः। अस्माकं पार्थिवजनन्यां तस्या जगन्मातृकाया कणात्मकप्रकाशो वर्तते, तस्या उपास्त्या एव महत्त्वं लभ्यते। यदि परमं ज्ञानमानन्दं च कामयसे तर्हि तां जगज्जननीमुपास्व।

## शनिवारः, जुलैमासस्य विंशं दिनम्

प्रत्यक्षानुभव एव यथार्थं ज्ञानं यथार्थो वा धर्मः। अनन्तयुगेभ्यो वयं धर्मविषये यावतीर्वा वार्ताः कुर्मस्तेनास्माकमात्मज्ञानं न सम्भविष्यति। केवलं कस्मिंश्चिन्मते विश्वासे नास्तिकतायाञ्च न कोऽपि भेदः। मनुष्यत्वेन एतादृशयोर्द्वयोर्नास्तिक एव श्रेयान्। तेन प्रत्यक्षानूभवस्य प्रकाशेनाहं यावद्भिः पदैः अग्रे गच्छामि न ततो मां कदाचिदपि किमपि पश्चादपसारयितुं शक्ष्यति। यदा कमपि देशं स्वयं गत्वा त्वं द्रक्ष्यसि तदैव

तस्य देशस्य विषये तव यथार्थं ज्ञानं भविष्यति। अस्माभिः प्रत्येकेनापि स्वयं द्रष्टव्यम्। गुरुः अस्मत्सकाशे केवलमाध्यात्मिकं भोज्यमानीय दद्यात् तस्माद्भोज्यात्पुष्टिलाभः कर्तव्यश्चेत्तदस्माभिः स्वयं भोक्तव्यम्। तर्कयुक्ती कदापि ईश्वरं प्रमाणयितुं न शक्नुतः, केवलं युक्तिसिद्धसिद्धान्तत्वेन तमुपस्थापयतः।

बहिः भगवल्लाभः अशक्यः। बहिर्यस्येश्वरतत्त्वस्योपलब्धिर्भवति तदस्माकमात्मन एव प्रकाशमात्रम्। वयमेव ईश्वरस्य सर्वश्रेष्ठं मन्दिरम्। बहिर्यद्दृश्यते तदस्माकमन्तःस्थबस्तुन एव अतीव अस्पष्टमनुकरणमात्रम्।

अस्माकं मनसः शक्तीनामैकाग्र्यमेव ईश्वरप्राप्तौ अस्माकं साह्यं विधातुं केवलं यन्त्रम्। यदि त्वमेकमात्मानं (स्वात्मानं) ज्ञातुं शक्नोसि तर्हि त्वं भूतं भविष्यं वर्तमानं सर्वविधमात्मानं ज्ञास्यसि। इच्छा-शक्त्यैव मनस ऐकाग्र्यं साध्यते—युक्त्या विचारेण भक्त्या प्रेम्णा प्राणायामेन इत्यादिभिर्विविधैरुपायैः इच्छाशक्तिरुद्बुद्धा नियन्त्रिता च भवितुमर्हति। एकाग्रं मनो दीप इव भवति—अनेन आत्मनः स्वरूपं सुपरिस्फुटं दृश्यते।

एकविधा साधनप्रणाली सर्वस्योपयोगिनी न भवेत्। किन्तु एताः साधनप्रणालीः सोपानावलीव एकैकशः अवलम्बनीयाः इत्यपि नास्ति। क्रियाकलापानुष्ठानादीनि सर्वाधःस्तरीयं साधनं, ततः ईश्वरस्य अस्माकं बहिर्दर्शनं, ततश्च अस्माकमन्तर्यामित्वेन तस्य दर्शनम्। स्थलविशेषे, एकस्मात्परमपरम्—इत्थं क्रम आवश्यको भवेत्किन्तु प्रायशः केवलः एक एव पन्था आवश्यको भवेत्। ज्ञानलाभाय त्वया कर्मभक्तिमार्गाभ्यामेवादौ गन्तव्यमिति सर्वेभ्य इदं वचनं परममौर्ख्यमेव।

यावत्पर्यन्तं युक्तिविचारातीतं किमपि तत्त्वं न लभेथाः, तावत्पर्यन्तं त्वं तव युक्तिविचारमेवावलम्बस्व, तत्प्राप्य च त्वया ज्ञास्यते यत्, तत् युक्तिविचारादपि श्रेष्ठं वस्तु, यतो हि तत् तव युक्तिविचारस्य विरोधि न भविष्यति। युक्तिविचारस्य ज्ञानस्य वाऽतीता भूमिरेव समाधिः, किन्तु स्नायवीयरागनाडनात्प्राप्तो मूर्छाविशेष एव समाधिरिति न भ्रमितव्यम्। बहवो हि मिथ्यैव समाधिरभवदिति प्रतिपादयन्ति, स्वाभाविकं सहजं ज्ञानमेव समाधिरिति भ्राम्यन्ति—इदमत्यन्तंभयानकम्। बहिर्लक्षणेन यथार्थतः समाधिरभवन्न वेति विचारयितुं न शक्यते, स्वयमेव तद् ज्ञायते। किन्तु युक्तिविचारसहायेन भ्रान्ते रक्षा सुकरा भवति, तस्मादिदं व्यतिरेकिपरीक्षेति वक्तुं शक्यते। धर्मलाभो नाम—युक्तितर्कादतीतां भूमिं प्रति गमनं. किन्तु धर्मलाभस्य केवलो मार्गः युक्तिविचार एव। सहजं ज्ञानं हिममिति, युक्तिविचारस्तु जलमिव, अलौकिकं ज्ञानं समाधिर्वा बाष्पमिव—सूक्ष्मतमाऽवस्था। एकस्मात्परमपरमागच्छति। सर्वत्रैव नित्यपौर्वापर्यस्य कश्चन क्रमो वर्तते—यथा अज्ञानं, संज्ञा अथवा आपेक्षिकं ज्ञानं तथा बोधिः, जडपदार्थः, शरीरं मनश्च। अस्य शृङ्खलस्य यमंशं वयं प्रथमं गृह्णीमस्तत एव शृङ्खला आरब्धा इति अस्माकं धारणा भवति। अर्थात्केचिद्वदन्ति देहादेव मन उत्पद्यते, केचिद्वदन्ति मनसो देहोऽभवत्। पक्षद्वयेऽपि युक्तयः समानमूल्यकाः, उभयमपि मतं सत्यम्। वयमुभयोरपि पारं गच्छेम तादृशं स्थानं प्राप्नुयाम यत्र देहो मनो वा न वर्तते। सोऽपि मायैव।

धर्मः युक्तिविचारात्पारे वर्तते। धर्मः अतिप्राकृतः। विश्वासो नाम कस्यचन अङ्गीकार इति न, विश्वासो नाम—तस्य चरमस्य वस्तुनः धारणं, विश्वासो हृदयकन्दरमुद्भासयति। प्रथमं तदात्मतत्त्वं शृणु, ततो विचारय—विचारेण उक्तमात्मतत्त्वं कियत्ज्ञातुं शक्यते इति पश्य, तदुपरि विचारस्य प्लावनं भवतु—ततो यदवशिष्यते, तदेव गृहाण। यदि किमपि नावशिष्येत, तर्हि भगवते धन्यवादानर्पय यत्, त्वमेकस्याः कुप्रथायाः रक्षित इति। यदा च त्वं स्थिरसिद्धान्तं करिष्यसि यत्, किमपि आत्मानमुच्छेदयतुं न शक्तं, तदैव आत्मा सर्वप्रकारपरीक्षामुत्तीर्णो भवति, तदा तं दृढं गृहाण तथा तदात्मतत्त्वं सर्वेभ्यः उपदिश। सत्यं कदापि पक्षपाति न भवति, तेन सर्वस्यापि कल्याणं भविष्यति। अन्ते स्थिरतया शान्तचित्तेन तद् निदिध्यासस्व, तस्य ध्यानं कुरु, त्वन्मनः तस्मिन्नेकाग्रं कुरु, तेनात्मना सह आत्मानमैक्यभावापन्नं कुरु। तदा पुनः वाक्यस्य किमपि प्रयोजनं न भविष्यति, तव मौनभाव एव अपरस्यान्तः सत्यतत्त्वस्य सञ्चारं कारयिष्यति। वृथा वचनेन शक्तिक्षयं मा कार्षीः, तूष्णीं ध्याय। बहिर्जगतः कोऽपि कोलाहलस्त्वां न विक्षोभयेत्। यदा ते मनः सर्वोन्नतां भूमिमधिगच्छति तदा तत्त्वया न ज्ञायते। तूष्णीं शक्तिसञ्चयं कुरु, आध्यात्मिकताया विद्युदाधारश्च भव। भिक्षुकः किं दातुं शक्नुयात्? राजैव दाने समर्थः—तदपि तदा यदा स स्वयं किमपि नेच्छति।

  

तव यावद्धनं, तत्ते स्वीयमिति न मनुष्य, आत्मानं भगवतो भाण्डागारिकं मन्यस्व। धने आसक्तो न भव। यशो धनं सर्वं गच्छतु, एतन्महाबन्धनम्। मोक्षस्यापूर्वः परिवेशः अनुभूयताम्। त्वं मुक्तः मुक्तः मुक्तः, अविरतं वद—अहं धन्यः, अहमानन्दमयः, अहं मुक्तस्वरूपः, अहमनन्तस्वरूपः, मदात्मन आदिर्न वर्तते, अन्तोऽपि न। सर्वं मे आत्मस्वरूपम्।

## सोमवारः, प्रातःकालः, जुलैमासस्य नवविंशं दिनम्

कदाचिद्वयं कस्यापि विषयस्य निर्णयं कुर्वाणास्तस्य परिवेशस्य वर्णनं कुर्मः। एतत्तटस्थं लक्षणमित्युच्यते। यदा ब्रह्म सच्चिदान्देति नाम्ना अभिदध्मः, वस्तुतः तदा वयं तस्य अनिर्वाच्यस्य सर्वातीतस्य सत्तारूपस्य समुद्रस्य तटस्य किञ्चिद्वर्णनमात्रं कुर्मः। एतस्य कृते अस्ति इति वक्तुं न शक्नुमो वयं, यतो हि अस्ति इत्युच्यते चेत्, तद्विपरीतस्य नास्ति इत्यस्यापि ज्ञानं भवति, तस्मात्तदपि आपेक्षिकम्। तस्य विषये काऽपि धारणा, काऽपि कल्पना शुद्धा न भवति। केवलं नेति नेति—नैतद्, नादः—इति क्रमेण तस्य वर्णनं सम्भवति, कारणं तस्य चिन्तनेनापि तत्सीमितं करोति, अतः चिन्तनेन तन्न प्राप्यते।

इन्द्रियाणि नक्तन्दिवं त्वां भ्रमात्मकज्ञानेन वञ्चयन्ति। वेदान्तः बहोः कालात्प्रागेव एतत्सत्यमाविरकार्षीत्। आधुनिकविज्ञानं सद्य एव एतत्तत्त्वमवगन्तुमारब्धवत्। एकस्य चित्रस्य वस्तुतः दैर्घ्यं प्रस्थं च वर्तते। किन्तु चित्रकारः चित्रे कृत्रिमतया गाम्भीर्यस्यापि भावं

सृजन्प्रकृतेः वञ्चनस्यानुकरणमात्रं करोति। जनद्वयं कदापि समानं जगन्न पश्यति। श्रेष्ठं ज्ञानं लब्ध्वा त्वमपि द्रष्टुं शक्ष्यसि, कस्मिन्नपि वस्तुनि काऽपि गतिः—कोऽपि परिणामो न वर्तते। काचिद्गतिः किमपि परिवर्तनं वा वर्तत इत्यस्माकं धारणैव माया। प्रकृतिं समष्टिरूपेणालोचय तन्नामगतितत्त्वमालोचय। देहो मनो वा अस्माकं यथार्थ आत्मा न—उभयमपि प्रकृतावन्तर्भवति, किन्तु काले वयम् एतदन्तर्गतं सारभूतं सत्यं—यथार्थं तत्त्वं ज्ञातुं शक्नुमः। तदा वयं देहमनसोः पारं गच्छामः, अतो देहेन मनसा वा यः कोऽप्यनुभवो भवति सोऽपि गच्छति। तदा त्वमिमं जगत्प्रपञ्चं द्रष्टुं ज्ञातुं च न शक्ष्यसि, तदैव तव आत्मोपलब्धिर्भविष्यति। वस्तुतः इदं द्वैतमापेक्षिकं वा ज्ञानमतिक्रमेम इत्येवास्माकं यथार्थं प्रयोजनम्। अनन्तं मनः उत अनन्तं ज्ञानं नाम किमपि नास्ति, कारणं मनो ज्ञानञ्चेत्युभयं ससीमम्। वयं सम्प्रति आवरणद्वारेण पश्यामः—ततः क्रमशः आवरणमतिक्रम्य वयमस्माकं सर्वस्य ज्ञानस्य सारसत्यरूपं तद् अज्ञातं वस्तु निकषा प्राप्स्यामः।

यदि वयं एकस्मिन्स्थूलकर्गदे स्थितेन क्षुद्रच्छिद्रेण एकं चित्रं पश्यामः, तदा वयं तस्य चित्रस्य विषये पूर्णतया भ्रान्तां धारणां लभेमहि। तथापि यद्वयं पश्यामः, तद्वास्तविकं चित्रमेव। छिद्रं यावद्बृहत् कर्तुं शक्नुमस्तावत्येव स्पष्टा धारणाऽस्माकं चित्रस्य विषये भविष्यति। अस्माकं नामरूपयोर्भ्रमात्मकोपलब्ध्यनुसारेण वयं सत्यस्य वस्तुनो विषय एव विविधाः धारणाः कुर्मः। यदा च वयं तत्स्थूलं

कर्गदखण्डं क्षिपामस्तदा वयं तदेव चित्रं पश्यामः किन्तु तदा चित्रं यथायथं पश्यामः। वयं तस्मिन्चित्रे यावतो वा गुणान्विपरीतधारणाः आरोपयामस्तेन तस्य चित्रस्य किमपि परिवर्तनं न भविष्यति। एवमेव—आत्मैव सर्वस्य वस्तुनो मूलं सत्यरूपम्। यत्किमपि वयं पश्यामः सर्वमपि आत्मैव—किन्तु वयं यथा एतानि नामरूपात्मकत्वेन अपश्याम, न तथा। ते नामरूपे—आवरणान्तर्गतं तन्मायान्तर्गतमेव।

तानि यथा दूरवीणयन्त्रस्य काचस्योपरि स्थितानि चिह्नानि। सूर्यालोकेनैव वयं तानि चिह्नानि द्रष्टुं शक्नुमः, तथैव ब्रह्मरूपसत्यवस्तु पृष्ठेन वर्तते चेन्मायामपि वयं द्रष्टुं न शक्नुमः। स्वामिविवेकानन्द इति यो जनः स दूरवीक्षणकाचस्थितं चिह्नमात्रम्। वस्तुतः अहं सत्यस्वरूपः अपरिणामी आत्मा, तच्च सत्यवस्त्वेव मां—स्वामिविवेकानन्दं (नामरूपात्मकं) दर्शनयोग्यमकरोत्। प्रत्येकं भ्रमस्यापि सारसत्ता आत्मैव—यथा सूर्यः कदापि तैः चिह्नैः सह एकत्वं न भजते, केवलं तानि दृग्गोचराणि करोति, एवमेव आत्मापि कदापि नामरूपाभ्यामेकत्वं न भजते। अस्माकं शुभाशुभकर्माणि केवलं तानि चिह्नानि वर्धयन्ति न्यूनीकुर्वन्ति वा, किन्तु तानि अस्माकमन्तर्यामिण ईश्वरस्योपरि कमपि प्रभावं न वितनोति। मनसश्चिह्नानि पूर्णतया परिष्कुरु। तदैव वयं पश्यामः—अहं मे पिता चैक एव।

पूर्वमस्माकमनुभवो भवति, युक्तिविचारस्ततः परमागच्छति। अस्माभिरयमनुभवः लब्धव्यः, अयञ्च प्रत्यक्षानुभव एव यथार्थधर्मः। कोऽपि जनः शास्त्रं धर्ममतम् अवतारस्य कथां वा कदापि न

श्रुतवान्भवेत्, किन्तु यदि तस्य प्रत्यक्षानुभवो भवति तर्हि तस्यान्यत्किमपि नावश्यकम्। चित्तं शोधय—इदमेव धर्मस्य सारभूतं वाक्यम्। वयञ्च स्वयं यावन्न मनसश्चिह्नानि दूरीकुर्मः तावन्न वयं तत्सत्यस्वरूपं यथार्थतः द्रष्टुं न शक्नुमः। शिशुः कुत्रापि किमपि पापं न पश्यति, कारणं तस्य बहिःस्थं पापं मातुं किमपि मानकं तस्यान्तर्न वर्तते। तवान्तर्ये दोषाः सन्ति तान्दूरीकुरु—तदैव त्वं बहिः कमपि दोषं न द्रक्ष्यसि। शिशोः पुरस्ताच्चौर्यं दस्युता वा भवति, किन्तु तस्मै तत्सर्वमनर्थकं, स एतस्य किमपि नावगच्छति। प्रहेलिकायां गुप्तं चित्रं सकृदाविष्कारिष्यसि चेदनन्तरं सर्वदैव तद् द्रष्टुं शक्ष्यसि। एवं यदा त्वं पूर्णतया मुक्तो निर्दोषश्च भविष्यसि तदा जगत्प्रपञ्चे त्वं मुक्तिं शुद्धिं चान्तरेण किमपि द्रष्टुं न शक्ष्यसि। तस्मिन्नेव मुहूर्ते सर्वे हृद्ग्रन्थयश्छेत्स्यन्ते, सर्वा वक्रता ऋजूभविष्यति, तथा जगत्प्रपञ्चः स्वप्न इव विलीनो भवति। निद्राभङ्गे च आश्चर्यमनुभवामो यत्कथं वयमेवमनर्थकं स्वप्नं पश्याम इति।

यं लब्ध्वा पर्वतदघ्नं दुःखमपि हृदयं न विचालयति स लब्धव्यः (यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते)[२]।

ज्ञानपरशुना देहमनोरूपं चक्रद्वयं भिन्धि, तदैव आत्मा मुक्तस्वरूपः सन्पृथक्स्थातुं शक्ष्यति—यद्यपि प्राचीनवेगेनैव तदापि देहमनश्चक्रं कञ्चित्कालं यावच्चलिष्यति। किन्तु तदा चक्रमृजुमार्गेणैव गमिष्यति, अर्थात्तदा देहमनोभ्यां शुभकर्माण्येव भविष्यन्ति। यदि तेन शरीरेण किमप्यशुभं भवेत्तर्हि स्पष्टं जानीहि यत्स जनो जीवन्मुक्तो नेति—यदि

स जन आत्मानं जीवन्मुक्तं प्रतिपादयिष्यति तर्हि स मिथ्या वदति। एतदपि ज्ञेयं यत्तदा चित्तशुद्ध्या चक्रस्य सरला गतिरागता तदैव तस्मिन्परश्चाघातः सम्भवति। सर्वमपि शुद्धिकरं कर्म ज्ञातसारमज्ञातसारं वा अज्ञानं नाशयति। अपरस्मै पापीति शब्दप्रयोग एव गर्हिततमं कर्म। उत्कृष्टं कर्म अज्ञात्वा कृतमपि तस्य फलं समानमेव भवति—तद्बन्धनमुक्तौ साह्यमाचरति।

दूरवीक्षणकाचस्थचिह्नैः सूर्येऽपि कलङ्ककल्पनमेवास्माकं मौलिको भ्रमः। स आत्मरूपः सूर्यः न केनापि बाह्यदोषेण लिप्यते—एतज्ज्ञात्वा आत्मानं तेषां चिह्नानां नाशने नियोजय। यावन्तो जन्तवः सन्ति तेषु मनुष्य एव श्रेष्ठः। कृष्ण-बुद्ध-ख्रीष्टरूपस्य मनुष्यस्योपासनैव श्रेष्ठा उपासना। यस्याभावं त्वमनुभवसि तदेव त्वं सृज—वासनामुक्तो भव।



देवाः परलोकगताश्च जना अत्रैव वर्तन्ते—इदमेव जगत्ते स्वर्ग इति भावयन्ति। एकमेवाज्ञातं वस्तु सर्वे स्वस्वमनोभावानुसारं भिन्नभिन्नरूपेण पश्यन्ति। अस्यां पृथिव्यामेव तस्याज्ञातस्य वस्तुनः उत्कृष्टं दर्शनं लब्धुं शक्यते। कदाचित्स्वर्गं गन्तुं न कामय तदेव निकृष्टतमो भ्रमः। अस्यां पृथिव्यामपि अत्यन्तधनिकत्वं घोरदारिद्र्यश्चेत्युभयं बन्धनम्—उभयमप्यस्माद्धर्मपथात्मुक्तिपथाच्च दूरं नयति। त्रयमस्यां पृथिव्यां दुर्लभम्—एकं मनुष्यदेहः (मनुष्यमनस्येव ईश्वरस्योत्कृष्टं प्रतिबिम्वं विद्यते, बैबेलग्रन्थे वर्तते, मनुष्य ईश्वरस्य प्रतिरूप इति)। द्वितीयं—मोक्षलाभाय प्रबलाकाङ्क्षा। तृतीयश्च महापुरुषस्याश्रयलाभः। यः स्वयं

मायामोहसमुद्रं तीर्त्वा आगतः तादृशो महात्मा गुरुत्वेन प्राप्तव्यः।[३] यद्येतत्त्रयं लब्धं तर्हि भगवते धन्यवादानर्पय, त्वमवश्यं मुक्तो भविष्यसि।

केवलया तर्कयुक्त्या तव यत्सत्यज्ञानं भवति तन्नवीनतरेण युक्तितर्कजालेन उच्छिन्नं स्यात्, किन्तु त्वं यं प्रत्यक्षानुभवं करोषि स कदापि न गमिष्यति। धर्मविषये वचनवागीशो भूत्वा न कोऽपि लाभः। यस्य कस्यापि वस्तुनः संस्पर्शो भवति—यथा जन्तोः मनुष्यस्य आहारस्य कर्मणः—तत्रैव ब्रह्मदृष्टिः कर्तव्या । एवं सर्वत्र ब्रह्मदृष्टेश्च कश्चन अभ्यासो भवेत्।

इङ्गारसोलः[४] मां कदाचिदुक्तवान्, जगतः यावल्लब्धुं शक्यते, तावल्लब्धुं सर्वैर्यतनीयमिति मे विश्वासः। नारङ्गफलं पिष्ट्वा तावान् रसो निर्गमयितव्यः यथा रसस्य बिन्दुरपि नावशिष्येत, यतो हि जगद्विहाय अपरस्य जगतः सत्ता अस्माकं निश्चिता नास्ति। अहं प्रत्युत्तरितवान्, जगद्रूपनारङ्गफलपेषणस्य यमुपायं भवान्जानाति, तदपेक्षया उत्तममुपायमहं जानामि, तेन चाहमधिकं रसं सङ्गृह्णामि। अहं जानामि—मम मरणं नास्तीति, तस्मात्तस्य रसस्य निष्कासने मम शैघ्र्यं नास्ति। अहं जानामि—भयस्य किमपि कारणं नास्तीति, तस्मात्शनैः शनैः सुष्ठु सानन्दश्चाहं पेषयामि। मम किमपि कर्तव्यं नास्ति, न मे स्त्रीपुत्रादिरूपमैश्वर्यादिरूपं च बन्धनमस्ति, सर्वेषु जनेषु अहं प्रेतुं शक्नोमि। सर्वे मह्यं ब्रह्मस्वरूपाः। मनुष्ये भगवतीव प्रीतिः कियदानन्ददायिनीति भावयतु। नारङ्गफलमित्थं पेषयतु—अन्यथा

पेषणेन यावान् रसो लभ्यते ततः दशसहस्रगुणितमधिकं रसं प्राप्स्यति। बिन्दुरपि न गमिष्यति, प्रत्येकोऽपि बिन्दुर्लप्स्यते।

यदस्माकमिच्छेति भाव्यते तद्वस्तुतः अस्माकमधिष्ठानरूप आत्मा, यथार्थतश्च स मुक्तस्वभावः।

## तद्दिने अपराह्ने

ख्रीष्टः असम्पूर्ण आसीत्, यतो हि स यमादर्शं प्रचारितवान्तदनुसारेण न जीवितवान्। तथैव स नारीभ्यः पुरुषेण तुल्यां मर्यादां नैवादात्। नार्य एव तस्मै सर्वं कृतवत्यः किन्तु यहुदीनां देशाचारेण स तथाऽऽबद्ध आसीद्यत्स एकामपि स्त्रियमात्मनः प्रेरितशिष्यां नाकार्षीत्। तथापि उच्चतमचरित्रत्वेन बुद्धात्परमेव तस्य स्थानम्—किन्तु बुद्धोऽपि पूर्णतः निर्दोषो नासीत्। तथापि, बुद्धो धर्मराज्ये पुरुषेण सह स्त्रियाः समानाधिकारमङ्ग्यकार्षीत्, तस्मात्तस्य पत्न्येव तस्य प्रथमा तथा काचित्प्रधाना शिष्या आसीत्। सा बौद्धभिक्षुकीणामधिनायिका अभूत्। किन्तु एतेषां महापुरुषाणां विरुद्धालोचनं नास्माकमुचितम्। अस्माकं कर्तव्यं केवलं ते अस्माकमपेक्षया अनन्तगुणेन श्रेष्ठा इति भावनम्। तथापि यः यावान् उत्कृष्टो वा भवतु नाम, केवलं तस्मिन्विश्वस्य स्थितिमात्रेण न भविष्यति। अस्माभिरपि बुद्धेन ख्रीष्टेन वा भाव्यम्।

कस्यापि जनस्य विचारस्तस्य नैयून्यं दोषं वा दृष्ट्वा न कर्तव्यः। मनुष्यस्य ये उत्तमगुणास्ते तस्य स्वीयाः, किन्तु दोषा मनुष्यजातेः साधारणदौर्बल्यम्। अतः तस्य चरित्रस्य विचारं कुर्वता तेषां गणनं न कार्यम्।



आङ्गल virtue इति शब्दः संस्कृतवीरशब्दादायातः। कारणं प्राचीनकाले श्रेष्ठयोद्धनेव जना श्रेष्ठान्धार्मिकान्मन्यन्ते स्म।

## मङ्गलवारः, जुलैमासस्य त्रिंशं दिनम्

ख्रीष्टबुद्धसदृशा महापुरुषाः केवलं बहिरालम्बनम्। तेषु अस्माकमन्तर्निहिताः शक्तीर्वयमारोपयामः केवलम्। वस्तुतः वयमेवास्माकं प्रार्थनानामुत्तरं दद्मः।

ख्रीष्टो यदि नाजनिष्यत तर्हि मनुष्यजातरुद्धारो नाभविष्यदिति चिन्तनमीश्वरनिन्दातुल्यमेव। मनुष्यस्वभावस्यान्तर्य ऐश्वरिको भावो वर्तते तस्य विस्मरणमत्यन्तं भयानकं—स ऐश्वरभावः कदाचिदवश्यं प्रकाशितो भविष्यति। मनुष्यस्वभावस्य महत्त्वं कदापि न विस्मर। ईश्वरः पूर्वं यदभवत्, भविष्ये च यद्भविष्यति तत्र श्रेष्ठतमः प्रकाशो वयमेव। अहमेव सोऽनन्तो महासमुद्रः—ख्रीष्टबुद्धादयः तस्यैव तरङ्गमात्रं, तवान्तरात्मानं विहायापरस्य पुरस्तान्न शिरोऽवनमय। यावन्न त्वमात्मानं देवदेवस्वरूपं न ज्ञातुं शक्नोषि तावत्ते मुक्तिर्नास्ति।

अस्माकं सर्वमप्यतीतं कर्मोत्तममेव, यतो हि कर्माण्येवास्मान् चरमान् आदर्शान्प्रापयन्ति। कस्मादहं भिक्षेय? अहमेव यथार्थसत्ता, यच्चमत्स्वरूपाद्भिन्नं प्रतीयते तत्सर्वं स्वप्नमात्रम्। अहं समग्रः समुद्रः, त्वं स्वयं तस्मिन्समुद्रे यं लघुतरं तरङ्गमुत्थापितवांस्तदेवाहमिति न मन्यस्व। तत्तरङ्गा एवेति जानीहि। सत्यकामः (सत्यं लब्धुं प्रबलः कामो यस्य) श्रुतवास्तस्यान्तःस्था

वाक्तस्मै वदति, त्वमनन्तस्वरूपः, सैव सर्वव्यापिनी सत्ता ते अन्तर्वर्तते इति। आत्मानं संयमय, तव यथार्थात्मनः वाणीं शृणु च।

ये महापुरुषाः प्रचारकार्ये प्राणानर्पयन्ति ते निर्जनं नीरवम् अतिपवित्रजीवनं यापयितृभ्यः उन्नतभावसर्जकेभ्यो जगत्साहाय्यकारिभ्यः असम्पूर्णाः। ते शान्तिप्रिया निर्जनवासिनः महापुरुषा परम्परया आविर्भवन्ति, तेषां च शक्तीनां चरमफलरूपेणैकस्य शक्तिसम्पन्नस्य महापुरुषस्याविर्भावो भवति, यः तानि तत्त्वानि सर्वत्र प्रचारयन्नटति।

* * *

ज्ञानं स्वत एव वर्तते, मनुष्यः केवलं तदाविष्करोति। वेदसमूह एव तच्चिरन्तनं ज्ञानं—यस्य सहायेन ईश्वरो जगदसृजत्। भारतीयदार्शनिका उन्नततमानि दार्शनिकतत्त्वानि वदन्ति, तैरेवै तत्प्रबलतया प्रतिपादितम्।

* * *

यत्सत्यं तन्निर्भीकतया जनेभ्यो वद—तत्सत्यप्रकाशनेन जनविशेषस्य कष्टं स्यान्नवेति न भावय। दौर्बल्यं न प्रतिपालय। सत्यज्योतिः बुद्धिमद्भ्योऽपि यदि प्रखरं प्रतिभाति, यदि तेऽपि तत्सोढुं न शक्नुवन्ति, सत्यस्य प्लावनं यदि तानपि प्लावयेत्तथा भवतु नाम—यावच्छीघ्रं ते गच्छन्ति तावदेवोत्तमम्। शैशवभावः शिशूनामारण्यासभ्यानाञ्चैव शोभते। किन्तु ते भावाः केवलं शिशुषु अरण्येषु च सीमिता न सन्ति, दृश्यते यत्तेषु केचिद्भावाः धर्मप्रचारकेष्वपि वर्तन्ते।

आध्यात्मिकोन्नतिलाभाय सम्प्रदायाबद्धत्वं बाधास्वरुपम्। सम्प्रदाया-द्बहिरागत्य स्वातन्त्र्यस्य मुक्तवायौ शरीरं पातय।

अभ्युन्नतिर्यादृश्यपि भवतु व्यावहारिके आपेक्षिके वा जगत्येव भवति। मानुषकाय एव श्रेष्ठः कायः मनुष्यश्च श्रेष्ठो जन्तुः यतो हि मनुष्यदेहे—अस्मिन् जन्मन्येव वयं पूर्णतया अस्माद् आपेक्षिकजगतो बहिर्गन्तुं शक्नुमः, वस्तुत एव मोक्षावस्थां लभेमहि, स च मोक्षोऽस्माकं चरमं लक्ष्यम्। केवलं वयं शक्नुम इति न, बहुभिः वस्तुतः इह जीवने मोक्षावस्था लब्धा, पूर्णता प्राप्ता। तस्मादिमं देहं परित्यज्य सूक्ष्मात्सूक्ष्मतरं देहमपि प्राप्तश्चेदपि स आपेक्षिकजगत्येव वर्तते, अस्मदपेक्षया अधिकं स किमपि लब्धुं न शक्ष्यति, यतो हि मोक्षपदाद् उन्नतावस्था लब्धुं न शक्यते।

देवाः कदापि अन्याय्यं नाचरन्ति, तस्मात्ते दण्डमपि न लभन्ते। तस्मात्ते मुक्ता अपि न भवन्ति। संसारस्य प्रबला आघाता एवास्मान्जागरयन्ति, इदं जगत्स्वप्नं भञ्जयितुं साह्यं कुर्वन्ति। इत्थमाघातपरम्परैव संसारस्यासम्पूर्णतां बोधयति। अस्मात्संसारात्पलायितुं मोक्षं लब्धुमाकाङ्क्षां जागरयन्ति।



किमपि वस्तु यदा वयमस्पष्टतया उपलभामहे, तदा वयं तस्मै किमपि नाम दद्मः, यदा च तस्य पूर्णोपलब्धिर्भवति तदा तस्मायापरं नाम दद्मः। अस्माकं नैतिकी प्रकृतिर्यावती उन्नता भवति तावत्येवास्माकमुपलब्धिः उत्कृष्टा भवति, अस्माकमिच्छाशक्तिरपि ततोऽधिका बलवती भवति।

## तद्दिने अपराह्ने

जडे चिन्ताराशौ च यत्सामञ्जस्यं वयं पश्यामस्तस्य कारणं हि उभयमपि एकस्यैवाज्ञातस्य वस्तुनः पृष्ठद्वयम्, तदेव वस्तु द्वैधीभावमापन्नं बाह्यमान्तरं च भवति।

आङ्ग्लभाषायाम् paradise इति शब्दः संस्कृतात्परदेशशब्दादागतः। स एव शब्दः पारस्यभाषायामपि लब्धः—फारदौस इति शब्दस्यार्थो हि देशस्य पारे उत देशान्तरमुत जनान्तरम्। प्राचीना आर्याः सर्वदापि आत्मनि विश्वासवन्त आसन्, मनुष्यो देहमात्रमिति ते कदापि नाभावयन्। तेषां मते स्वर्गं नरकमुभयमनित्यं सान्तं च। कारणं किमपि कार्यं कदापि तस्य कारणनाशात्परं स्थातुं न शक्नोति, किमपि च कारणं चिरस्थायि न भवति। तस्मात्कार्यस्य फलस्य वा कदाचिन्नाशः अवश्यं भविष्यति। अस्मिन् रूपके[१] समग्रस्य वेदान्तदर्शनस्य सारो वर्तते।

स्वर्णिमपक्षयुक्तौ विहगौ एकस्मिन्वृक्षे आसीनौ। तत्र य उपरितनायां शाखायामासीनः स स्थिरः शान्तः निजमहिम्ना स्वयं मग्नः। अधस्तन-शाखासीनश्च विहगः चञ्चलः सदैव वृक्षस्य फलानि सेवमान आस्ते—कदाचिन्मधुरं फलं सेवते कदाचिच्च कटुफलम्। कदाचित्सोऽत्यन्तं कटुफलमसेवत। तदा स स्थिरो भूत्वा उपरितनं महिममयं विहगम-पश्यत्। किन्तु शीघ्रमेव तं विस्मृत्य पूर्ववत् वृक्षफलानि सेवितुं प्रारभत। पुनः कटुफलमसेवत। इदानीं स किञ्चित्प्लवित्वा तत उपरितनां शाखां गतः। एवं बहुवारमभवत्। कदाचित्स तस्योपरितनस्य विहगस्य शाखामेव प्राप्तवान्। तदैव सहसा स आत्मानं व्यस्मरत्। तदा तेनावगतं

यत् विहगद्वयं कदापि नासीत्। सर्वदा स एव शान्तः स्थिरश्च स्वमहिम्ना मग्नः उपरितनो विहग एवासीत्।

## वृहस्पतिवारः, अगस्तमासस्य प्रथमं दिनम्, अपराह्णे

विश्वमिदमनन्ततया अभिव्यक्तं सत् अविरतं चलति, भ्रमद्यन्त्रमिव— आत्मा तद्यन्त्रमास्थाय भ्रमति। अयं क्रमश्चिरन्तनः। एकैको जनः यन्त्रादवतरति किन्तु चिरकालमेव इयं घटना पुनः पुनः घटते, तस्मादेव च सर्वस्य भूतं भविष्यं सर्वं वक्तुं शक्यते। कारणं सर्वमेव वस्तुतो वर्तमानम्। यदा आत्मा काञ्चित्शृङ्खलामापतति तदा तत्रस्था अभिज्ञताः आश्रित्यैव तस्य गन्तव्यम्। एवं कस्याः शृङ्खलाया श्रेण्या वा अपरां शृङ्खलां श्रेणीं वा गच्छति। कदाचित्काञ्चित्श्रेणीमाश्रित्य ते स्वेषां ब्रह्मस्वरूपत्वमवगच्छन्ति ततो बहिर्गच्छन्ति च। तस्याः श्रेण्या घटना-परम्पराया एकां प्रधानां घटनामवलम्ब्य तस्याः सर्वाः घटनाः अवगन्तुं शक्यन्ते। तदन्तःस्थाः सर्वाः घटना एव यथायथमधिगन्तुं शक्यन्ते। इयं शक्तिः सारल्येनैव लभ्यते, किन्तु नानेन वास्तविको लाभः कोऽपि भवति। तथा च तच्छक्तिलाभस्य साधनायामस्माकं समपरिमाणकाध्यात्मिक-शक्तिर्व्ययिता भवति। ततः तादृशविषयेषु मा यतस्व। भगवदुपासनां कुरु।

## शुक्रवारः, अगस्तमासस्य द्वितीयं दिनम्

भगवदुपलब्धये प्रथमतः निष्ठा आवश्यकी।

*सबसे रसिये सबसे बसिये सबका लीजिये नाम।*
*हाँ जी हाँ जी करते रहिये बैठिये आपनी ठाम।।* इति।

सर्वैः सह आनन्दं कुरु, सर्वैः सहोपविश, सर्वस्य नामोच्चारय, सर्वस्य मतं बाढं बाढमित्यङ्गीकुरु, किन्तु स्वस्य भावं कदापि न परित्यज। एतस्मादुन्नततराऽवस्था—अपरस्य भावेन आत्मनो यथार्थतो भावनम्। यदि अहमेव सर्वं तर्हि भ्रात्रे सह कथं न यथार्थतः कार्यतश्च सहानुभूतिं दर्शयितुं न शक्नुयाम्? यावदहं दुर्बलः तावदेव मया निष्ठया एको मार्ग आस्थेयः; किन्तु यदाऽहं सबलो भविष्यामि तदा अपरस्य सर्वस्य मतान्यनुभवितुं मे सामर्थ्यं भविष्यति, तैः सह पूर्णां सहानुभूतिमनुभविष्यामि।

प्राचीनानां भाव आसीत्—अपरस्य भावं नाशयित्वा एकस्य भावस्य प्राबल्येन प्रतिष्ठापनम्। किन्तु आधुनिको भावस्तु—सर्वविषयेण सह सामञ्जस्येन अभ्युन्नतिसाधनम्। कश्चित्तृतीयः पन्थास्तु मनसो विकाशसाधनं तस्य संयमनं च, ततश्च यथेष्टं तस्य प्रयोगः—तेन फलं शीघ्रं लभ्यते। अयमेवात्मन उन्नतये यथार्थो मार्गः। ऐकाग्र्यं शिक्षय, तच्च सर्वत्र प्रयुङ्क्ष्व। इत्थं करणेन तव काऽपि हानिर्न भविष्यति। यः समग्रं प्राप्नोति सः अंशमपि प्राप्नोति। द्वैतवादः अद्वैतवादस्यैवांशः।

अहं प्रथमं तं दृष्टवान्सोऽपि माम्, अहं तस्मिन्कटाक्षमपातयं, सोऽपि मयि—इत्थं चलति। अन्ते आत्मद्वयं पूर्णतया सङ्गतं, तौ वस्तुत एकीभूतौ।[६]



समाधेर्भावद्वयमस्ति—प्रथमो भावो हि, अहमात्मानमेव ध्यायामि, अपरो भावश्च बाह्यवस्तु ध्यायामीति। ततो ध्यान-ध्येय-ध्यातृषु अभेदोऽभवत्।

प्रत्येकेनाऽपि भावविशेषेण सह त्वं सहानुभूतिसम्पन्नो भव, ततः उन्नततमाद्वैतभावं प्रति उद्वल्गय। पूर्णमुक्तिं लब्ध्वा पुनरिच्छसि चेत् आत्मानं पुनः सीमायां बधान। प्रत्येकं कर्मणि स्वीयां सर्वां शक्तिमुपयुङ्क्ष्व। केभ्यश्चित्क्षणेभ्यः अदैतवादं विस्मृत्य द्वैतवादभावतया शक्तिलाभः कर्तव्यः, पुनर्यदिच्छा भवेत्तदैव तमद्वैतभावमाश्रयितुमपि शक्तिः स्यात्।

* * *

कार्यं कारणं सर्वमपि माया। यथा यथा वयं वर्धेमहि, तथा तथा बुध्यामहे यद्बालेभ्यः कल्पकथा यथा अस्मभ्यमसम्बद्धं प्रतिभाति तथैव यत्किमपि वयं पश्यामः सर्वमपि तथैव असम्बद्धम्। वस्तुतः कार्यं कारणं च किमपि नास्ति। कालेन वयमेतज्ज्ञातुं शक्ष्यामः। अतो यदि शक्नोषि तर्हि कल्पकथां श्रोतुं स्वीयां बुद्धिवृत्तिमवनमय, तासां कथानां पौर्वापर्यसङ्गतिं न पृच्छ। हृदि रूपकवर्णनस्य सुन्दरकवित्वस्य च विषये अनुरागं विकाशय, ततः सर्वाणि पौराणिकविवरणानि कवित्वं मत्वा उपभुङ्क्ष्व। पुराणचर्चाकाले इतिहासस्य युक्तिविचारस्य च विषयाय दृष्टिं न देहि। ते पौराणिकभावास्तव मनसि प्रवाहाकारेण गच्छन्तु। तव चक्षुषः पुरस्ताद् उल्मुकमिव तान्भावान्भ्रामय, कः तदुल्मुकं गृहीतवान् अस्ति तद्विषये न पृच्छ, तर्ह्येव एकमालोकचक्रं द्रक्ष्यसि। तत्र याः सत्यस्यकणाः सन्ति ताः त्वन्मनसि स्थास्यन्ति।

पुराणरचयितारः स्र्वेऽपि यद्दृष्टवन्तः श्रुतवन्तश्च तत्सर्वं रूपकच्छलेनालिखन्। ते कानिचित्प्रवाहाकाराणि चित्राण्यलिखन्। तेभ्यः

केवलं प्रतिपाद्यं विषयं ग्रहीतुं यतस्व, चित्राणि न नाशय। तान्विषयान्यथायथं गृहाण, त एव त्वां प्रभावयन्तु। तेषां फलं दृष्ट्वा विचारय—तेषु यदुत्तमं तत्स्वीकुरु।

* * *

तव स्वेच्छाशक्तिरेव ते प्रार्थनानि उत्तरयति किन्तु विविधजनानां मनसो धर्मसम्बन्धीयधारणावैविध्यात्तानि विविधैराकारैः प्रकटयन्ते। वयं तं बुद्धः, ख्रीष्टः, जिहोवा, आल्लाहः, अग्निरिति यथेच्छसंज्ञाभिः अभिधातुं शक्नुमः। वस्तुतस्तु सः अस्माकम् 'अहम्' अथवाऽऽत्मा।

* * *

अस्माकं धारणा क्रमश उत्कर्षं प्रतिगच्छति, किन्तु सा धारणा येषां रूपकाणां माध्यमेनास्माकं पुरस्तात्प्रकाश्यते तेषामैतिहासिकं मूल्यं किमपि नास्ति। अस्माकमलौकिकदर्शनापेक्षया मोजेसस्य आलौकिकदर्शनेषु भ्रमस्य सम्भावनाऽल्पीयस्येव।

यावदस्माकं हृदयरूपं शास्त्रमुद्घाटितं भवति तावच्छास्त्रपाठो वृथा। तदा तस्य शास्त्रस्य यावान्भागः अस्माकं हृदयशास्त्रेण साम्यं भजते तावत एव भागस्य सार्थक्यम्। शक्तिः का इति शक्तिमानेव जानाति। गज एव सिंहं जानाति, मूषकः कदापि सिंहं बोद्धुं नार्हति। यावन्न वयं ख्रीष्टेन तुल्यो भवामः तावत्कथं तं बोद्धुं शक्नुमः? रोटिकाद्वयेन जनानां पञ्चसहस्रस्य भोजनम् अथवा पञ्चभी रोटिकाभिः जनद्वयस्य भोजनमुभयमपि मायारचितं स्वप्नराज्यम्। अनयोरेकमपि सत्यं न। तस्मात् अनयोरेकमप्यपरेण बाधयितुं न शक्यते। महत्त्वमेव महत्त्वमाद्रियात्।

ईश्वर एव ईश्वरं ज्ञातुं शक्नुयात्। स्वप्नः स्वप्नुर्भिन्नो न। तस्यापरा भित्तिभूमिर्नास्ति। स स्वप्नः स्वप्नद्रष्टुः पृथक्न भवति। समग्रस्य सङ्गीतस्यान्तः सोऽहं सोऽहमिति एकः राग एव वाद्यते, अपरे रागाः तस्यैव रूपान्तरम्। यत्किमपि वयं वदामः तत्सर्वं शास्त्रमिति ज्ञायते। सर्वेऽपि जीवन्त ईश्वराः जीवन्तः ख्रीष्टाः—इत्येवं दर्शनं भवेत्। मनुष्यमधीष्व। मनुष्य एव जीवत्काव्यम्। जगति एतावत्पर्यन्तं यावन्ति बैबेल् प्रभृतीनि, यावन्तः ख्रीष्टा बुद्धा वाऽभवन्, ते सर्वे अस्माकमेव प्रकाशेन प्रकाशिताः। इमं प्रकाशं विहाय तत्सर्वमस्मभ्यं जीवन्न प्रतिभास्यति, मृतं भविष्यति। स्वात्माधिष्ठितो भव।

शवेन सह यथा कथमपि व्यवहर, तस्य क्षोभो नास्ति। अस्मच्छरीरमपि एवं शववत्कर्तव्यं, देहेन सह चास्माकं योऽभेदभावो वर्तते स दूरीकरणीयः।

## शनिवारः, अगस्तमासस्य तृतीयं दिनम्

ये जना अस्मिन्नेव जन्मनि मोक्षमिच्छन्ति तैरस्मिन्जन्मन्येव सहस्रवर्षात्मकं जीवनं यापनीयम्। ते यस्मिन्युगे जाताः, तद्युगीनभावाद्बहु अग्रे गन्तव्यं भवति। किन्तु सामान्याः करतलजानुभ्यां कथञ्चिदग्रेसरन्ति। ख्रीष्टो बुद्धः इत्यादीनामुत्पत्तिरेवमेव।

* * *

एकदा काचिद् हिन्दुराज्ञी आसीत्।[७] तस्याः पुत्रा अस्मिन्नेव जन्मनि मोक्षं लभन्तामिति तस्या महतीच्छा आसीत्। सा स्वयमेव पुत्राणां

पालनपोषणदायित्वं स्व्यकार्षीत्। शैशवे तान्स्वापयितुं सा तेषां कर्णयोः तत्त्वमसि तत्त्वमसि—त्वमेव स आत्मा, त्वमेव तद् ब्रह्म—इति गीतं गायति स्म। तेषु त्रयः सन्न्यासिनोऽभवन्। किन्तु चतुर्थं पुत्रं राजानं कारयितुमन्यत्र नीतवन्तः। तस्यापृच्छाकाले माता तस्मै कर्गदखण्डमेकं दत्त्वा उक्तवान्—प्रवृद्धे वयसि पठात्र किं लिखितमिति। तत्र लिखितमासीत्, ब्रह्म सत्यं जगन्मिथ्या। आत्मा न हन्यते न च हन्ति। निःसङ्गो भव, अथवा सत्सङ्गमाश्रित्य जीव इति। राजपुत्रः प्रवृद्धः सन्तं लेखं पठितवान्। सद्यश्च प्रव्रज्यामङ्गीकृतवान्।

त्यज, संसारं त्यज। वयमिदानीं श्वान इव—महानसं प्रविष्टाः, मांसखण्डं भुञ्जानाः सभयमितस्ततः पश्यामः कोऽप्यागत्य निष्कासयेदिति। नो चेद्राजेव भव। जानीहि यत्, समग्रं राज्यं तव। यावत्संसारं न त्यजसि, यावत्संसारस्त्वा बध्नाति तावत्स भावस्तव नागच्छेदेव। यदि बहिस्त्यक्तुं न शक्नोषि तर्हि मनसैव सर्वं त्यज। अभ्यन्तरस्याभ्यन्तरात्सर्वं त्यज। वैराग्यवान्भव। अयमेव वास्तविक आत्मत्यागः—एतं विना धर्मलाभो न भवति। कामपि वासनां न कुरु। यतो हि यस्य वासनां करिष्यसि तदेव लप्स्यसे। तदेव च तव भयानकबन्धनस्य कारणं भविष्यति। यथा कथायां वर्तते। एकस्य जनस्य वरत्रयं लब्धमासीत्। तैः वरैस्तस्य सर्वाङ्गाणि नासिकामयान्यभूवन्।[८] वासनया एवं भवति। यावन्न वयमात्मरतयः, आत्मतृप्ता न भवेम तावन्न मोक्षं लभेमहि। आत्मैव आत्मनो मोक्षप्रदाता, नान्यः। एतदनुभवितुं जानीहि यत्, त्वमेव सर्वेषां शरीरेषु विद्यसे। एतज्ज्ञातुं यतस्व यत्, वयं

सर्वे समाना एवेति। सर्वमशुभं त्यज। शुभाशुभं यत्किमपि कृतं तद्विषये न चिन्तय—तत्सर्वं थुत्कृत्य दूरं क्षिप। यत्कृतं तत्कृतमेव। कुसंस्कारान्दूरीकुरु। पुरतो मरणे समागतेऽपि न दौर्बल्यमाश्रय।

अनुतापं मा कार्षीः। पूर्वं यत्कृतं तद्विषये न चिन्तय। यानि शुभान्यपि कर्माणि कृतानि तान्यपि स्मृतिमार्गाद्दूरीकुरु। मुक्तो भव। दुर्बलाः कापुरुषाः अज्ञाः कदापि आत्मानं न लभन्ते। कस्यापि कर्मणः फलं त्वं नाशयितुं न समर्थः—फलमागमिष्यत्येव। अतः साहसमवलम्ब्य तस्य सम्मुखीनो भव। किन्तु सावधानो भूत्वा यथा पुनस्तदेव कर्म न कुर्याः। सर्वस्य कर्मणो दायित्वं भगवति समर्प्य शुभाशुभं सर्वं देहि। शुभं स्वयं संस्थापय अशुभं तस्मै न देहि। यः स्वयं स्वस्य साहाय्यं करोति भगवान्तस्य साहाय्यं करोति।

* * *

वासनासुरासेवनेन समग्रं जगन्मत्तमस्ति। यथा दिवसो रात्रिश्च एकत्र न तिष्ठतः तथैव वासना भगवांश्च एकत्र स्थातुं न शक्नुतः।[१] तस्माद्वासनां त्यज।

* * *

भोजनं भोजनमित्याक्रोशने भोजने तथा जलं जलमित्याक्रोशने जलपाने च आकाशपातालयोरिव महान्भेदः। तस्मात् ईश्वर ईश्वर इत्याक्रोशनेन कदापीश्वरोपलब्धेराशा न कर्तव्या। अस्माभिरीश्वरलाभाय यतनीयं साधनीयञ्च।

समुद्रेण सह एकीभूयैव तरङ्गः असीमतां लभते, न तरङ्गरूपेण। ततः समुद्ररूपो भूत्वा पुनः तरङ्गाकारं धर्तुं यावदभिलषते तावद् बृहत्तरः तरङ्गो भवितुं चार्हति। आत्मानं तरङ्गप्रवाहं न मन्यस्व, जानीहि यत्त्वं मुक्त इति।

वस्तुतः दर्शनशास्त्रं नाम—केषाञ्चन प्रत्यक्षानुभवानां सम्बद्धताकल्पनम्। यत्र बुद्धिविचारः समाप्यते, तत्रैव धर्मः प्रारभते। समाधिरीश्वरभावावेशो वा युक्तिविचारात्महत्तरः, किन्तु तदवस्थायामुपलब्धानि सत्यानि कदापि युक्तिविचाराणां विरोधीनि न भवन्ति। युक्तिविचारः स्थूलयन्त्रमिव, तद्द्वारेण श्रमसाध्यानि कार्याणि कर्तुं शक्यन्ते, समाधिरीश्वरभावावेशो वा उज्ज्वलप्रकाश इव समग्रं सत्यं प्रकटयति। किन्तु अस्मासु किमपि कर्तुमिच्छा अथवा प्रेरणैव ईश्वरभावावेश इति वक्तुं शक्यते।

* * *

मायायां स्थित्वैवाभ्युन्नतिर्नाम वृत्ताकारमार्गेण यात्रेव। यतस्त्वया यात्रा प्रारब्धा तत्रैव पुनराप्तिः। किन्तु भेद इत्थं भवति, यदा त्वया यात्रा प्रारब्धा तदा त्वमज्ञानमासीः यदा च प्रत्यागमिष्यसि तदा त्वं पूर्णं ज्ञानमलभथाः। ईश्वरोपासनं, महापुरुषाणां पूजनम्, ऐकाग्र्यं ध्यानं, निष्कामकर्म—एतत्सर्वं मायाजालं कर्तयित्वा बहिरागमनस्योपायरूपम्। किन्तु आदौ अस्माकं तीव्रं मुमुक्षुत्वमपेक्षितम्। यद् ज्योतिः झटिति प्रकाश्य अस्माकं हृदयान्धकारं दूरीकरोति तदस्माकमन्तरेव वर्तते—एतत्तज्ज्ञानं यदस्माकं स्वभावः स्वरूपं वा (नैतज्ज्ञानमस्माकं जन्मसिद्धोऽधिकार इति वक्तुं न शक्यते। यतो हि अस्माकं जनिरेव नास्ति)। केवलं ये मेघखण्डास्तं ज्ञानसूर्यमावृत्य स्थितास्तेऽस्माभिरपाकारणीयाः।

इहलोके स्वर्गे वा ये भोगास्तेषां वासनास्त्याज्याः (इहामुत्रफलभोगविरागः)। इन्द्रियस्य मनसश्च संयमः (दमः शमश्च)। सर्वविधं दुःखं सहस्व, मनो ज्ञातुमपि न शक्नुयाद्यत्तव किमपि दुःखमागतमिति

(तितिक्षा)। मुक्तिं विना सर्वाश्चिन्ता दूरीकुरु। गुरौ तदुपदेशे च विश्वसिहि। त्वमवश्यं मुक्तिं प्राप्स्यसीत्यत्र विश्वासो भवतु (श्रद्धा)। यत्किमपि भवतु नाम, सर्वदा जप सोऽहं, सोऽहमिति। खादन्, भ्रमन्, कष्टायमानो वा वद सोऽहं सोऽहमिति। मानसम् अविरतं वद—यदिदं विश्वं पश्यामि कस्मिन्नपि काले एतस्य सत्ता नास्ति, केवलमहमस्मि (समाधानम्)। द्रक्ष्यसि—कदाचित्झटिति ज्ञानस्य प्रकाशो भविष्यति—जगच्छून्यमेव, केवलं ब्रह्मैवास्ति। मुक्तो भवितुं प्रबलेच्छावान्भव (मुमुक्षुत्वम्)।[१०]

आत्मीया बान्धवाः सर्वे प्राचीनान्धकूपा इव। वयं तमन्धकूपं पतित्वा कर्तव्यं, बन्धनमित्यादिकं विविधप्रकारकं स्वप्नं पश्यामः—तस्य स्वप्नस्यान्तो नास्ति। कस्यापि साहाय्यं कुर्वन्पुनर्भ्रमं नोत्पादय। यथा वटबृक्षः आलम्बनैः क्रमशो वर्धतेतरां तथैवायं स्वप्नः वर्धते। त्वं द्वैतवादी असि तर्हि ईश्वरस्य साहाय्यं करोषीति भावयसि चेदपि तत्तेमौर्ख्यम्। यदि अद्वैतवादी तर्हि त्वं स्वयमेव ब्रह्मासि किं ते कर्तव्यम्। तव पतिः सन्ततिः, बान्धवाः—कमपि प्रति किमपि कर्तव्यं नास्ति।[११] यद्भवति भवतु नाम। तूष्णीं तिष्ठ।

रामप्रसादः कथयति—

भवसागरमास्थाय ह्युडुपमस्मि प्लावयन्।<br>
प्रवाहे नियताचारी परावर्ते भजामि च।। इति।

शरीरं म्रियते चेन्म्रियतां नाम—मम कश्चन देहोऽस्तीत्येव काचित्प्राचीना उपकथा। तूष्णीमुपविश, जानीहि च अहं ब्रह्मेति।

केवलं वर्तमान एवास्ति—वयं चिन्तायामपि अतीतस्य भविष्यस्य च धारणां कर्तुं न शक्नुमः। यतो हि चिन्तने क्रियमाणे चिन्तनमपि वर्तमानं भवति। सर्वं परित्यज। येन यत्र गन्तव्यं, तत्तत्र गच्छतु नाम। समग्रं विश्वमेव भ्रममात्रम्। तत्त्वां न वञ्चयेत्। यद्विश्वं नास्ति त्वं विश्वं तथा ज्ञातवान्, अवस्तुनि वस्तुज्ञानं तव जातम्। सम्प्रति विश्वं यथार्थतो यदस्ति तथा जानीहि। यदि शरीरं कुत्रापि गच्छेत्गच्छतु नाम। शरीरं कुत्रापि गच्छतु मा चिन्तय। कर्तव्यस्य या दारुणा धारणा सा भीषणं कालकूटमिव विश्वं नाशयन्ती वर्तते।

स्वर्गं गत्वा काञ्चिद्वीणां प्राप्स्यसि। ताञ्च वादयन्यथासमयं विश्रामसुखमनुभविष्यसि—तस्मै प्रतीक्षां न कुरु। अत्रैव वीणामेकां गृहीत्वा कुतो नारभसे? स्वर्गाय प्रतीक्षा कुतः? इमं लोकमेव स्वर्गं कुरु। स्वर्गे विवाहः न क्रियते न वा कार्यते—यदि तथा तर्हि अत्रापि तथा कुतो नारभ्यते? अत्रापि न विवाहमुच्छेदयसि कथम्? सन्न्यासिनः काषायं वस्त्रं मुक्तपुरुषस्य चिह्नम्। संसारित्वरूपं भिक्षुकवेषं निक्षिप। मुक्तिध्वजां काषायवसनं धर।

## रविवारः, अगस्तमासस्य चतुर्थं दिनम्

यथा देहो मनसो यन्त्रविशेषः तथैव मन आत्मनो यन्त्रविशेषः। जडं नाम बाह्यगतिः, मनस्त्वान्तरगतिः। काले एव सर्वस्य परिवर्तनस्य परिणामस्य चारम्भः समाप्तिश्च। आत्मा यद्यपरिणामी स्यात्, तर्हि सोऽवश्यं पूर्णस्वरूपः। यदि च स पूर्णस्वरूपस्तर्हि अवश्यमेवानन्तस्वरूपः। अनन्तस्वरूपश्चेदवश्यमद्वितीयः। यतो हि अनन्तद्वयं भवितुं नार्हति। अतः

आत्मा 'एकमेवाद्वितीयमे'व भवेत्। यद्यपि आत्मनो बहुत्वं प्रतिभाति अथापि वस्तुतः स एक एव। यदि कश्चन जनः सूर्यं प्रति गच्छति तर्हि प्रतिपदक्षेपं स विभिन्नं सूर्यं यद्यपि द्रक्ष्यसि अथापि ते सर्वे सूर्या वस्तुत एक एव।

अस्तित्वमेव सर्वप्रकारकैकत्वस्य प्रतिष्ठाभूमिः तां भूमिं गत्वैव पूर्णता लभ्यते। यदि सर्वे वर्णाः एकवर्णत्वेन परिणामयितुं शक्यते स्म तर्हि चित्रविद्याया एव लोपोऽभविष्यत्। पूर्णमेकत्वं नाम विश्रान्तिर्लयो वा। वयं वदामः—सर्वः प्रकाशः एकस्मादेवेश्वरादभूत्। ताओवादितः[१२], कंफुछमतावलम्बिनः, बौद्धा, हिन्दवो. यहूद्याः, महम्मदीयाः, ख्रीष्टीयाः, जराथ्रुष्टशिष्याश्च सर्वे समानभाषयैव इमां महतीं नीतिं प्रचारयामासुर्यत्—त्वमपरस्माद्यदृशं व्यवहारमिच्छसि तादृशमेव व्यवहारमपरस्मै साधय इति। किन्तु हिन्दुभिरेवास्य पृष्ठतो युक्तिर्दर्शिता। मनुष्यः अवश्यमपरस्मिन्स्नेहिष्यति। यतो तत्सर्वमप्यपरं स स्वयमेव, तदेकमेव वस्तु सर्वस्मिन्वर्तते।

जगति यावन्तो महान्तो धर्माचार्या अभवन्, तेषु लाओत्से, बुद्धः, ख्रीष्टः त्रय एव एतां नीतिमाश्रित्य शिक्षामदुः—त्वं तव शत्रूणामप्युपकारं कुरु, ये त्वयि जुगुप्सन्ते तेष्वपि प्रीतिमन्तो भव इति।

तत्त्वानि तु पूर्वस्मादेव वर्तन्ते। तानि वयं न सृजामः। केवलमाविष्कुर्मः। धर्मः प्रत्याक्षानुभव एव। भिन्नानि मतानि केवलम् उपायभेदा एव ते धर्मपदवाच्या न। जगति यावन्तो धर्माः ते सर्वे भिन्नानां जनसमूहानां प्रयोजनमनुसृत्य 'धर्म'स्यैव भिन्नाः प्रयोगाः। मतवादाः केवलं विरोधमुत्पादयन्ति। पश्य कुत्र ईश्वरस्य नाम्ना जनानां

शान्तिर्भविष्यति—तत्तु न भवत्येव, अपि तु जगति यावान् रक्तपातोऽभवत्, तस्यार्धभाग ईश्वरस्य नाम्नैवाभवत्। मूलं प्रति गच्छ। स्वयमीश्वरमेव पृच्छ—तस्य किं स्वरूपमिति। यदि स किमपि उत्तरं न ददाति तर्हि ज्ञातव्यं यत्स नास्तीति। किन्तु जगति सर्वेऽपि धर्मा वदन्ति य स उत्तरयतीति।

तव किमपि वक्तव्यमवश्यं स्यात्, अन्यथा अपरेणोक्तस्य धारणां कर्तुं त्वं समर्थो न भविष्यसि। प्राचीनकुप्रथाः आश्रित्य न तिष्ठ, सदैव नवीनसत्यानां कृते प्रस्तुतो भव। ते मूर्खा ये प्राक्तनैः खनितस्य कूपस्य लवणमिश्रं जलमेव पास्यन्ति, किन्तु अन्येन खनितस्य कुपस्य शुद्धं जलं न पास्यन्ति। यावन्न वयमीश्वरं प्रत्यक्षीकुर्मः तावन्न तस्य विषये किमपि ज्ञातुं शक्ष्यामः। प्रत्येकमपि जनः स्वभावत एव पूर्णस्वरूपः। महापुरुषास्तेषामिदं पूर्णस्वरूपं प्राकाशयन्, अस्मासु स भावः अव्यक्तोऽस्ति। कथं वयं ज्ञास्यामो यत्, मोजेसेन ईश्वरो दृष्ट इति, यदि वयमपि तं द्रष्टुं न शक्नुमः। ईश्वरश्च कदाचित्मोजेसस्य सकाशमागत्य दर्शनं दत्तवांश्चेदवश्यं मत्सकाशमप्यागमिष्यति। अहं साक्षात्तस्य सकाशं गमिष्यामि, यथा स मया सह वार्तालापमपि कुर्यात्। विश्वासमेव प्रतिष्ठारूपेण स्वीकर्तुं न शक्नोमि तत्तु नास्तिकत्वं प्रबला ईश्वरनिन्दा च। ईश्वरो यदि वर्षाणां सहस्रद्वयात्पूर्वमागत्य अरबदेशीयमरुभूमौ केनचित्सह वार्तालापं कुर्यात्तर्हि अद्य मया सहापि वार्तालापं कर्तुं शक्नोति। नोचेत्कथं ज्ञास्यामि यत्स न मृत इति। येन केनचन मार्गेण भवतु ईश्वरस्य समीपमागच्छ। किन्तु आगमनसमये कमपि बलेन मार्गे पातयित्वा नागच्छ।

ज्ञानिनः अज्ञेभ्यः करुणां दर्शयिष्यन्ति। यो ज्ञानी स एकस्यै पिपीलिकायै अपि शरीरं त्यक्ष्यति यतो हि स जानाति यत्, शरीरं किमपि नेति।

## सोमवारः, अगस्तमासस्य पञ्चमं दिनम्

प्रश्नः अयम् सर्वोन्नतावस्थां लब्धुं सर्वाणि अधस्स्थानि सोपानानि अतिक्रम्य गन्तव्यमुत उद्लङ्घ्य साक्षात्तां दशां गन्तुं शक्यते? आधुनिका अमेरिकीया बाला यं विषयं पञ्चविंशत्या वर्षैः ज्ञातुं शक्नुवन्ति तदेवाधिगन्तुं तेषां पूर्वपुरुषैः शतं वर्षाणि व्ययीकृतानि। आधुनिका हिन्दवः सम्प्रति विंशत्या वर्षैः तत्स्थानमारोहन्ति यत्स्थानं प्राप्तुं तेषां पूर्वपुरुषैः वर्षाणामष्टौ सहस्राणि व्ययीकृतानि। शरीरदृष्ट्या दृष्टं चेत्ज्ञायते, गर्भे भ्रूणः प्राथमिकजीवाणुदशात आरभ्य विविधा अवस्था अतिक्रम्य अन्ते मनुष्यरूपं धरति। इयमेवाधुनिकविज्ञानस्य शिक्षा। वेदान्त इतोऽपि अग्रे गत्वा वदति, अस्माभिः केवलं मनुष्यजातेः अतीतं जीवनं यापितं चेदेव न पर्याप्तम्। अस्माभिस्तस्या भविष्यं जीवनमपि यापनीयम्। यः पूर्वतनं करोति स विद्वान्जनः, यस्तु द्वितीयमपि कर्तुं शक्नोति स जीवन्मुक्तः।

कालः समयो वा अस्माकं चिन्तनस्य परिमापकः। चिन्तायाश्च गतिः अचिन्त्यतया शीघ्रा। कियच्छीघ्रं वयं भाविजीवनमपि यापयितुं शक्नुमः तस्य सीमा निर्देष्टुं न शक्यते। अतो मनुष्यजातेः समग्रं भविष्यजीवनम् अनुभवितुं कति दिनानि अपेक्ष्यन्ते इति निश्चित्य वक्तुं न शक्यते। एकेन

क्षणेनापि भवेत्, कस्मैचित्पञ्चाशज्जन्मानि आवश्यकानि भवेयुः। इदं वासनाया इच्छाया वा प्राबल्यमनुसृत्य भवति। अतः शिष्यस्य प्रयोजनानुसारमुपदेशा अपि भिन्नाः स्युः। ज्वलन्नग्निः सर्वस्मै प्रभवति, तत्र जलं हिमान्यपि निःशेषं दह्यन्ते। बहूनि गोलकानि भुशुण्ड्या निक्षिप्तानि चेदेकं गोलकमवश्यं लग्नं भविष्यति। जनेभ्य एकदैव बहूनि सत्यान्युपदिश, यस्य यदावश्यकं तत्स स्वीकरिष्यति। अतीतानां बहूनां जन्मनां कारणतः संस्कारो निर्मितः, शिष्यस्य रुचिमनुसृत्य तस्मै उपदेशं देहि। ज्ञानं, कर्म, योगो, भक्तिः—एषु किञ्चिदेकमाधारशिलां कृत्वा अपरानपि भावान्शिक्षय। ज्ञानेन सह भक्तेः सामञ्जस्यं कार्यं, योगासक्तया प्रकृत्या युक्तिविचारेण सामञ्जस्यं कर्तव्यं, कर्मतत्त्वस्य क्रियान्वयनं च सर्वस्य मार्गस्य अङ्गस्य रूपं स्यात्। यो यत्र भवतु नाम, तं तत एव बलेन अग्रे प्रेरय। धर्मशिक्षा सर्जनात्मिका स्यान्न ध्वंसात्मिका।

मनुष्यस्य सर्वा प्रवृत्तिः तस्य अतीतस्य कर्मसमूहस्य परिचायिका। एषा सा रेखा उत व्यासार्धरेखा यामाश्रित्य केनचिच्चलनीयम्। कामपि व्यासार्धरेखामाश्रित्य केन्द्रं प्राप्तुं शक्यम्। किन्तु कस्यापि स्वाभाविकरुचिं परिवर्तयितुं न चेष्टस्व, तेन गुरुः शिष्यश्चोभावपि पश्चादपसृतौ भवतः। यदा त्वं ज्ञानशिक्षां ददासि तदा त्वया ज्ञानिना भाव्यं तथा शिष्यो यस्यामवस्थायां वर्तते त्वया मनसा तत्र गन्तव्यम्। अन्येषां योगानां विषयेऽपि एवमेव। सर्वा वृत्तयस्तथा विकसनीया यथा तां विना अस्माकमपरा वृत्तिरेव नास्ति—इदमेव सामञ्जस्यपूर्णाभ्युन्नतिसाधनस्य

यथार्थं रहस्यम्। अर्थाद्गम्भीरतया सह औदार्यमप्यर्जय, गाम्भीर्यं हित्वा औदार्यं न सङ्गृहाण। वयमनन्ताः। अस्मासु कस्यापि अन्तं कर्तुं न शक्यते। अतो वयं निष्ठावत्तममहम्मदीया इव गम्भीराः, घोरतमनास्तिका इव उदारभावसम्पन्ना भवेम।

एतत्कार्यरूपं दातुमुपायो मनसो विषयविशेषे प्रयोगो न, अपितु मनस एव विकासः तस्य संयमनञ्च। तेन त्वं यथेच्छं मनसो ऐकाग्र्यं कर्तुं शक्ष्यसि। एवं त्वया गाम्भीर्यमौदार्यमुभयमपि लप्स्यते। ज्ञानं तथा उपलभस्व यतो ज्ञानमात्रमस्ति, नान्यत्। ततो भक्तियोगेन कर्मयोगेन राजयोगेन च इत्थं साधनं कुरु। तरङ्गं परित्यज्य समुद्राभिमुखं गच्छ। तरङ्गं स्वयमेवोत्पादयितुं शक्ष्यसि। तव मनोरूपं ह्रदं संयमय, अन्यथा अपरस्य मनोरूपस्य ह्रदस्य तत्त्वं कदापि ज्ञातुं न शक्ष्यसि।

स एव वास्तविक आचार्यो यो हि शिष्यस्यासक्तिमनुसृत्य स्वीयां समग्रां शक्तिं नियोजयितुं शक्नोति। वास्तविकसहानुभूतिं विना न वयं वास्तविकशिक्षां दातुं समर्था भविष्यामः। मनुष्यो दायित्ववान्प्राणी इति धारणां परित्यज। यः पूर्णः केवलं तस्यैव दायित्वज्ञानं भवति। अज्ञास्तु मोहसुरासेवनेन मत्ताः, तेषां सहजावस्था नास्ति। यूयं ज्ञानमलभध्वं—युष्माभिरनन्तधैर्यशालिभिर्भाव्यम्। तेषु स्नेहं विना अपरं भावं मनसि न स्थापयत। ते येन रोगेण पीडिताः जगदिदं भ्रान्तदृष्ट्या पश्यन्ति, आदौ तं रोगं जानीहि। ततस्ते यथा तस्माद्रोगान्मुक्ता भूत्वा यथायथं द्रष्टुं शक्नुयुः तदर्थं यतस्व। सर्वदा स्मर, मुक्तस्य स्वतन्त्रस्य पुरुषस्यैव स्वतन्त्रेच्छा वर्तते। अन्ये सर्वेऽपि बद्धाः। अतस्ते यत् कुर्वन्ति तदर्थं ते

उत्तरदायिनी न भवन्ति। इच्छा यदेच्छारूपेण प्रकाशिता सा तदा बद्धा। जलं यदा हिमाचलचूडासु विगलितं भवति तदा तत्स्वतन्त्रं, किन्तु यदा नदीरूपं धरति तदा तटाभ्यामाबद्धा भवति। तथापि तस्य प्राथमिकवेग एव तत्समुद्रपर्यन्तं नयति। तत्र गत्वा च जलं पुनः पूर्वतनस्वातन्त्र्यं प्राप्नोति। प्रथमं मनुष्यस्य पतनमिव, द्वितीञ्च तस्य पुनरुत्थानमिव। कश्चन परमाणुरपि स्थिरतया स्थातुं न शक्नोति—यावन्न स मुक्तावस्थां लभते।

काश्चन कल्पनाः अपरासां कल्पनानां बन्धनं भञ्जयितुं साहाय्यं कुर्वन्ति। समग्रं विश्वमेव कल्पना, किन्तु एकजातीयकः कल्पनासमूहः अपरजातीयकं कल्पनासमूहं नाशयति। याः कल्पनाः वदन्ति जगति पापमस्ति, दुःखं मरणं चास्तीति ताः कल्पनाः भयानकाः। किन्तु अपराः कल्पनाः वदन्ति—अहं पवित्रोऽस्मि, ईश्वरोऽस्ति, जगति दुःखं नास्ति—इति, ताः कल्पनाः शुभाः। इमाः अपराः अशुभाः कल्पनाः नाशयन्ति। सगुण ईश्वर एव अस्माकं सर्वोन्नतकल्पना, सैवास्माकं बन्धनशृङ्खलस्य वर्तुलानि नाशयितुं शक्नोति।

ॐतत्सत्—अस्यार्थः, तन्निर्गुणं ब्रह्मैव मायातीतं, किन्तु सगुण ईश्वरोऽपि नित्यः। यावत्पर्यन्तं नायग्राजलप्रपातो वर्तते तावत्पर्यन्तं तत्र प्रतिबिम्बितमिन्द्रधनुरपि वर्तते। किन्तु अत्र प्रपातस्य जलराशिः अविरतं प्रवहति। जलप्रपातः विश्वप्रपञ्चस्वरूपः, इन्द्रधनुः ईश्वरस्वरूपम् —द्वयमपि नित्यं सनातनम्। यावद्विश्वमस्ति तावदीश्वरोऽप्यस्त्येव। ईश्वरो जगत्सृष्टवान्, जगच्च ईश्वरं सृष्टवत्—उभयं नित्यम्। माया न सती, न

चासती। नायग्राजलप्रपात इन्द्रधनुश्चोभयमेव अनन्त-कालात्परिवर्तमानं वर्तते—ते उभे मायोपहिते ब्रह्मणी। जराथ्रुष्टशिष्याः क्रैस्ताश्च मायां द्विधा विभज्य शुभमर्धम् ईश्वर इति अशुभमर्धं शैतान इति च वदन्ति। वेदान्तः मायां समष्टिरूपेण स्वीकरोति, तस्याः पृष्ठतश्च ब्रह्मणः एकस्य अखण्डवस्तुनः सत्तामपि स्वीकुर्वन्ति।

* * *

महम्मदोऽपश्यद्यत्, क्रैस्तधर्मः सेमिटिक-भावाद्दूरं गच्छन्नस्तीति, तस्मिन्सेमिटिक-भावे स्थित्वा ख्रीष्टीयधर्मः कथं भवेदिति—तस्येश्वरविश्वासः स्यादिति च तस्योपदेशस्य विषयः। अहं मम पिता च एक एव—इत्येवमार्योपदेशं स न सहते स्म, अस्मादुपदेशात्स बिभेति स्म। वस्तुतो मनुष्यात् नित्यभेदवान् ईश्वरः इति जिहोवासम्बन्धीयाद् द्वैतभावात्त्रित्ववादः उन्नतः। या भावपरम्परा क्रमशः ईश्वरमनुष्ययो-रेकत्वमुपनयति अवतारवादस्तस्याः प्रथमं सोपानम्। जनाः प्रथमतो जानन्ति ईश्वरः कस्यचिदेकस्य मनुष्यस्य शरीरमाश्रित्यागत इति। अन्ते च पश्यन्ति यत्, स एव सर्वेषु मनुष्येषु वर्तत इति। अद्वैतवादः सर्वोन्नतावस्था, एकेश्वरवादस्तदपेक्षया अवरा। विचारयुक्त्याद्यपेक्षयापि कल्पना शीघ्रमनायासं च त्वां सर्वोन्नतदशां नेष्यति।

केचिदेव ईश्वरलाभाय यतन्तां, समग्रविश्वस्य कृते च धर्मनामकपदार्थं रक्षन्तु च। अहं जनकराजेव निर्लिप्त इति नटनं मास्तु। त्वं जनकोऽसीति सत्यं किन्तु मोहस्याज्ञानस्य च जनकः।[१३] अकपटो भूत्वा वद, आदर्शः क इति बुध्यते, किन्तु सम्प्रति तदनुसारं गन्तुं न पारयन्नस्मि। वास्तविकं

त्यागमकृत्वा त्यागस्य नटनं मा कार्षीः। यदि वास्तविकं त्यागमेव करोषि तर्हि तं त्यागं दृढमाश्रय। युद्धे शतजनाः पतन्तु नाम, त्वं ध्वजं गृहीत्वा अग्रे गच्छ। यः पतति पततु नाम, ईश्वरस्तु सत्यः। युद्धे यः पतिष्यति सोऽपरस्य हस्ते ध्वजं दत्त्वा गच्छेत्—यथा तेन स ध्वजः अग्रे नीयेत। ध्वजं भूमिपतितं मा कार्षीः।

* * *

बैबेल्-ग्रन्थे वर्तते, आदौ भगवतो राज्यमन्वेषय, ततः सर्वं तुभ्यं दास्यते। किन्तु अहं वदामि, यदा स्नातावलिप्तः शुद्धोऽभूवं तदा पुनः मयि अशौचारोपणं कुतः? अतो वदामि, आदावेव स्वर्गराज्यमन्वेषय, अन्यत्सर्वं गच्छतु। त्वयि नवीनं किमप्यागच्छतु इति न कामयस्व, अपितु सर्वं परित्यज्यैव सौख्यमनुभव। त्यागं कुरु, जानीहि च, त्वं न पश्यसि चेदपि साफल्यं त्वयाधिगंस्यत एव। ख्रीष्टः कारायां द्वादशशिष्यान् रक्षित्वा गतः, तावन्त एव जनाः विशालं रोमकसाम्राज्यमुच्छेदयामासुः।

ईश्वरस्य वेद्यां पृथिव्यां यत्पवित्रतममुत्कृष्टतमं च तद् वलिरूपेणार्पय। यः कदापि त्यागस्य चेष्टां न करोति तदपेक्षया यः त्यागस्य चेष्टां करोति स उत्तमः। एकं त्यागिनं दृष्ट्वैव हृदयं पवित्रं भवति। ईश्वरं लभस्व—केवलं स एवावश्यकः—इत्युक्त्वा दृढपदेनावतिष्ठस्व। जगतो या गतिर्भवति भवतु नाम। ईश्वरः संसारश्च—अनयोर्मध्ये सन्धिर्न भविष्यति। संसारं त्यज, तदैव देहबन्धनान्मुक्तिं लप्स्यसे। एवञ्च देहासक्तेरपगमात्परं देहत्यागेनैव त्वं मुक्तो भविष्यसि। जीवन्त एव वयं

यत्नेन मुक्तिं लभेमहि। तदैव देहत्यागे सति तस्य मुक्तस्य पुरुषस्य पुनर्जन्म न भविष्यति।

सत्यं सत्येनैव विचारणीयं, नान्येन। लोकहिताचरणमेव सत्यस्य निकषोपलो न। सूर्यं द्रष्टुमुल्मुकं नापेक्षितम्। सत्यं यदि समग्रं विश्वं ध्वंसयेत्तादानीमपि तत्सत्यमेव—तदेव सत्यमाश्रय।

धर्मस्य बाह्यानुष्ठानानि सरलानि, तान्येव सामान्यानाकर्षयन्ति। किन्तु वस्तुतः बाह्यानुष्ठाने किमपि नास्ति।

लूता यथा आत्मन एव जालं विस्तारयति तथा आत्मन्येव विलीनं कारयति, तथैव ईश्वरः विश्वप्रपञ्चं वितनोति स्वस्मिन्विलीनं च करोति।[१४]

## मङ्गलवारः, अगस्तमासस्य षष्ठं दिनम्

अहं नास्मि चेत्त्वम् अपि भवितुं नार्हसि—अस्मात्केचन दार्शनिका राद्धान्तितवन्तो यत्, मयि एव विश्वस्य प्रतिष्ठा मद्बाह्ये कुत्रापि विश्वं स्वतन्त्रतया नास्ति इति। त्वं मयि एव वर्तसे। अपरे च विपरीततर्केण एतत्प्रतिपादितवन्तः, त्वां विना मम अस्तित्वं प्रमाणयितुं न शक्यत इति। तेषां पक्षेऽपि युक्तिबलं समानम्। मतद्वयमपि अंशतः सत्यम्—किञ्चित्सत्यं किञ्चिदसत्यम्। देहो यथा जडप्रकृतेरुपादानेन निर्मितं चिन्तापि तथा। जडं मनश्च उभयमपि तृतीये पदार्थे प्रतिष्ठितं—किञ्चन अखण्डं वस्तु आत्मानं द्विधा कृतवत्, इदमेवाखण्डं वस्तु आत्मेति प्रसिध्यति।

तन्मूलं सद्वस्तु यथा क इति, तदेव जडं मन इत्युभयरूपेणात्मानं प्रकाशितवत्। अस्मिन्परिदृश्यमाने जगति अस्य गतिः काश्चन निर्दिष्टाः प्रणालीरास्थाय तिष्ठति, ता एव वयं नियमान्वदामः। अखण्डसद्वस्तुरूपेण तन्मुक्तं किन्तु बहुत्वेन तन्नियमाधीनम्। तथापि अस्मिन्बन्धने सत्यपि वयमन्तः मुक्तिविषये काञ्चिद्धारणां सर्वदा वहामः। इयमेव निवृत्तिरित्युच्यते सर्वासक्तित्यागः। वासनावशेन याः जडत्वविधायिन्यः शक्तयः अस्मान्सांसारिककर्मणि विशेषतया प्रवर्तयन्ति तासामेव नाम प्रवृत्तिरिति।

तदेव कार्यं नीतिसङ्गतं सत्कर्म वा यदस्मान्जडबन्धनान्मोचयति। तद्विपरीतं सर्वमसत्कर्म। इदं जगत्प्रपञ्चमनन्तमिति प्रतिभाति, यतोहि सर्वमप्यत्र चक्रवद् भ्रमति, यत आगतं तत्र प्रतिगच्छति। वृत्तस्य रेखा अग्रे गत्वा आत्मन्येव संसृष्टा भवति। अतः अस्मिन्संसारे कुत्रापि विश्रान्तिरुत शान्तिर्नास्ति। अस्मात्संसारवृत्तादस्माभिर्बहिर्गन्तव्यम्। मुक्तिरेवास्माकं लक्ष्यम्—अनन्या गतिः।



अशुभस्य केवलमाकृतिः परिवर्तते। स्वभावगतं परिवर्तनं तस्य न भवति। प्राचीनकाले यस्य शक्तिरासीत्स एव शास्ति स्म, सम्प्रति धूर्तता शक्तेः स्थानं स्वीकृत्यास्ते। दुःखकष्टादिकम् आमेरिकादेशे यावत्प्रबलं न तावद्भारते। यतो हि अत्र (आमेरिकादेशे) दरिद्रा आत्मनो दुरवस्थायाः अपरस्य अवस्थायाश्च महान्तं भेदं परिलक्षयन्ति।

शुभम् अशुभम् एकमपरेण ओतप्रोतं सङ्गतमस्ति। एकं स्वीकार्यं चेदपरमपि स्वीकार्यम्। अस्य विश्वस्य शक्तिसमष्टिः कश्चन ह्रद इव। तत्र यथा तरङ्गाणामुत्थानमस्ति तथैव पतनमप्यस्ति। समष्टिस्त्वेका—अतः एकं सुखिनं करोषि चेदपरोऽपि सुखी भवति। बाह्यं सुखं जडसुखमेव, तस्य परिमाणं निर्दिष्टम्। अतः सुखस्य कणं प्राप्तव्यश्चेत्त-दपरस्मात्बलान्न गृहीतश्चेन्न प्राप्यते। केवलं यत्सुखं जडजगतः अतीतं सुखं तत्कस्यापि हानिं न साधयित्वा प्राप्तुं शक्यते। जडसुखं जडदुःखस्यैव रूपान्तरम्।

ये तरङ्गस्योत्थानांशे जाताः तत्र वा स्थिताः ते पतनांशं तत्र स्थिताश्च द्रष्टुं न शक्नुवन्ति। कदापि न मन्यस्व यत्, त्वं विश्वस्य कल्याणं सुखं वा कर्तुं शक्नुया इति। पेषणयन्त्रस्थवलीवर्दः पुरतः स्थितं भोज्यं प्राप्तुं यतते किन्तु कदापि तन्न प्राप्नोति, केवलं यन्त्रं भ्रामयति। वयमपि सुखरूपालोलिकाम् अनुसरामः — सदैव सास्माकं पुरस्तात्दूरं गच्छति वयञ्च वस्तुतः प्रकृति पेषणयन्त्रं भ्रामयामः। एवं यन्त्रं भ्रामयतामस्माकं मरणमभवत्, पुनर्यन्त्रभ्रामणमारप्स्यते। यदि वयम् अशुभं दूरीकर्तुमशक्ष्याम, तर्हि वयं कदापि उन्नततरस्य कस्यापि आभासमात्रमपि न प्राप्स्यामः, वयं सन्तुष्टा अभविष्याम, कदापि मोक्षं प्राप्तुं ना यतिष्यामहि। यदा मनुष्यो ज्ञातुं शक्नोति यत्, जडजगति सुखान्वेषणस्य प्रयत्नः पूर्णतया निरर्थक इति तदा धर्मस्यारम्भः। मनुष्यस्य यावज्ज्ञानमस्ति तत्सर्वं धर्मस्याङ्गमेव।

मनुष्यशरीरे शुभाशुभयोः तथा साम्यावस्था वर्तते यत्, तेनैव मनुष्यस्य उभयस्मान्मोक्षं लब्धुम् इच्छायाः सम्भावनाऽप्यस्ति।

यो मुक्तः स कदापि बद्धो नासीत्। मुक्तः कथं बद्धोऽभवत् इति प्रश्न एवासङ्गतः। यत्र किमपि बन्धनं नास्ति तत्र कार्यकारणभावोऽपि नास्ति। स्वप्नेऽहमेकः शृगालोऽभवम्, एकः शुनकश्च मम पृष्ठतोऽधावत्— इदानीमहं कथं पृच्छेयं यत्, कथं शुनको मम पृष्ठतोऽधावदिति? शृगालोऽपि स्वप्ने आसीत्, शुनकोऽपि स्वत एव तत्रागतः, किन्तूभयमपि स्वप्न एव। बाह्यसत्ता तयोर्नास्ति। वयं यथा अस्माद्बन्धनाद्बहिर्गन्तुं शक्नुयाम तदर्थं विज्ञानं धर्मश्च अस्माकं साहाय्याय यतेते। किन्तु धर्मो विज्ञानात्प्राचीनः। अस्माकं चेयं कुसंस्कारो वर्तते यत्, विज्ञानाद्धर्मः पवित्रतर इति। कथञ्चिद्धर्मः पवित्रोऽपि, यतो हि धर्मो नीतिं चरित्रं वा अङ्गत्वेन परिगणयति, विज्ञानं तन्न करोति।

पवित्रात्मानो धन्या यतो हि ते ईश्वरं द्रक्ष्यन्ति। सर्वाणि शास्त्राणि सर्वेऽवातारश्च यदि लुप्ता भवेयुस्तथापि एतदेकं वाक्यं समग्रां मानवजातिं रक्षिष्यति। आन्तरिकीयं पवित्रतैव ईश्वरं दर्शयिष्यति। समग्रविश्वसङ्गीते इयं पवित्रता ध्वन्यते। पवित्रतायां किमपि बन्धनं नास्ति। पवित्रताया अज्ञानान्धकारं दूरीकुरु, तदैव अस्माकं यथार्थ- स्वरूपस्योन्मोचनं भविष्यति। वयं ज्ञास्यामः, वयं कदापि बद्धा नास्म। नानात्वदर्शनमेव जगति निकृष्टतमं पापं—सर्वत्रैव आत्मानं पश्य, सर्वस्मिंश्च स्नेहशीलो भव। भेदभावं दूरीकुरु।

  

पिशाचप्रकृतिका जना क्षतमिव दग्धव्रणमिव वा अस्माकं शरीरस्यैवाङ्गम्। यत्नेन ते शमनीयाः। दुष्टानामपि साहाय्यं कार्यं, यावन्न स पूर्णतया स्वस्थः सुखी च भवेत्।

यावद्वयमापेक्षिकायां द्वैतभूमौ स्मः, तावद्वयं विश्वसितुं शक्नुमो यत आपेक्षिकजगतः वस्तुभिरस्माकं हानिः स्यादिति तथैव च साहाय्यमपि प्राप्तुं शक्नुमः। अस्य साहाय्यभावस्य सूक्ष्मतमोऽश एव ईश्वरः। ईश्वर इत्युक्ते अस्माकमियं धारणा आगच्छति, यावत्प्रकारकं साहाय्यं वयं प्राप्तुं शक्नुमः तस्य सर्वस्य समष्टिः स इति।

यदस्मान् प्रति करुणां प्रदर्शयति, यत्कल्याणकरं, यदस्माकं सहायकम् ईश्वरः सर्वस्य समष्टिरूपः। ईश्वरस्य विषये अस्माकमियमेव धारणा स्यात्। यदा वयमात्मानं ब्रह्मस्वरूपं मन्महे तदा—अहं ब्रह्म, विषमपि मम हानिं न साधयितुं शक्नुयाद् इति वाक्यमेवासम्भवम्। यावदस्माकं शरीरमस्ति वयं च तत्पशयामः, तावदीश्वरोपलब्धिर्न जाता। यदा नद्येव लुप्ता तदा तदन्तर्वर्ती लघुः आवर्तः किं स्थातुमर्हेत्? साहाय्याय रुदिहि, तर्हि साहाय्यं प्राप्स्यसि, अन्ते च साहाय्याय रोदनमपि गमिष्यति, साहाय्यदाताऽपि गमिष्यति; क्रीडा समाप्ता केवल आत्माऽवशिष्यते।

एवं जातश्चेत्प्रत्यागत्य यावदिष्टं क्रीड। तदा इदं शरीरं किमपि अन्याय्यं कर्तुं न शक्नोति। यतो हि यावदस्मासु विद्यमानाः कुप्रवृत्तयः दग्धा न भवन्ति तावन्न वयं मुक्ता भवामः। यदा साऽवस्था प्राप्ता तदा सर्वं मलीमसं दग्धमेका निर्धूमशिखा चावशिष्यते, तापो नास्ति, प्रकाश एवास्ति।[१५]

तदा प्रारब्धमस्माकं शरीरं नयति, किन्तु शरीरेण तदा शुभमशुभं किमपि कार्यं न भवति। यतो हि मुक्तिलाभात्पूर्वं सर्वमशुभं गतम्। चोरः शूले स्थित्वा मरणस्य समये तस्य कर्मणः फलमभुङ्क्त। पूर्वजन्मनि स योगी आसीत्, योगभ्रष्टः स जातः। अस्मिन्नपि जन्मनि पतनं जातमतः स चोरोऽभवत्। किन्तु पूर्वजन्मनि यत्शुभं कर्म कृतं

तत्फलितम्। यदा तस्य मुक्तेः कालः समागतस्तदा ख्रीष्टेन सह तस्य साक्षात्कारोऽभवत्, तदा तस्यैकेन वाक्येन तस्य मुक्तिरप्यभवत्।

बुद्धस्तस्य प्रबलतमं शत्रुमपि मोचितवान्। यतो हि स जनः तस्मै तथा द्वेष्टि स्म यद् द्वेषवशेन स सर्वदा बुद्धं चिन्तयति स्म। अविरतबुद्धचिन्तनेन स चित्तशुद्धिमलभत, तथा च मोक्षलाभयोग्यतां प्राप। अतः सर्वदा ईश्वरं चिन्तय। तेन चिन्तनेनैव त्वं मुक्तो भविष्यसि।

## पादटीका

१. Tree of Knowledge — Old Testament, Genesis

२. गीता ६.२२।

३. दुर्लभं त्रयमेवैतद्दैवानुग्रहहेतुकम्।
मनुष्यत्वं मुमुक्षत्वं महापुरुषसंश्रयः।।

४. Robert Ingersoll—अमेरिकायाः प्रख्यातः अज्ञेयवादी।

५. मुण्डकोपनिषदि, ३.१.१-३

६. तुलनीयम्—

पहिलहि राग नयनभङ्ग भेल।
अनुदिन बाढल अवधि न गेल।।
. . . . . . . . . . . . . .।
दुँहु मन मनोभव पेशल जानि।।

(श्रीचैतन्यचरितामृते मध्यलीलायाम्)

७. मदालसा, मार्कण्डेयपुराणे २५-२६ अध्याययोः।

८. कथा त्वित्थम्—कश्चन दरिद्रः देवस्य सकाशाद् वरं प्राप्तवान्। देवः सन्तुष्टो भूत्वा तस्मै उवाच—त्वमिमम् अक्षं गृहाण। यां कामपि कामनां कृत्वा त्रिः इममक्षं क्षिप। कामनात्रयं पूर्यते तेनेति। स महानन्देन पत्न्या सह परामृष्टवान् किं वरं याचनीयमिति। पत्नी उक्तवती प्रभूतं धनं याचस्वेति। किन्तु पतिरुक्तवान्, आवयोरुभयोरपि नासिके खर्वे स्तः तस्मात् सर्वे आवां दृष्ट्वा परिहासं कुर्वन्ति। अतः प्रथमतः अक्षान् क्षिप्त्वा नासिकां प्रार्थयामः। धनेन शरीरस्य कुरूपं सम्यङ् न भवति खलु इति। पत्न्या मतं तु प्रथमं धनं भवत्विति। अत उभयोर्मध्ये द्वन्द्वमभवत्। अन्ते च पतिः क्रुद्धः सन् अक्षान् क्षिप्त्वा अवोचत्, आवयोः केवलं सुन्दरी नासिका भवतु, केवला नासिका, नान्यत्किमपि। तदानीमेव तयोः सर्वेष्वङ्गेषु सुन्दर्यो नासिका अभूवन्। तदा द्वितीयवारम् अक्षान् क्षिप्त्वा तेनोक्तं, नासिका अपगच्छन्त्विति। तदा सर्वा अपि नासिकाः अपगताः। ते तासिकाहीने अभूताम्। पुनः तृतीयवरं याचमानाभ्यां ताभ्यां चिन्तितं, यदि सम्प्रति वरेण उत्तमां नासिकां प्राप्नुवस्तर्हि सर्वे उत्तमनासिकाप्राप्त्युपायं प्रक्ष्यन्ति। तदा सर्वमेतद्वृत्तजातं वक्तव्यं भविष्यति। पुनश्च सर्वे परिहसिष्यन्ति। अतः यथापूर्वं खर्वा नासिका एव भवतु। एवं वरत्रयेणापि दम्पती अभ्युन्नतिं कर्तुं नाशक्नुताम्। कथया एतद्बोध्यते यत्, वासना न कार्या, यत् प्रार्थयिष्यति तदेव प्राप्स्यति। किन्तु तेन दारुणबन्धनेन बद्धो भविष्यसि इति।

९. जहाँ राम तहाँ काम नहीँ, जहाँ काम तहाँ नहीं राम।
दुँहु एकसाथ मिलत नहीँ, रवि रजनी एक ठाम।।—तुलसीदासः

१०. साधनचतुष्टयम्।

११. अत्युच्चाध्यात्मिकस्तरात् स्वामिन इत्थं वदन्ति। शरीरमहङ्कारं चातिक्रम्यायं स्तरः। यस्तामवस्थां न प्राप्तवान् तेन साधनायै एव

कर्म करणीयम्। यः शरीराहङ्काराधीनो न स एव कर्तव्यहीनो भवति।

१२. ख्रीष्टपूर्वषष्ठशताब्द्यां चीनदेशे लाओत्सेमहोदयेन प्रवर्तितो धर्मसम्प्रदायः। एतेषां मतं वेदान्तिभिस्तुल्यम्। ताओ-पदार्थो वेदान्तस्य निर्गुणब्रह्म इव।

१३. जनकशब्दस्यार्थो पितेति। मिथिलाया राजापि जनकः। स जनेभ्यो राज्यं पालयति स्म। स्वयं सर्वं मनसा त्यक्तवानासीत्।

१४. मुण्डकोपषिदि १.१.७।

१५. 'ज्यातिरिव अधूमकः'—कठोपनिषदि २.१.१३। 'दग्धेन्धनमिवामलम्'—श्वेताश्वतरोपनिषदि ६.१९।

# ईशदूतो यीशुख्रीष्टः

## (ऊनविंशशतख्रीष्टाब्दे क्यालिफोर्नियान्तर्गते लस्-एञ्जेलेस् इति स्थाने प्रदत्तं भाषणम्)

उत्थित उदधौ तरङ्गः, सृष्टं च विलमेकम्। पुनः पूर्वापेक्षया बृह-त्तर इव तरङ्गः कश्चन उत्पतितः, पतितश्च। पुनरेक उत्थितः पतितश्च। एवमुत्थितः पतितश्च तरङ्गः। संसारवृत्तेष्वप्येवं पातोत्पातौ पश्यामः। किञ्च, उत्पात एव दृष्टिराकृष्यते, न तु पतने। परमस्ति संसारेऽस्मिन् उभयोरेवानिवार्यता। एषा हि प्रकृतिर्विश्वजगतः। किं चिन्ताजगति, पारिवारिकजगति, समाजे आहोस्विदाध्यात्मिकविषये, सर्वत्रैव यथाक्रमं पातोत्पातगतिः प्रवहति। कारणं घटनाप्रवाहेषु प्रधानविषया उदारादर्शा यथासमयं समाजे प्रबलतरङ्गाकारेणोत्थिताः सन्तः समेषां दृष्टिमाकृष्या-तीतभावान् दृढीकर्तुं, समीकर्तुं, संरक्षितुं, पूर्वापेक्षया प्रबलतरवेगेनो-त्थानबलं सञ्चेतुं च कञ्चित्कालं कुत्राप्यदृश्याः सन्तो निमग्ना भवन्ति।

विविधजातीतिहासः पर्यालोच्यते चेत्पातोत्पातानां ज्ञानमाप्यते। यस्य महात्मन ईशदूतस्य जीवनचरितमालोचयितुं सन्नद्धः स स्वजातीतिहासे एवंविधकाले आविर्भूतो यं (कालं) महापतनकालत्वेन निर्देष्टुं समर्था वयम्। तस्योपदेशानां कार्याणां विक्षिप्ततया लिपिबद्धत्वात्सामान्य-विवरणत्वेन स्वल्पमात्रं ज्ञायते। विक्षिप्तविवरणं सामान्यमित्युक्तम्। अत्र कारणं तद्विषयकमिदमवितथं तथ्यं यत्तस्य भाषणेषु कार्येषु च निखि-

लेषु लिपिबद्धेषु सत्सु तत्सर्वं जगदिदं नूनं पर्यव्याप्नोत्। किञ्च, तस्य वर्षत्रयव्यापी धर्मप्रचारकालः सङ्कुचित एकीकृतः कश्चन युगः। अतस्तत्सर्वमुद्घाटयितुमेवोनविंशतिशतवर्षाणि गतानि। को वा जानीयात्तदखिलकार्याभिव्यक्तौ कियान् कालोऽपेक्षितः? मादृशो भवादृशः क्षुद्रको मानवः स्वल्पशक्तेरेवाधारः। कतिचिन्मुहूर्तानि, कतिचिद्धोराः, कतिचिद्वर्षाण्येवास्माकं सर्वशक्तिविकाशाय पर्याप्तानि। ततो न स्याच्छक्तिशिष्टं किमपि। परं चिन्तयन्तु अस्मन्महाशक्तेराधारमिमं महापुरुषम्। सहस्रशताब्दीषु सहस्रयुगेषु च गतेष्वपि तस्योदितशक्तेर्नास्ति विरतिः। अधुनापि न सा पूर्णतामिता। युगाद्गते युगे सा नवीनतां दधती बलवती जायते।

यीशुख्रीष्टसत्त्वे यद्दृश्यते तद्भूतभावानां समुदायः। इत्थं प्रत्येकमनुष्याणां जीवनं भूतभावानां फलस्वरूपम्। कुलक्रमागतायाः परिगतायाश्च शिक्षायास्तथा पूर्वजन्मसंस्कारात् प्रत्येकजीवनेऽतीतभावाः सङ्क्रमन्ते। अतः प्रत्येकं जीवात्मन्येव समग्रायाः पृथिव्याः समग्रब्रह्माण्डस्य च सर्वं भूतवैभवं राजते। वर्तमाना वयमनन्तकृतकार्याणां फलं विना किम्? अनन्तवृत्तप्रवाहे प्लवमानाः, अनिवार्यरूपेण पुरोभागे स्थिता अस्थिरास्तरङ्गा एव वयम्। प्रभेदस्तावद् भवान् अहं च क्षोदिष्ठः। परं जागतिकवृत्तनिचये महासमुद्रे केचन प्रबलास्तरङ्गा वर्तेरन्नेव। भवति मयि च जातीयजीवनस्य भूतभावा अत्यल्पमात्रमेव परिस्फुटाः। परं सन्ति नैके शक्तिमन्तः पुरुषा येऽतीतभावानां साकार-विग्रहा भविष्यन्ति च विततहस्ताः। समग्रा मनुष्यजातिर्यस्मिन्नताध्वनि अग्र गच्छति

तदध्वनो निदेशकाः स्तम्भरूपाश्च ते। वस्तुतस्ते एतावन्तो बृहतो यदेतेषां छायाखिलां पृथ्वीं परिव्याप्नोतीव। ते ह्यनादयोऽनन्ता अविनश्वराश्च। ईश्वरतनयेनेश्वरदर्शनं विना नास्त्युपायान्तरमिति महा-पुरुषोक्तमत्यन्तं सत्यम्। ईश्वरतनयान्तरेवेश्वरो द्रष्टुं शक्यते, अन्य-थान्यत्र कुत्र? एतत्सत्यं यत्त्वयि, मयि, अस्मास्वपि दरिद्रेषु दीनहीने-ष्वस्ति प्रतिफलति च स भगवान्। यथा सर्वव्यापिनः सर्वत्र च स्पन्दन-शालिनोऽप्यालोकपरमाणवः प्रदीपालोकमृते नास्माभिः दृग्गोचरीभूयन्ते तथा जगतोऽखिलस्येश्वरो विभुरपि न तावद्दृश्यो यावत्स कस्मिंश्चि-ज्जगतो बृहति प्रदीपे देवमानवे ईश्वरस्य मूर्तिमति देहवति वावतारे नाविर्भवति।

सर्वे वयं विश्वसिमो यदीश्वरोऽस्ति; परं यावन्न पश्यामस्तं न ताव-दुपलब्धुं क्षमाः। किन्तु ज्ञानालोकवार्ताहरेषु महदाचर्येषु केनचिदीश्वर-विषयकं भवत्कल्पितं समुच्छ्रितादर्शं तोलयन्तु। पश्यन्तु च, भवत्कल्पित ईश्वरः सहसादर्शादस्मान्न्यूनीभूतः, अतियाति चावता-रचरितं भवत्कल्पनाम्। ईश्वरं साक्षात्कृत्यादर्शविग्रहैर्महापुरुषैरुपस्था-पितान्महज्जीवनदृष्टान्तान्न परमादर्शं कल्पयितुं शक्ता भवन्तः। सत्यञ्चैत्तत्, ईश्वरत्वेन महापुरुषाणां तेषामुपासनं किमन्याय्यम्? ननु किं तेषां वृन्दारकपदारविन्दभजनात्र देवत्वेनार्चनं पापम्? ईश्वरविषयककल्पनातः श्रेष्ठत्वे तदर्चायां को दोषः? न केवलमस्मिन् निर्दोषत्वमपि तु, ईश्वरोपासनाया अयमेव सम्भाव्यः सुशिक्षितो मार्गः। यावच्छक्यं प्रयतेरन् भवन्तः, भूयो भूयोऽभ्यासेन स्थूलात् क्रमशः सूक्ष्मतरविषये मनोनिवेशेन वा; यावन्मनुष्यजगति मनुष्यत्वं बिभ्रति

तावद्द्रवदुपलब्धं जगन्मनुष्यरूपं, धर्मो मनुष्यरूपः, ईश्वरोऽपि मनुष्यरूपः स्यात्। नूनमेवं स्यात्। ननु कोऽयमस्ति जनो यो हि साक्षादुपलब्धं वस्तु न गृह्णीयात्, न च जह्यात्तद्धि कल्पनामात्रसाध्याभावविशेषात्मकम् अस्पृश्यं स्थूलालम्बनं विना दुष्प्रापम्। अतो हि ईश्वरावताराः सर्वेषु युगेषु सर्वेषु वा देशेषु पूजिताः।

वयमधुना यहुदीनामवतारस्य ख्रीष्टदेवस्य जीवनचरितं किञ्चिद्। तरङ्गस्यैकस्योत्पतनादनन्तरं द्वितीयस्य चोत्थितेः प्रागुक्तपतनोन्मुखिनीवासीदिहुदीनामवस्था ख्रीष्टजन्मनः प्राक्। एषा संरक्षणावस्थेति वक्तुं शक्यते। दशायामस्यामाभिमुख्यं गच्छन्मनुष्यमनोऽचिराय श्रान्तमुपगतं—यावच्चलितं तद्रक्षणाय च यतते। किञ्च परिस्थितावस्यां मानवमनो जीवनस्य सार्वभौमं महासङ्कटजालं प्रत्यनाकृष्टमविशेषेऽधिकं निविष्टं भवति। अस्यामवस्थायां तरणी अनग्रसरा सती निश्चलेव तिष्ठति, स्वेहापेक्षयात्रादृष्टावेवाधिकाधिकं विश्वस्य सहनमवलोक्यने अत्रेदमवधेयं यन्नाहमवस्थामिमां दूषयामि। न मेऽस्त्यस्य समालोचनाधिकारः। नेदं पतनमभविष्यच्चेद् यीशौ न्याजारेथवासिन्युत्थानमूर्तिपरिग्रहोऽपि नाभविष्यत्। यद्यप्यासन् फरासि-सादिउसिजनाः कपटाः, अकृत्यकारिणः, छद्मतापसाः; यथा तथा वा भवतु। तथापि त एवेशदूतयीशोराविर्भावरूपकार्यबीजम्। या शक्तिरेकतः फरासि-सादिउसि-जनेषु समाप्तिमिता सापरतो न्याजारेथवासियीशुरूपेणाविर्बभूव।

क्वचिद् धर्मस्य बाह्यक्रियाकलापादीन्, प्रात्यहिकं कृत्यं चास्माभिरुपहास्यते। नेष्वेव धर्मजीवनशक्तिर्निहितास्ति। प्रायशः सवेगमग्रगमनसमये धर्मजीवनशक्तिर्हीयते। तत्त्वतो धर्मोन्मत्तो जनो हि शक्तिमत्तर

उदारश्चेताः। अतो धर्मोन्मत्तेष्वस्ति कश्चन महान् गुणः। तेषु च संगृहीता सञ्चिता काचन प्रबला शक्तिः। यथा व्यक्तिविषये तथा जातिविषयेऽपि बोध्यम्। जातावपि तादृशी शक्तिः संगृहीता सञ्चिता च राजते। चतसृषु दिशो बाह्यारिभिः परिवृताः, रोमकशासनेन तथा चिन्ताजगति ग्रीक्प्रवृत्तिभिः पारस्य-भारत-आलेकजान्द्रियागतभावैश्चैकत्रीकृतापि दैहिक-मानसिक-नैतिकशक्तिषु च सुदृढा यहुदीजातिः संरक्षणशीलशक्तित्वेन राराज्यमानासीत्। तद्वंश्या नाद्यापि तच्छक्तिभ्रष्टाः। सा जातिस्तच्छक्तिं जेरुजालेमदेशे यहुदीजातावेकीकर्तुमेकत्रीकर्तुं च प्रचोदिता। परं शक्ति-रखिलैकीकृता नाधिकक्षणमेकत्र स्थातुं शक्ता, प्रसृत्य नूनं सा व्ययीभवेत्। नास्ति तादृशी कापि शक्तिर्या चिराय निरायतेयत्तायम् आबद्धुं शक्यते। भविष्यति तच्छक्तेर्विततिर्ध्रुवेति चिराय नैकत्र सङ्कोचस्य सम्भवः।

यहुदीजातरेन्तः केन्द्रीभूता शक्तिः परवर्तिनि युगे ख्रीष्टधर्माभ्युदये आत्मप्रकाशं चक्रे। स्रोतसां सम्मेलनेनोत्पन्ना काचन स्रोतस्वती। एवं क्रमशः सम्मिलिता अल्पकायाः स्रोतस्वत्यः उत्पन्नश्च कश्चन जल-कल्लोलो यच्छिरोभागे समासीनो न्याजारोथवासी यीशुः। अतः प्रत्येक-मवतारस्तत्समावस्थायास्तज्ज्ञातेश्च पूर्वावस्थायाः फलरूपः, तथा स स्वयं भविष्यत्स्रष्टा। अतीतकारणनिचयानां फलभूतं कार्यं भाविकार्यकारणम्। अस्माकं प्रकृतमहापुरुषविषयेऽपि तथैव बोध्यम्। तस्य स्वजातौ यच्छ्रेष्ठं महत्तमञ्च, तज्ज्ञातिश्च प्रतियुगं यत्सिद्ध्यर्थं चिराय प्रयतमानास्ति तत्सर्वं तस्मिन्नेव मूर्तिमज्ज्ञातम्। तस्य स्वजातेः श्रेष्ठं महत्तमं चिराया-काङ्क्षितं तस्मिन्नेव मूर्तिमज्ज्ञातम्। किञ्च, स स्वयमेव भविष्यति महा-शक्तेराधारोऽभवत्। न केवलं स्वजातेः, अन्याभ्योऽपि तज्जीवनं महतीं शक्तिं संगृहीतवत्।

एतदप्यस्माभिः स्मर्तव्यं यत् प्राच्यदृष्ट्यैव न्याजारेथवासिमहापुरुषं पर्यालोचयिष्यामि। प्रायश एव विस्मर्यते भवद्भिर्यदासीत्स कश्चन प्राच्य-देशीयः। भवद्भिः सर्वैस्तं नीलतयनत्वेन पीतकेशत्वेन चित्रयितुं कृतेऽपि प्रयत्ने स आसीत् परिपूर्णतया प्राच्यः। बाइबेलग्रन्थे विहित उपमा-रूपकप्रयोगः, प्रपञ्चितं दृश्यस्थानं भावजातं तत्कवित्वं तदभिहितं च चिह्नं प्राच्यभावमेवाभिव्यनक्ति। निर्मलमाकाशम्, मरु-स्थल्यां सूर्योत्तापः, तृषितानां जनानां मृगाणां च, तथा कूपात् जल-पूरितकलसानादायागतानां नरनारीणां, मेषपालानां, कृषीवलानां, कृषिकार्यस्य, जलाधाराणां चक्राणां, पेषणीयन्त्राणां च वर्णनम् इत्येतत्सर्वमधुनापि एशियाप्रदेशे दृश्यते।

एशियाप्रदेशस्य वाणी चिराय धर्मवाणी। यूरोपप्रदेशवाणी तु राज-नीतिवाणी। स्वस्वकार्यस्थले स्वस्वमाहात्म्यं सर्व एव प्रादर्शयन्। यूरोपवाणी च पुनः प्राचीनग्रीक्जनवाण्या एव प्रतिध्वनिरूपा। स्वसमाज एव ग्रीक्वासिनां सर्वस्वम्। तद्दृष्ट्या तद्भिन्नाः समाजाः बर्वराः। ग्रीक्भिन्नानां च नास्ति जीवितुमधिकारः। ग्रीसवासिभिर्यत् क्रियते तद्युक्तमभ्रान्तश्च, तदन्यदयुक्तं भ्रान्तश्च। अतस्तद्भिन्नानां नास्ति जीविताधिकारः। ग्रीक्मनसः सहानुभूतिरेकान्ततो मनुष्यजा, अतएव निसर्गतः शिल्पमण्डितास्ते। ग्रीसवासिनां मनः सम्पूर्णतया इहलोक-व्यापृतम्। जगद्विलक्षणान् विषयान् स्वप्नदशायामपि कल्पयितुं न वाञ्छन्ति ते। किं बहुना, तत्काव्यसृष्टिरपि व्यावहारिकप्रपञ्चावलम्बिनी। तेषां देवा देव्यश्च न केवलं मनुष्याः, अपि तु सम्पूर्णरूपेण मनुष्यस्वभावसम्पन्नाः। यथा सामान्यजनाः सुखे दुःखे हृदयावेगे च

भवन्त्युद्वेजितास्तथा तेऽपि। ग्रीसवासिभ्यः सौन्दर्यमतितरां रोचते। परमवधेयं तद्बाह्यं प्राकृतिकं सौन्दर्यमेव, यथा शैलतुहिनकुसुमसौन्दर्यं बाह्यावयवाकृतिसौन्दर्यम्। मनुष्याकृतिसौन्दर्यं हि सविशेषमाकर्षति ग्रीसवासिनः। ग्रीसवासिनो हि यूरोपप्रदेशस्य शिक्षागुरव इति यूरोपप्रदेशवाणी ग्रीसवाण्येव।

एशियाप्रदेशे तु विलक्षणस्वभाववतां जनानां निवासः। सुबृहन्म-हादेशं चिन्तयन्तु, यत्र कुत्रचिच्छैलशृङ्गाणि अभ्रभेदीनि नीलनभ-श्चन्द्रातपं स्पृशन्तीव राजन्ते; कुत्रचिद्वा बहुक्रोशव्यापिनी मरुभूमिर्यत्रा-सम्भवो जललवः, अनुत्पन्नं च तृणजातं; कुत्रचिद्वापारं वनं विशालक्रोशसम्भारं, विपुलकाया च समुद्रसङ्गमोन्मुखिनी स्रोतस्विनी। चतुर्दिक्षु प्रकृतेर्महिममयदृश्यैरेतैः परिवृतानां प्राच्यानां सौन्दर्यं तथा गौरवं प्रत्यनुरागो विलक्षणतया प्राकाश्यमायातम्। प्राच्यजातिस्तु बहिर्दृष्टिमन्तर्दृष्टिसम्पन्ना जाता। तत्रापि स्वाभाविकसौन्दर्यसम्भोगाय, प्रकृतावाधिपत्यस्थापनाय, उन्नत्यै च तृषा वरीवर्तते; यथा ग्रीक्जात्या जातयोऽन्या बर्वरत्वेनोपेक्षितास्तथात्रापि भेदबुद्धिर्विराजते। परं तत्र जातीयभाववृत्तं वैपुल्येन विततम्। एशियाप्रदेशेऽधुनापि जन्म, वर्णः, भाषा वा न जातिं निर्माति। तत्र जातिं निर्माति धर्मः। सर्वे ख्रीष्टधर्मावलम्बिन इत्येका जातिः, महम्मदीया इत्यपरा जातिः, बौद्धा इत्यन्या काचन जातिः, हिन्दवो भिन्ना इति काचिज्ज्ञातिः। निरर्थक-मेतच्चिन्तनं यत् कश्चन बौद्धः चीनदेशीयः पारस्यवासी वा; चिन्तयन्ति केवलं यत्ते मिथो भ्रातरः समधर्माश्रितत्वात्। तत्र धर्म एव मिथो मनुष्यजातेर्बन्धनं सङ्गमभूमिश्च। प्रागुक्तकारणाद्धि प्राच्याः कल्पनाप्रवणाः,

आ जन्मन एव स्वप्नदर्शिनः। जलप्रपातस्य कलध्वनिः, विहगकूजनं, सूर्यः, चन्द्रः, ताराश्च परमोपभोग्यानि; परं न पर्याप्तानि तानि प्राच्येभ्यः। आसन् प्राच्या अतीन्द्रियचिन्तोदधिं प्रविविक्षवः। अतः प्राच्या वर्तमानस्येहजगतः प्राकारं भित्त्वा तदतीतप्रदेशं जिगमिषन्ति। परिदृश्यमानमिदं जगत्तुच्छं तत्कृते। प्राच्यदेशो मानवजातेः शैशवावस्थायाः शिशुशय्या, तत्र भाग्यचक्रस्य कृत्स्ना परिवृत्तिः परिलक्ष्यते। तत्र राज्यादेकस्माद् राज्यान्तरस्य, साम्राज्यनाशाद्भिन्नसाम्राज्यस्याभ्युदयः, मनुष्यजैश्वर्यं, वैभवगौरवशक्तिः—इत्येतत्सर्वं विलुण्ठ्यते। विद्या ऐश्वर्यवैभवसाम्राज्यानां समाधिभूमिरित्येव प्राच्यस्वरूपम्। अतः प्राच्या जगतः पदार्थान् हेलयावहेलयन्ति स्वभावतश्चापरिणामि अविनाशि वस्तु दिदृक्षन्ते तथेदं दुःखमपि मृत्युमये जगति नित्यमानन्दमयमविनाशि चेत्यत्र नास्ति किमपि विस्मयावहम्। प्राच्यमहापुरुषा आदर्शमिममुद्घोषयन्तो न कदापि खिन्नाः। एतदपि स्मर्तव्यं भवद्भिर्यदखिलजगतोऽवताराः प्राच्या एव; नान्यदेशीयाः।

अस्माकं प्रकृतमहापुरुषस्याद्यो मूलमन्त्रः श्रूयते—'जीवनमिदमतितुच्छम्, अस्तीतोऽपि श्रेयः किमपि' इति। किञ्च, अतीन्द्रियं तत्तत्त्वं स्वीयजीविते आचरन् स स्वं प्राच्यदेशीयतनयत्वेन प्रचकाशे। भवन्तः पाश्चात्त्याः स्वेषां कार्येषु सामरिकविषयेषु राष्ट्रनैतिकविभागकरणे च दक्षाः। प्राच्यास्तु तद्विषये स्वकृतित्वं न प्रादर्शयन्। परं स्वकर्मविषयेषु तैरपि साफल्यमधिकृतमुपलब्धश्च धर्मः स्वजीवने। केनापि किमप्यन्यद्दार्शनिकं तत्त्वं प्रख्याप्यते प्राच्ये चेदद्यश्वः एव सहस्रं जना आप्राणं तदुपलब्धुं यतेरन्। किं बहुना, पादेनैकेन दण्डायमानो मुक्तिमाप्स्यतीति

कोऽपि प्रचारयति चेत्तदैवैवंविधाः पञ्चशतजनाः प्राप्येरन् ये पादेनैकेन स्थातुं सन्नद्धाः। भवत्सकाशं हास्यास्पदमिदम्, परं जानीयुर्यत्तत्रास्ति बीजं किमपि दार्शनिकतत्त्वम्। तेषां नये न केवलं विमर्शविषयो धर्मः, ते तमुपलब्धुं स्वजीविते च कार्यरूपेण परिणमयितुं यतन्ते। पाश्चात्त्यो मुक्तिमार्गस्तु बुद्धिवृत्तेर्व्यायाम एव। न ते कदापि धर्मं कार्यरूपेण परिणमयितुं यतितवन्तः। पाश्चात्त्ये उत्तमो वाग्मी एव सर्वश्रेष्ठधर्मप्रचारकत्वेन परिगण्यते।

अतो वयं पश्यामो न्याजारेथवासी यीशुरासीत्प्राच्यभावप्रभावितः। नासीत्तत्प्रत्ययो जगति तदैश्वर्ये च। सम्प्रति पाश्चात्त्यजगति शास्त्रीयवाक्यं विकृत्य व्याख्यानप्रचेष्टा प्रयोजनीया। एतावत् निष्पीड्यते प्रसभं यत्तत आकृष्य न पुनर्बृहदाकारतां विधातुं शक्यते। शास्त्रवाक्यानि तु न रबाराख्यवस्तुवद् येनाकृष्य यथेच्छं बृहदाकारदानं सम्भवति। अस्ति च तस्यापि अवधिः। सम्प्रति धर्मस्येन्द्रियसर्वस्वसम्पादनं नोचितम्। विमृशन्तु भवन्तो यन्निर्व्याजैरस्माभिर्भवितव्यम्। आदर्शानुसरणानर्हाश्चेद्वयं स्वीकार्यमस्माभिर्नो दौर्बल्यं, न चादर्शो लघुकार्यः कदापि। न चादर्शः केनाप्यधः पात्येत। सम्प्रति पाश्चात्त्या हि ख्रीष्टदेवस्य यज्जीवनोपाख्यानं विवृणन्ति तद्धि हृत्पीडादम्। कीदृक् स आसीत्? कीदृक् च नासीत् सः? इति न ज्ञायते। कश्चित्तं महाराजनीतिज्ञत्वेन प्रतिपादयितुमीहते, कोऽपि सेनापतित्वेन, को वा स्वदेशहितैषीहुदिरूपेण, कश्चन वा भिन्नरूपेण। ननु किमस्ति बाइबेल्ग्रन्थे तथाविधानुमितौ मानं किमपि? कस्यचन महतो धर्माचार्यस्य जीवनं हि तज्जीवनस्य श्रेष्ठं भाष्यम्। यीशुर्हि स्वविषये बभाण—'अस्ति क्रोष्टुरपि विलमेकं,

खगानामपि नीडम्; परं मानवसूनुयीशोर्नास्ति स्थानमेकं यत्र स्वशिरः स स्थापयेत्' इति। बभाषे च यीशुर्यदेतद्धि मुक्तेरनन्यमयनम्। न चासौ तद्भिन्नं मुक्तेरुपायान्तरं निर्दिदेश। दन्तैस्तृणानि संगृह्यास्माभि-रेतत्स्वीकार्यं दीनतया यन्नास्ति न एतादृशत्यागवैराग्ययोः शक्तिः, परमधुनापि 'अहम्' 'मम' इत्यत्रास्ति न आसक्तिः। काङ्क्षामहे वयं धनम्, ऐश्वर्यं, वैभवञ्च। धिग् अस्मान्, यथाऽस्माभिर्दौर्बल्यमूरीकरणीयं, न तु महापुरुषो यीशुर्हीनरूपेण प्रतिष्ठाप्यः। नासीत्तस्य पारिवारिक-बन्धनं किमपि। किं मन्यन्ते आसीत्तस्मिन् शरीरबोध इति? किं वा चिन्तयन्ति ज्ञानज्योतिषः परम आधारः स्वयमीश्वरः पशूनां सहधर्मि-रूपेणावततार जगतीति? तथापि जना विचारविशेषान् तदुपदेशत्वेन प्रख्यापयन्ति। नासीत्तस्य स्त्रीपुरुषभेदधीः। स स्वमात्मरूपेणैव ज्ञातवान्। ज्ञातञ्च तेन यत् स शुद्ध आत्मा, केवलं मानवजातेर्भूत्यै देहं नियमयति, देहेन तस्यैतादृगेव सम्बन्धः। नास्ति चात्मनो लिङ्गभेदः। पाशवभावेन विदेहात्मनो नास्ति कश्चन सम्बन्धः। एवंविध- त्यागभावाद्बहुदूरं स्यातुमलम् अतिष्ठाम वा, परं नास्माभिः स भावो विस्मर्तव्यः। अस्माभिः स्वीकार्यं यत्त्यागो हि न आदर्शः, परं तमादर्शमाप्तुमधुनापि नाधिकारिणो वयमिति।

स शुद्ध-बुद्ध-मुक्तात्मस्वरूप इत्येतत्तत्त्वोपलब्धेरन्यन्नासीत्तज्जीवने किमपि कृत्यं चिन्तनं वा। प्रकृत्या स विदेहः शुद्ध-बुद्ध-मुक्तात्म-स्वरूपः। न केवलमेतदेव, स तस्य साश्चर्यदिव्यदृष्ट्यावगतवान् यन्नरो नारी वा, साधुरसाधुर्वेत्येते सर्व एवैकोऽविनाशी आत्मा। अतस्तज्जीवने एतत्कार्यमेव दृक्पथमायाति यत्समग्रा मानवजातिः स्वशुद्धचैतन्यस्व-रूपोपलब्धये तेन भृशमाहूता। उक्तवान् च सः—जहित दीनं हीनं

कुसंस्कारमयं स्वप्नम्। न चैवं मन्येरन् यदपरैस्त्वं दास इव पादतलेनाहन्यसे पीड्यसे च। अत्र कारणं युष्मास्वस्ति एवंविधं वस्तु यन्न केनापि पादतलेनाहन्तुं पीडयितुं वा शक्यत इति। भवन्तः सर्वे एवेश्वरतनया अमरा आत्मस्वरूपाश्च। स महावाणीमेतां जगति उद्घाषयामास—'अवगच्छन्तु स्वर्गराज्यं राजते तदन्तः एव।' इति। 'अहं मे पिता चाभिन्नौ' इति। न स इहजीवनविषयकं सांसारिकं वा किमपि ववार। जगद्विषयैर्नासीत्तस्य कोऽपि संसर्गः। मानव-जातिर्यादशीमवस्थां भजते ततस्तामग्रे कथञ्चित् प्रसारयितुं तथा सर्वथा च नियमयितुं स इच्छति, यावन्न समग्रो जगत्प्रपञ्च उपगच्छति ज्योतिर्मयं परमेश्वरम्, यावन्न प्रत्येकं जनः स्वस्वरूपमुपलभते, यावन्न दुःखं कष्टं मृत्युश्च जगतः सम्पूर्णतया निराक्रियते।

तज्जीवनविषयकं मिथो विरुद्धं सर्वमाख्यानमधीतमस्माभिः। ख्रीष्ट-जीवनचरितस्य समालोचकपण्डितान् तद्ग्रन्थग्रामान् उच्छ्रितसमालोच-नाभिधसाहित्यानि च जानीमो वयम्। विविधग्रन्थान् पर्यालोच्य सिद्धा-न्तितं बुधसिद्धान्तमपि जानीमः। ननु बाइबेलग्रन्थस्थस्य नूतननियमस्य कियानंशः सत्यः? तदुपवर्णितस्य यीशुख्रीष्टजीवनचरितस्य वा कियानं-शश्चैतिहासिकसत्याश्रित इत्येतद् विचारयितुं नात्र वयमेकीभूताः। यीशुख्रीष्टदेवस्य जन्मनः पञ्चशतवर्षमध्ये नूतननियमो लिखित उत यीशुख्रीष्टदेवस्य जीवनचरितस्य कियानंशश्च सत्यः—इत्याद्याः प्रश्ना निरर्थकाः। परं तज्जीवनस्य पश्चादस्ति किमपि यद्धि सत्यम्, अस्ति किमपि यद्धि अस्माभिरनुकार्यम्। असत्यकथनार्थमपि सत्यमेवानुकर-णीयम्। अस्ति च सत्यस्य याथार्थ्यम्। नानुकर्तुं शक्येत तद्यदसत्।

किञ्च, अननुभूतमपि नानुकर्तुं शक्येत। अत एतदनुमेयं यद् बाइबेलोपवर्णिततथ्यजातस्यातिरञ्जितत्वे स्वीकृते नूनमूरीकरणीयं यत् कल्पनायास्तस्या आसीत्किमपि बीजम्। अवश्यमेव तदा आविर्बभूव काचन महाशक्तिर्जगति, विचकाशे च काचिदाध्यात्मिकी शक्तिः। तामश्रित्यैव किञ्चिदिदानीमालोचयिष्यामि। तन्महाशक्तिसत्त्वेऽसन्देहान्नो नास्ति पण्डितवर्येभ्योऽपि काऽपि समालोचनभीः। प्राच्या इवाहमपि यीशुमुपासे चेदीश्वररूपेणैवोपासे न चान्यरूपेण तमुपास्तुं शक्ये। किंभवन्तो वक्तुमुत्सहन्ते यन्नास्ति मे तथाविधोपासनायामधिकारः? वयं तमस्मत्समतले अपकृष्य महापुरुषमात्रत्वेन सम्मानयामश्चेत्कथमुपास्महे? शास्त्रमस्माकं ब्रूते—'ब्रह्मज्योतिर्येभ्यः प्रकाश्यते, ये तावद् ब्रह्मज्योतिःस्वरूपाः, तज्ज्योतिस्तनयास्त उपास्यन्ते (अस्माभिः) चेत्प्राप्ततादात्म्यभावा अभिन्ना भवेम' इति।

अत्र कारणमेतद् भवद्भिः लक्ष्यं यन्मानवैस्त्रिधा ईश्वर उपलभ्यते। प्रथमावस्थायाम् अशिक्षितमानवस्यापरिणतबुद्धौ बोधोऽयं जायते यदीश्वरः सुदूरे स्वर्गाभिधे स्थाने पापपुण्यविचारकत्वेन सिंहासनासीनः। स तं महाभयत्वेन उद्यतवज्रत्वेन च चिन्तयति। ईश्वरविषयिणीयं धारणापि उत्तमा, नानुत्तमात्र। एतत् स्मर्तव्यं भवद्भिर्न नरोऽसत्यतो भ्रमतो वा सत्यमुपगच्छति, सत्यतः सत्यमेवोपगच्छति। एवं प्रतिपादयितुं शक्यते यन्मानवोऽप्रकृष्टसत्यत उत्कृष्टसत्यमारोहति; न तु असत्यतः सत्यमिति। चिन्तयतु, इतः पूर्वाभिमुखी सन् ऋजुभावेनाग्रे सरन्नस्ति कोऽपि। अत्र सूर्यो लघुकायो दृश्यते। इत आरभ्य दशलक्षमैलमितदूरं गच्छेच्चेत्तत्र सूर्यः पूर्वापेक्षया बृहत्तराकारो दृश्यते। मन्येरन्नेवं विविध-

स्थानेभ्यः सूर्यस्य विंशतिसहस्रं चित्राणि गृह्यन्ते। एतेषां मिथो वैभिन्न्यं ध्रुवम्। परं तानि सर्वाण्येकस्यैव सूर्यस्यालोकचित्राणीति न कोऽप्यपलपितुं शक्नुयात्। एवमपकृष्टा उत्कृष्टा वा धर्मपद्धति-र्ज्योतिर्मयेश्वरसमक्षं विविधसोपामात्रमेव कस्मिंश्चिद्धर्मे ईश्वरचिन्तनमवरं कुत्रचिद्वोत्कृष्टमित्येव प्रभेदः। अतः समग्रजगच्चिन्तनेऽनर्हाणां सामान्यजनानां धर्मे ब्रह्माण्डाद्बहिर्नाकनामधेये स्थानविशेषे जगच्छासिता पुण्यवतां पुरस्कारदाता, पापिनां दण्डदाता तथा चान्यगुणवानीश्वरस्तिष्ठति स्थास्यति च सदा। यावदाध्यात्मिकराज्यमभिगच्छेत्तावदुपलभेत भवत्कल्पितः स्वर्गस्थ ईश्वरः परमार्थतः सर्वगतः, न च दूरस्थितः, परं स स्वहृत्स्थ एव। स तत्त्वतः सर्वात्मनामन्तरात्मा, यथात्मा मे शरीरं नियमयति तथात्मानं मे नियमयतीश्वरः। स हि आत्मनोऽन्तरात्मा। किञ्च, आसन्नेवं शुद्धचित्ता आध्यात्मिकशक्तिमन्तः केचन ये पूर्वावस्थामतीत्येश्वरं प्रापुः। बाइबेलग्रन्थस्य नूतननियमे वर्तते—'पूतं येषां हृदयं ते हि धन्याः, कारणं ते हीश्वरं लप्स्यन्ते' इति। परिशेषे च दृष्टं (तैः) ते तत्पितेश्वरश्चाभिन्नाः।

भवन्तो लक्ष्यीकुर्वन्तु, बाइबेलग्रन्थस्य नूतननियमे श्रेष्ठधर्माचार्येण यीशुना सोपानत्रयशिक्षा प्रदत्ता। तदुपदिष्टा सामान्यप्रार्थना—'भोः! अस्माकं स्वर्गस्थ! पितः! तव नाम जयतु' इति। एषाऽकपटभावस्य प्रार्थना, शिशोः प्रार्थना। लक्ष्यते यदेषा 'सामान्यप्रार्थना'। कारण-मेषाशिक्षितजनेभ्य उपदिष्टा। तत उत्कृष्टतरजनानां पूर्वावस्थातः किञ्चिदग्रे सरतां कृते उच्छ्रिततरसाधनमुपदिदेश। 'अहं मे पितरि, यूयं मयि, अहञ्च युष्मासु वर्ते' इति। ननु स्मर्यते खलु? किञ्च, इहुदिभिः

कस्त्वमिति पृष्टः सन्नुवाच यीशुरहं पिता च मेऽभिन्नौ। चिन्तितं यहुदीभिरात्मानमीश्वरतोऽभिन्नत्वेन प्रतिपादयन्नसावीश्वरं तिरस्करोतीति। परमनेन किमजिज्ञपत्सः? एतदप्यस्माकं प्राचीनमहापुरुषैरप्यभ्यधायि—'यूयं सर्वे हीश्वराः, परमपुरुषसूनवश्च' इति। अत इदमवधेयं यद् बाइबेलेऽपि सोपानत्रयमुपदिष्टम्। एतदपि अवधेयं यत्प्रथमसोपानतः शनैः शनैः शेषसोपानागमनं हि भवतां सुगम्यतमपन्थाः।

ईशदूतो यीशुः सत्यलाभपन्थानं प्रदर्शयितुमाविर्बभूव। आगतश्चैतद्दर्शयितुं यन्न लभ्यमात्मतत्त्वं क्लेशकरैरनुष्ठानादिभिस्तथा कूटैर्दार्शनिकवादैः। किमपि न शिक्षते चेत्तदेव वरम्, पुस्तकं किमपि नाधीते चेत्तदेव वरम्। नैतानि भवन्मुक्तयेऽपरिहार्याणि। नैश्वर्यं, न पदम्, न च बलं, नापि शिक्षापेक्षितानि मुक्तये। अपेक्षितं हि पवित्रतेत्येकं वस्तु। 'पवित्रात्मानः शुद्धचित्ता हि धन्याः' इत्यत्र कारणमात्मा स्वयं शुद्धस्वभावः। कथं भवेत्सोऽशुद्धः? आत्मा ईश्वरप्रसूतः, ईश्वराविर्भूतः। बाइबेलभाषयात्मा ईश्वरनिःश्वासभूतः। कोराणभाषया चेश्वरात्मरूप आत्मा। किं विवक्षुर्भवान्? किमीश्वरात्मा कदापि भवेदपवित्रः? परमहो भाग्यम्! अस्माकं शुभाशुभकर्मणा स आत्मा सहस्रशताब्द्या रजोभिरवष्करेण चावृतः। अन्याय्यान्यशुभानि कर्माणि आत्मानं तं सहस्रशताब्दीश्यः अज्ञानरूपैर्धूलिपटलैर्मालिन्येन चाच्छादितवन्ति। केवलमस्माकं कलुषमवस्करश्च विशोधनीयम्। ततश्च आत्माशु औज्ज्वल्यं दध्यात्। 'पूतचेतसः पुमांस एव कृतकृत्याः, यतस्ते हीश्वरं प्राप्स्यन्ति' इति। 'स्वाराज्यं भवदन्तरेव वर्तते' इति। न्याजारेथवासी यीशुर्जिज्ञासते स्वर्गसाम्राज्यं भवत्येव चेत्कथमन्यत्र तदनुसन्धत्ते?

विमलीकुर्वन्तु आत्मकलुषं, पश्येयुश्चात्रैव स्वर्गराज्यम्। न चेत्तद् भवतां कथमाप्नुयुः। अत्रास्ति तेषामा जन्मन एवाधिकारः। भवन्तोऽमृताधिकारिणः शाश्वतपितृतनयाश्च।

इयं हीश्वरदूतयीशोर्महती शिक्षा। अपरा च सर्वधर्ममूला शिक्षा त्यागः। कथमात्मानं शोधयेत्? त्यागेनैव। कश्चन धनी युवा पप्रच्छ यीशुं—'प्रभो! कथं शाश्वतसत्त्वमधिकुर्याम्?' यीशुनाभाषि—'अधुनापि वर्तते त्वयि कस्यचिद्वस्तुनोऽभावः। गच्छ, गृहं गच्छ। यत्किञ्चिदस्ति ते तत्सर्वं विक्रीय तदर्थान् दरिद्रेभ्योऽर्पयेः। ततश्च नाके वित्तनिचयं सञ्चित्य क्रुशकाष्ठं वहन् मामनुसर' इति। तच्छ्रवणेन व्यथितहृदयो विषण्णचित्तश्च सन् स ततो गतः। यतो ह्यासीत्तस्य प्रचुरधनम्। न्यूनाधिकतया वयं सर्वे तादृशोध्वनिर्युवेव। ध्वनिरयमहर्दिवं नः कर्णयोः प्रतिध्वन्यते। सुखप्रमोदमध्यस्थाः सांसारिकविषय-भोगोयगूढा वयं मन्यामहे विस्मृता वयमस्माकं जीवितस्य परमं लक्ष्यम् इति। परमञ्जसा समागता मुहूर्तयति, कर्णयोर्नोर्ध्वनितश्च ध्वनिरयम्—'यत्किञ्चित्ते तत्परित्यज, अनुसर च माम्। यः कोऽपि स्वसत्त्वमात्रमवति स हीयते तस्मात्। किञ्च, यः कोऽपि मदर्थमुत्सृजति स्वासून् नूनं स तदाप्नुयात्। कारणं हि यः कोऽपि तदर्थम् (भगवते) उत्सृजेत्प्राणान् स ध्रुवमाप्नुयाच्छाश्वतं जीबनम्' इति। अस्माकं दौर्बल्यदशासु वृत्तप्रवाहेषु च मुहूर्त्तविरतिरायाति नदति चेयं वाणी—'यत्किञ्चिो तत्परित्यज, दरिद्रेभ्यो अनुसर च माम्' इति। स धर्माचार्य इममादर्शं हि प्रचारितवान्, जगतः श्रेष्ठाचार्याः सर्वेऽपि तथैव कृतवन्तः—स एव त्यागः। ननु किं तावत् तात्पर्यं त्यागस्य?

सुनीतेरेक एवादर्शः—निःस्वार्थपरता। अहम्भावशून्यो भवतु आदर्शस्तावत् परिपूर्णास्वार्थपरनाऽहम्भावशून्या वा। असव्यकपोलेनाप्ताहतो जनो नूनं परिवर्तेत स्वकपोलान्तरम्। कोऽपि चेत्तद्वासोऽपहरेत्तस्मै ध्रुवं देयः प्रावारः।

आदर्शमलघूकृत्यैवास्माभिरुत्तमतया कार्यं सम्पादनीयम्। आदर्शावस्था त्वीदृशी—न स्याद्यदाहंभावः, न च कस्मिन्नप्यधिकारबोधः, न च अहं ममेति चिन्तनं, सम्पूर्णतया आत्मानं विसृजेन्नाशयेच्चेत् स्वयं तदैवेश्वरस्तस्मिन् राजेत। यतस्ततोऽपगतोऽहम्भावो विध्वस्तो विलुप्तश्च। वयमधुनापि तदादर्शमुपगन्तुमक्षमास्तथाप्युपास्यो नः स एवादर्शः। स्खलत्पद्भ्यां गच्छद्भिरस्माभिस्तु शनैः शनैस्तदाप्तुं यतनीयम्। श्व उत सहस्रवर्षेभ्यः परमादर्शं ध्रुवमाप्नुयाम। कारणं न केवलमेतल्लक्ष्यं, साधनमपि। निःस्वार्थपरता—सम्पूर्णरूपेण अहम्भावशून्यता हि मुक्तिः। यतो हि त्यक्तेऽहम्भावेऽपगच्छेदन्तःस्थो मानवभावः, अवशिष्येत् चेश्वरः।

अपरश्चायं प्रसङ्गः, मानवजातेर्धर्माचार्या परार्थनिष्ठाः। चिन्तयन्तु, उपदिशति न्याजारेथवासिनि यीशौ कश्चन आगत्य ब्रूते 'यदुपदिशति भवान् तदतीव मनोहरम्। विश्वसिमि चैष हि पूर्णत्वप्राप्त्युपाय इति। किञ्च, अनुसर्तुमपि उपायमिमं सन्नद्धोऽहम्। परं नाहं भवन्तमेवेशसूनुत्वेनोपास्तुं शक्नोमि' इति। किं प्रतिब्रूयात् न्याजारेथवासी यीशुः? नूनं स वदेत् 'साधु, साधु, आदर्शमेवानुसर त्वम्। स्वायनेन चाग्रेसर। तदुपदेशार्थं मां सम्मानयेदुत नेत्यादि नाहं गणयामि। नाहमापणिकः कश्चन। धर्ममाश्रित्य न व्यापारं कुर्वेऽहम्। सत्यमेवोपदिशामि।

न च सत्यं व्यक्तिविशेषसम्पद्। न कोऽपि धर्मे स्वाधिकारमात्रं स्थापयितुं शक्नुयात्। सत्यं स्वयमीश्वरः। अग्रे गच्छ' इति। परं किं भाषन्ते तदनुयायिनः? उद्घोषयन्ति ते तदुपदेशान् भवन्तोऽनुतिष्ठन्ति उत नेति न कश्चन आलोच्यविषयः। किन्तु किं श्रद्दधते उपदेष्टारः? उपदेष्टारं सम्मानयेच्चेज्जगतस्ते मुक्तिर्ध्रुवा। अन्यथा मुक्तिर्दुर्लभा। एवमाचार्यवर्योपदेशा विकृतास्तच्छिष्यैः। प्रारब्धोऽधुना उपदेष्टुर्व्यक्तित्वविषयकविवादः। न ते जानन्ति यदुपदेशानुसरणं विहाय उपदेष्टारमाश्रित्य विवादेन स पक्षतस्तमवजानीते। तथैव तदुपदेशान् विस्मृत्य केवलं तस्मै सम्मानप्रदर्शने सति स लज्जया सङ्कुचितो भवेत्। कोऽपि तं स्मरति उत नेति विचारेणालम्। जगद्वासिभ्य आसीत्काचिद्वार्ता, तस्याश्च स प्रचारं चकार। विंशतिसहस्रवारं प्राप्तेऽपि जीविते स जगति दरिद्रतमजनेभ्यः स्वसत्त्वमुत्स्रष्टुमासीत्सन्नद्धः। किं बहुना, लक्षलक्षवारानपि लक्षलक्षघृण्यसामारियावासिनां कृते क्लेशसहनाय समेषां मुक्त्यर्थं तज्जीवनकुसुमार्पणाय चासीत्स बद्धसङ्कल्पः। कुत्रापि स्वनामज्ञापनमृते एवैतत्सर्वं सम्पादयितुमुद्यतः सः। भगवान् इतो मौनीभूय स्वकार्यं सम्पादितवान्। तच्छिष्याः सम्प्रति किं भाषन्ते? ते प्रख्यापयन्ति यद्भवत यूयं परिपूर्णतया निःस्वार्था निर्दुष्टाश्च, परं महापुरुषं प्रति विना श्रद्धाप्रदर्शनं सर्वमफलं ते इति। कथमेवम्? कुतोऽस्य कुसंस्कारस्यास्य भ्रममय प्रभावः? एतादृशप्रमादस्य कारणं हि यीशुख्रीष्टानुयायिन-श्चिन्तयन्ति यद् भगवान् केवलमेकशो देह एवाविर्भवति। ईश्वरो युस्माकं समक्षं मनुष्यरूपेणैवाविर्भवति। प्रकृतौ यत्सकृत्संवृत्तं तन्नूनं भूते भूयो भूयः संवृत्तम्, भविष्यति च भविष्यति। नास्ति च प्रकृतौ किमपि नियमानधीनम्। यत्सकृत् संघटते तत्संघटितं संघटिष्यते च।

अस्ति भारतेऽपि एतादृगवतारवादः। अवतारेष्वनन्यो हि श्रीकृष्णः; तस्य भगवद्गीतारूपापूर्ववाणी नैकैः पठ्यते। गदितं च तेन—अजोऽक्षयः प्राणिनामीशोऽपि स्वां प्रकृतिमाश्रित्य स्वमायया जनिं लेभेऽहम्। भो! अर्जुन! यदैव ग्लानिर्धर्मस्याभ्युत्थानश्चाधर्मस्य तदैवाहमात्मानं सृजामि। साधूनां परित्राणाय तथा नाशाय दुर्जनानां धर्मसंस्थापनाय च प्रतियुगमहमवतरामीति।

यदैव जायते जगति हानिस्तदैव श्रीभगवानायाति तदुन्नत्यै। एवं स विविधस्थाने विविधयुगे चाविर्भूतः। गीतायामन्यत्रापि तेनैवमगादि : जानीहि एतद्यत्रैवंविधमहाशक्तिमान् पवित्रस्वभावसम्पन्नो महात्मा मनुष्यजातिमुन्नमयितुमाप्राणं यतते स ममैवांशभूतः, अहमेव तदन्तः प्रविश्य कार्यं सम्पादयामीति (गीता ९०/४९)।

अत आगच्छन्तु, न केवलं न्याजारेथवासिनि यीशौ, अपि तु तत्पूर्ववर्तिषु तदुत्तरवर्तिषु महापुरुषेषु भगवन्तं पश्येम। नास्माकमुपासना यथा सावच्छिन्नत्वेन विधेया। ते सर्वे ह्यनन्तभगवतोऽभिव्यक्तिमात्रम्। ते पूतात्मानः स्वार्थहीनाश्च। किं बहुना, सर्वे ते सानन्दं दुर्बलमनुष्यजातिभ्यो ददौ स्वप्राणान्। ते नः समेषां कृतपापानां भविष्यद्वंशीयपापानां च प्रायश्चित्तं विहितवन्तः। एकधा भवन्तः सर्वे ह्यवताराः, सर्वे हि स्वस्वस्कन्धेषु जगद्भारं वहन्तः सन्ति। किं भवद्भिर्दृष्टा ईदृश्यो नरनार्यो स्वजीवनभारं याभिर्नोह्यते? प्रसिद्धा अवतारा ह्यस्मदासन्महान्तः। अतस्तैर्जगद्भारः समानीतः। तेभ्यो वयमवरा इति तु सत्यम्, तथापि तत्कर्मैवाहर्दिवं वयमनुतिष्ठन्तः स्मः। नास्ति जगतीदृगधमो निर्गुणो

वा यो न स्वकृत्यं सम्पादयति। अस्मज्जीवने सतोरपि भ्रमप्रमादयोः, अशुभचिन्तने, अशुभकर्मणि च नश्वरितेऽस्ति एवंविधं स्थानं स्वर्णसूत्रं वा येनानारतमीश्वरसंयुक्ता वयम्। अवधेयमेतद्यद् यस्मिन् क्षणे ईश्वरसंयोगच्युताः स्याम वयं तदैव ध्रुवं विनश्येम। परं कस्यापि सम्पूर्णतया विनाशासम्भवादवरेषु अपकृष्टेष्वपि अस्मास्वस्मद्धृदन्तःप्रदेशे कुत्रचिदस्ति क्षुद्रं ज्योतिर्मयं वृत्तं येन भगवतो नित्यसंयोगो वरीवर्ति।

विविधदेशवास्तव्येभ्यो विविधजातीयेभ्यो विविधमतानुयायिभ्यश्च महापुरुषेभ्यो वै नः प्रणामो निवेद्यते येषां जीवनमुपदेशाश्च परम्परया-स्माभिराप्तानि। तेभ्यः पुनर्नंनम्येऽहं ये देवतुल्या मनुष्यजातिभूत्यै आप्राणं प्रयतितवन्तः, तेभ्योऽपि विनिवेदयामि नमांसि भूयांसि ईश-स्वरूपा ये नो वंश्यानामभ्युन्नतये निःस्वार्थकार्यं कर्तुं भविष्यति अवत-रिष्यन्ति धरायामस्याम्।

# भारतीया महापुरुषाः

भारतीयमहापुरुषानाश्रित्य भाषणकाले मनो मे प्रतियाति तान् कालान् येषां वृत्तानीतिहासो नोल्लिखति, पारम्पर्यं च येषां गाढध्वान्ततो रहस्यमुद्घाटयितुं मुधैवेहते। भारतेऽसङ्ख्येया महापुरुषा जनिं लेभिरे—वस्तुतो हिन्दुजातिः सहस्रवर्षाणि यावन्महापुरुषप्रसवादन्यत् किं साधितवती? अतस्तेषु केषाञ्चन युगप्रवर्तकानां श्रेष्ठाचार्याणां जीवनवृत्तं नः समक्षमुपन्यस्यामि यद्धि तच्चरितानुशीलनलभ्यम्।

प्रथमतः—अस्माकं शास्त्रविषये किञ्चिदस्माभिर्बोद्धव्यम्। शास्त्रेऽस्माकं सत्यस्य द्वैधमुपदिष्टम्। प्रथमं शाश्वतं सत्यम्। द्वितीयं तु देश-काल-पात्रप्रयोज्यम्, अशाश्वतम्। सनातनसत्यं जीवात्मपरमात्मनोः स्वरूपं तथा तयोर्मिथः सम्बन्धविषयकं श्रुतिबद्धं तथ्यम्। द्वितीयं च सत्यं मनु-याज्ञवल्क्यादिकृतस्मृतिषु पुराणेषु च ग्रथितं तथ्यम्। प्रामाण्यमेषां श्रुत्यधीनं, श्रुतिस्मृत्योर्विरोधे श्रुतिर्हि बलीयसीति शास्त्रशासनम्। श्रुतौ जीवात्मनो नियतेस्तथा तच्चरमलक्ष्यविषयकानां मुख्यतत्त्वानां सविशदं वर्णनमाप्यते। तदाश्रिता गौणविषयास्तु स्मृतिपुराणादिषु प्रपञ्चिताः। सामान्यतयोपदेशदाने श्रुतिर्हि पर्याप्ता। धर्मजीवनपालनविषये श्रुत्युपदेशतोऽन्यत् किमपि नास्ति वक्तव्यं, नास्ति च किमपि ज्ञातव्यम्। एतद्विषयकमपेक्षितं तथ्यजातं श्रुतावस्ति। जीवात्मनः सिद्धिलाभायानिवार्या उपदेशाः श्रुतावुपदिष्टाः। परं नास्ति अवस्थाविशेषविधिः श्रुतौ। स्मृतावस्थाविशेष-विशेषविधानं निबद्धम्।

श्रुतिरपरामपि काञ्चिद् विशेषतां विधत्ते। ये तावदृषयः श्रुतौ विविधं सत्यमुज्जुघोषुस्तेषु पुरुषा हि भूयिष्ठाः, काश्चन च नार्यः। ऋषीणां तेषां व्यक्तित्वविषये जन्मदिनाङ्कस्थानादिविषये च यत्किञ्चिदेवोपलभ्यते। परं तेषां सर्वोत्कृष्टं चिन्तनं तथाविष्करणमस्माकमेव धर्मसाहित्येषु वेदेषु रक्षितं, लिपिबद्धञ्च। अपरतः, स्मृतौ महापुरुषाणां जीवनं कार्याणि च सविशेषमुपनिबद्धानि। उद्वेगकारिणाम् अतिमानुषाणां हृदयस्पर्शिनां महापुरुषाणां परिचयः स्मृतितः पुराणतो वा प्रथममवगम्यते, क्वचित्तदु-पदेशेभ्यस्तच्चरितमेवाधिकं महत्त्वं विदधदिव प्रतीयते।

धर्मस्य विशेषोऽयमस्माभिरवगन्तव्यो यन्नो धर्मो निर्गुणमपीश्वरं सगुणत्वेनोपदिशति। उपदिशति च व्यक्तिभावविरहितैः सनातनतत्त्वैः साकं नैकान् अवतारान्। परं श्रुतिर्वेदो वा नो मूलम्, यन्न सनातनोपदेश आप्यते। अवताराः, आचार्याः, महापुरुषाः स्मृतिपुराणादिषु सिद्धाः। अत्रेदमवधेयं यदस्माकं धर्ममृते सर्वे हि धर्मा कस्यचन धर्मप्रवर्तकस्य केषाञ्चन वा धर्मप्रवर्तकानां जीविताश्रयिणः। ख्रीष्टधर्मो यीशुखृष्टदेवस्य जीवनमाश्रित्य निर्मितः। इसलामधर्मो महम्मदं, बौद्धधर्मो बुद्धदेवं, जैनधर्मो जिनदेवान् चाश्रित्य निर्मिताः। तथान्ये धर्मा अन्यांश्च विशेषपुरुषान् समाश्रित्य संघटिताः। अतस्तत्तद्धर्मेषु तत्तन्महापुरुषाणां जीवनप्रामाण्यविषयको विवादः स्वाभाविक एव। किञ्च कदाचिच्चेन्महा-पुरुषाणां सत्त्वविषयकमैतिहासिकं प्रामाण्यं दौर्बल्यमियात्तर्हि तेषां धर्महर्म्यं नूनं तूर्णं निपतेत् खण्डशः शकलीभवेच्च।

अस्माकं धर्मः शाश्वततत्त्वाश्रितः, न तु पुरुषविशेषसमाश्रितः। अतो वयमेतद्दौर्भाग्यविमुक्ताः। न कस्यापि महापुरुषस्य कस्याप्यवतारस्य वा

वचनाद्धर्मानुष्ठीयते। न तावत्कृष्णवचनाद् वेदप्रामाण्यम्, अपि तु वेदानुगतत्वाद्धि कृष्णवचनस्य प्रामाण्यम्। कृष्णमाहात्म्यमिदं यद्वेद-प्रचारकेषु स एव श्रेष्ठः। एवमन्येषामवताराणां महापुरुषाणां च विषयेऽपि (बोध्यम्)। अस्माकं मूलतत्त्वं तावन्मानवानां पूर्णताप्त्यै तथा मुक्त्यै अपेक्षितं सर्वं हि वेदेष्वाम्नातम्। न कोऽपि नूत्नं किमप्याविष्कर्तुं प्रभवेत्। न वा भवन्तोऽखिलज्ञानलक्ष्यं पूर्णैकत्व-मतिक्रमितुमर्हाः। बहुपूर्वमेव वेदस्तदाविश्चकार; तदतिक्रमणमसम्भवम्। उपलब्धं यदा वेदैः तत्त्वमसीति तदैवाध्यात्मिकं ज्ञानं समाप्तिमितम्। शिष्टं केवलं देश-काल-पात्रानुसारं यथाकालं लोकशिक्षा। परिशिष्टं तावज्जनान् प्रति प्राचीनशाश्वताध्वानुशासनम्। अत एव यथासमयं धर्माचार्याणां महापुरुषाणां चाविर्भावः। गीतायां श्रीकृष्णवचनतो यथा विषयोऽयं फुटं काशितो न तथान्यतः —

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥' इति। अयं ह्यादर्शो भारतीयानाम्।

कि बुद्ध्यते एतेन? एकतः शाश्वततत्त्वानि स्वतःप्रमाणानि, युक्त्यनभ्यधीनानि च। भवन्तु ऋषयो यावन्तो महान्तोऽवतारा वा यावन्तो महिमशालिनः, न तानि (तत्त्वानि) तद्वाक्याश्रितानि। वयमत्रै-तन्निरूपयितुं शक्नुमो यद्भारतीयधर्मस्यैतद्वैशिष्ट्यविशिष्टत्वाद्धि नोऽभि-योगो यद्वेदान्तो हि जगति सार्वभौमो धर्मः; अत्र कारणं नायं कस्यचिदपि व्यक्तिविशेषस्य मतं प्रामाणिकतया स्वीकर्तुमुपदिशति;

केवलं शाश्वततत्त्वमेवोपदिशति। न हि व्यक्तिसम्बद्धं कमपि धर्मं समग्रा मानवजातिरादातुमर्हा। अस्माकं देश एव दृश्यते यन्नैके महापुरुषा अत्र जनिं लेभिरे। किं बहुना, क्षुद्रकेऽपि नगरे दृश्यते विविधजना विविध-महापुरुषान् स्वस्वादर्शत्वेन स्वीकुर्वन्ति। अतः कथं महम्मदः ख्रीष्टो बुद्धो वा—एतादृशः कोऽपि जगतोऽखिलस्यादर्शो भवेत्? कथं वा पुरुषविशेषवाक्यप्रामाण्यान्नीतिविद्याध्यात्मिकतत्त्वं धर्मश्च सत्यत्वेन स्वीक्रियेत? अनपेक्षं हि वैदान्तिकधर्मप्रामाण्यार्थं व्यक्तिविशेषवाक्यम्। मानवानां शाश्वतप्रकृतिरेवास्य प्रमाणम्। अस्याः नीतितत्त्वं मानवजातेः शाश्वताध्यात्मिकैकत्वाश्रितम्। न त्वेकत्वं प्रयत्नेन लभ्यते, अपि तु लब्धमेव। अपरतः पुराकालादेव ऋषयो नोऽवगतवन्तो यज्जगतो भूयिष्ठभागः कमपि व्यक्तिविशेषमभिकाङ्क्षति। जना यं कमपि साकारं व्यक्तिविशेषाश्रितमीश्वरं वाञ्छन्ति। यो हि बुद्धदेवः पुरुषविशेषानु-बद्धेश्वरविरुद्धमतं प्रचचार स एवेश्वरत्वेन पूजितस्तच्छिष्यैस्तच्छरीरत्यागात् पञ्चाशद्वर्षेभ्यः परम्। व्यक्तिविशेषाश्रितेनेश्वरेण प्रयोजनमस्ति। जानीमो वयं ईश्वरस्य वृथाकल्पनापेक्षया एतादृशकाल्पनिकेश्वरा मनुष्यैर्नोपास्याः, प्राणमया ईश्वरा धरायामस्यामस्मास्वेवाविर्भूय निवसन्ति। मनःकल्पिते-श्वरापेक्षया, मनसिजवस्त्वपेक्षया ता ह्यधिकतया पूज्यार्हाः। तथाहि श्रीकृष्णः सुमहान् तव मम च बुद्धिकल्पितेश्वरतः। अस्मन्मनश्चिन्तिता-दर्शेभ्यो बुद्धो महत्तरादर्शो जीवन्नादर्शश्च। अतः सर्वविधान् काल्पनिक-देवान् अतीत्य तो चिराय सर्वैः पूज्यन्ते। अस्मदृषय एतज्ज्ञातवन्तः। अतस्ते भारतवासिभ्यो महापुरुषोपासनायास्तथावतारोपासनायाः पन्थानमपि निर्दिदेशुः। किं बहुना, नः श्रेष्ठावतारेणागादि—

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोऽंशसम्भवम्।।'[1] इति।

यस्मिन्नाध्यात्मिकशक्तेः प्रकाशः, जानीहि तत्राहं वर्ते, अस्मत्तो ह्यस्याः शक्तेः प्रकाशः। यस्मिन्नाध्यात्मिकशक्तेः प्रकाशः, जानीहि तत्राहं वर्ते, अस्मत्तो हि शक्तेरस्याः प्रकाशः।

अनेन हिन्दुपक्षतः सर्वेषां देशानां सर्व एव देवा उपास्या जाताः। हिन्दुर्हि यस्य कस्यापि देशस्य यं कमपि साधुं महात्मानं वा पूजयितुं समर्थः। किं बहुना, वयमसकृत् ख्रीष्टानां चार्चाख्योपसनागृहे महम्मदीयानां च धर्ममन्दिरे उपास्महे। एतद्युक्तमेव। कं वा वयं नैवमुपास्महे? प्रागेवोक्तं नो धर्मः सार्वभौमः, एष हि एतावान् अभिव्यापक आयतश्च यत्स सर्वविधानादर्शान् सादरं ग्रहीतुं शक्तः। जगतीदानीमेव सर्वविधा धर्मा ग्रहीतुं शक्याः। किञ्च, भविष्यति भाविनोऽपि सर्वे आदर्शा अस्माभिर्धैर्येण ग्रहीतुं शक्याः। धर्मास्ते तद्रूपणैव ग्राह्याः। वैदान्तिकधर्मस्तद्बाहू प्रसार्य सर्वानाश्लेष्टुं शक्नोति।

भगवदवतारविषये स्थितिरीदृश्येव। सन्ति केचन गौणा महापुरुषाः। वेदे ऋषिरिति शब्दः शुश्रूयते। इदानीन्तु एष कश्चन सामान्यशब्द एव जातः, ऋषिवाक्यं विशेषप्रामाण्यं धत्ते। एतत्तात्पर्यमस्माभिर्बोद्धव्यम्। ऋषिशब्दार्थो मन्त्रद्रष्टा, यो हि तत्त्वं किमपि ददर्श। प्राचीनकालाद्धि इयं जिज्ञासा—किं तावद् धर्मप्रमाणम्? न तावद्बहिरिन्द्रियेण धर्मस्य सत्यता प्रमीयते। तथाहि ऋषयो जगदुः—'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'[2] इति। मनसा सह वाक्यमपि यमप्राप्य प्रतिनिवर्तते इत्यर्थः। 'न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः'[3] इति। न तस्मिन्

चक्षुर्गन्तुं क्षमं, न वाक्यं, नापि मन इति तदर्थः। सहस्रवर्षाणि यावदृषीणामेतदेवोद्घोषणम्। बाह्यप्रकृतिरात्मनसत्ताविषये ईश्वरस्य च शाश्वतसत्त्वविषये मानवानां चरमलक्ष्यविषये चास्मान् प्रत्युत्तरयितुमसमर्था। मनः सर्वदा परिणमते; सर्वदा प्रवहन्नस्ति तत्प्रवाहः, तद्धि मितं भग्नयोगञ्च। कथं तन्मनोऽनन्तस्य नित्यस्य अखण्डस्य अविभाज्यस्य च शाश्वतवस्तुनः स्वरूपं निर्वेदयेत्? कदापि च नाख्यातुं शक्तम्। किञ्च, अचैतन्याज्जडवस्तुन एतत्स्वरूपोपलब्धिचेष्टायां कृतायां तत्फलं कीदृगशुभं स्यादिति तु इतिहासस्य विदितचरमेव। ननु कुत आयातमिदं वेदोक्तं ज्ञानम्? प्राप्ते तु ऋषित्वे ज्ञानमिदं लभ्यते, न त्विन्द्रियेण। नन्विन्द्रियज्ञानं मानवानां सर्वस्वमिति कस्तावद्वक्तुं प्रभवेत्? अस्माकं जीविते ईदृगपि मुहूर्त्तमायाति, यथा त्यक्तदेहे प्रियजने, प्राप्तायां पीडायां, प्राप्ते वानन्दे कञ्चित्कालं नो मनः स्थिरतामेति। क्वचिद्वा शान्तं सन्मनो बहिर्जगदुज्झित्वान्तः प्रविशति, क्षणाय क्वचित्तदनन्तसत्ताया अपीषद्दर्शनमुपजायते। न तत्र मनो न वा चक्षुर्यातुं शक्नोति। साधारणनराणां जीविते एवं संघटत एव। अभ्यासेन चैषावस्था उन्नयनीया शाश्वतपूर्णान्यूननाभिर्नेया। बहुपूर्वमेवोपलब्धं मानवैर्यन्नायमात्मेन्द्रियेण चैतन्येन वा बद्धः। अवगन्तव्यमस्माभिर्यच्चेत-नानन्तशृङ्खलस्यावयवभूता। न तावच्चैतन्यं सत्तातोऽभिन्नम्, तद्धि सत्तांशभूतम्। ऋषयो ह्यतीन्द्रियज्ञानभूमावात्मानमनुसन्दधिरे। चेतना तावत् पञ्चेन्द्रियपरिच्छिन्ना। आध्यात्मिकजगतः सत्याप्तये मानवैर्नून-मिन्द्रियजगतो बहिर्गन्तव्यम्। किञ्च, सन्ति एतादृशा अपि जना ये पञ्चेन्द्रियेभ्यो बहिर्गन्तुं शक्याः। त एवर्षिशब्दव्यपदेश्या ये आध्यात्मिकसत्यानि साक्षात्कुर्वन्ति। समीपस्थ आसन्दो यथास्माभिः प्रत्यक्षप्रमाणेन गृह्यते

तथा वेदबद्धसत्यतत्त्वमपि। यथासन्दोऽस्माकमिन्द्रियेणोपलभ्यते तथाध्यात्मिकसत्यान्यपि जीवात्मनोऽतिचेतनावस्थायां प्रत्यक्षेणानुभूयते। न तावदृषित्वलाभो देश-काल-लिङ्ग-जातिविशेषाश्रितः। उवाच च वात्स्यायनो निर्भयम्—'एतदृषित्वं न केवलमृषिवंश्यानामार्याणामपि त्वनार्याणां म्लेच्छानामपि साधारणसम्पद्' इति। एतद्धि वेदर्षित्वम्। सदैवास्माभिः स्मर्तव्यो भारतीयधर्मादर्शः। आशासे च यज्जगति अन्याभिरपि जातिभिरयमादर्शः स्मर्तव्यः। तेन तूर्णं ह्रासतामेष्यन्ति धर्मविषयकवादविवादादयाः। न हि शास्त्रपाठेन, न वा मतमतान्तरेण वचनेन, न वा युक्त्या तर्केण च धर्मो लभ्यः। धर्मो हि साक्षात्कर्तव्यः, सर्वैश्चास्माभिः ऋषिभिर्भवितव्यम्। भोः बान्धवाः! यावद्यूयं न ऋषयो भवत, यावच्च नाध्यात्मिकं सत्यं साक्षात्कुरुत, जानीहि तावन्नारब्धं धर्मजीवनम् इति। यावन्नातीन्द्रियानुभूतिद्वारमुन्मुक्तं तावद्युष्माकं समक्षं धर्मो वाक्सार एव, तावद्धर्मलाभाय सन्नद्धाः केवलं, तावत्परोक्षत्वेन विवरणरताः केवलम्।

कदाचिद्बुद्धदेवै र्ब्राह्मणानां केषाञ्चन विवादो जातः। ब्राह्मणा बुद्धदेवस्य समीपे ब्रह्मस्वरूपं प्रतिपादयन्त आसन्। महापुरुषस्तेषु कमपि प्रपच्छ—किं भवता दृष्टं ब्रह्म? जगाद ब्राह्मणः—न, न दृष्टम् (मया)। पुनः पृष्टं बुद्धदेवेन—किं ते पित्रा? न, सोऽपि न ददर्श इत्युवाच ब्राह्मणः। किं भवत्पितामहेन? मन्ये सोऽपि न ददर्श इत्युत्तरितवान् ब्राह्मणः। तदा बुद्धदेव उक्तवान्—भो! बन्धो! भवतः पितृपितामहादयो यं न ददृशुस्तादृशं पुरुषमाश्रित्य कथं भवान् विचारेणान्यान् अभिभवितुं यतते? पृथिव्याः सर्व एवैवमाचरन्ति। वेदान्तभाषया वक्तव्यमस्माभिः—'नायामात्मा प्रवचनेन

लभ्यो न मेधया न बहुना श्रुतेन'[४] इति। न वाग्बाहुल्येन, न बुद्ध्या, न वेदाध्ययनेनात्मा लभ्यः।

पृथिव्याः जातीः सर्वा अभिलक्ष्य वेदभाषया वयमेवं वक्तुं शक्नुमो यन्मुधैव युष्माकं वादविवादः, यमीश्वरं यूयं प्रचारयितुं यतध्वे किं तं दृष्टवन्तः? न दृष्टं चेद्वृथैवायं प्रचारः। किं त्वं कथयसि तदेव न ज्ञायते त्वया। दृष्टश्चेदीश्वरस्त्वया, न विवादः कर्त्व्यः, मुखमेव ते औज्ज्वल्यं विदध्यात्। पुरा ऋषिः कश्चन तत्पुत्रं ब्रह्मज्ञानलाभाय गुरुगृहं प्रेरितवान्, गुरुगृहात्प्रत्यागते तस्मिन् पिता तं प्रपच्छ—किं त्वया अधिगतम्? पुत्रोऽवदत् अधिगतास्तेन नैका विद्या इति। पिता उवाच—न किमपि अधिगतम्। पुनर्याहि इति। पुत्रश्च पुनर्गतवान् गुरुगृहम्। प्रत्यागते तस्मिन् पूर्ववत्प्रपच्छ। पुत्रोऽपि पूर्ववत्प्रत्युत्तरितवान्। पुनरेकवारं प्रेषितः स गुरुगृहम्। प्रत्यागते तस्मिन् तन्मुखमण्डलमासीज्ज्योतिर्मयम्। पिता चोवाच, 'वत्स! अद्य ते मुखं ब्रह्मविन्मुखमिवोद्भासितं दृश्यते।'[५] इति। एवं त्वयापि दृष्टे ईश्वरे ते मुखस्य कण्ठरवस्याकारस्य च परिवृत्तिर्ध्रुवा। किञ्च, तदा नूनं मानवजातिभ्यस्त्वं स्याः मूर्त्तिमती भूतिरूपा। न तदा केनचिदपि त्वं वध्यश्च। इदमेवर्षित्वम्, एष एव नो धर्मादर्शः। शिष्टञ्चान्यत्सर्वं गौणम्, मिथो वार्तालापः, युक्तिविमर्शः, दर्शनं, द्वैतवादः, अद्वैतवादः, ऋषित्वलाभोपायमात्रनिर्देशको वेदोऽपि गौणभूतः। ऋषित्वलाभ एव मुख्यः। वेदव्याकरणज्योतिषादिशास्त्रं गौणम्। सैव परा विद्या यया ज्ञायतेऽक्षरपुरुषः। कृततत्त्वसाक्षात्कारा हि वैदिकर्षयः। ऋषिशब्देन विशेषावस्थाप्राप्ताः पुरुषा एव निर्दिश्यन्ते। अस्माभिः प्रकृतहिन्दुभिरादौ नूनम् ऋषिभिर्भवितव्यम्। ऋषित्वाप्तिर्हि हिन्दूनां मुक्तिः। केषुचिन्मत-

वादेषु विश्वासः, सहस्रमन्दिरदर्शनं, पृथिव्याः सर्वासु नदीषु स्नानं न हिन्दुनये मुक्तिः। ऋषौ मन्त्रद्रष्टरि सत्येव मुक्तिः।

उत्तरकालः पर्यालोच्यते चेद्दृश्यते तदा सकलचेत उद्बोधयितारो महापुरुषाः श्रेष्ठावतारा जनिं लेभिरे। अवतारा ह्यसंख्येयाः। भागवतमते अवतारा ह्यसंख्यकाः। तेषु रामकृष्णौ सविशेषं पूज्येते। पुरा वीरयुगादर्शत्वेन सत्यनिष्ठायास्तथा नीतेः साकारमूर्त्तित्वेन आदर्शतनयत्वेन आदर्शपतित्वेन, आदर्शनृपत्वेन च श्रीरामचरितं चित्रितं महाकविना वाल्मीकिना। भाषया यया महाकविना रामचरितं प्रपञ्चितं नास्ति तदपेक्षया शुद्धा मधुरा सरला च भाषान्या कापि। का कथा सीतायाः? युष्माभिः प्राचीनसाहित्यजातेष्वधीतेष्वपि नान्यत्र एतादृशमन्यत्सीताचरितमेकमाप्येत। अनन्यं हि सीताचरितम्, एतादृक् चरितं सकृदेव भवति चित्रितं, न पुनः कदापि भूतं, नापि कदापि भविष्यति। रामस्तु असकृदेव जनिं लेभे, सीता तु न पुनर्जाता। भारतीयनार्यो यादृश्यो भवन्ति तासामादर्शः, नारीचरितमुपाश्रित्य यावन्त आदर्शाः सर्वे ह्येकस्मात्सीताचरितादुद्भूताः। किञ्च, आर्यावर्तेऽखिले सहस्रवर्षाणि यावत्सा बालबृद्धवनिताभिः पूजिता। महिमशालिनी सीता साक्षात्पवित्रतापेक्षयापि पवित्रतरा, तितिक्षायाश्चादर्शस्वरूपा। आदर्शसीता चिरायैव पूज्या स्यात्। सा हि कोपलवशून्या महादुःखजीवनचारिणी नित्यसाध्वी शाश्वतशुद्धस्वभावा आदर्शपत्नीसमा सीता न केवलं मनुष्यलोकस्य देवलोकस्यापि चिराय जातीयदेवरूपेण पूज्या। वयं सर्वे तच्चरितं सविशेषं जानीमः। सविशदं वर्णनेनालम्। अवधेयमेतद् यद् वेदे पुराणे च नष्टे, विलुप्तिं च गतायामपि संस्कृतभाषायां सीतोपाख्यानं तावत्कालं प्रचलिष्यति यावद् ग्राम्यभाषाभाषिणः पञ्च हिन्दवः

स्थास्यन्ति। सीता हि नो जातेः मज्ञास्वाहिता। प्रत्येकहिन्दुनरनारीणामसृगि सा राजमाना। वयं सर्वे सीतातनयाः। आधुनिकरूपेण नारीणां चरित-निर्माणेहा सीताचरितादर्शाद्भ्रष्टेहा चेत्सा विफलैव स्यात्। किञ्च पश्यामो वयं प्रत्यहमेवैतद्दृष्टान्तम्। भारतीयनारीभिः सीताचरितादर्शमनुसृत्य स्वोन्नतिर्विधातव्या। एष एवानन्यः पन्था भारतीयनारीणामुन्नतये।

इदानीं बालवृद्धवनितानां भारतवास्तव्यानां परमप्रिय इष्टदेव आलोच्यते। तमुद्दिश्य एवैतद्वच्मि यं भागवतकृतावताररूपेणोपवर्ण्य उक्तम्—'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्'[६] इति। विविधभावयुतं तच्चरितमालोचयितुं प्रवृत्तेष्वस्मासु तमुद्दिश्य प्रयुक्तविशेषणानि चिन्तयन्तो वयं साश्चर्या भवेम।

स एकतः सन्न्यासी, गृही च। दृष्टस्तस्मिन् विस्मयकररजःशक्तेर्विकाशः; तथापि आसीत्तस्यापूर्वस्त्यागः। विना गीतापाठं कृष्णचरितमबोध्यम्। कारणं हि स आसीत्तदुपदेशानां मूर्तिमान् विग्रहः। सर्व एव अवतारा आसन् तत्तत्प्रचारितानां मतानां जीवदुदाहरणम्। गीताप्रचारकः श्रीकृष्णश्चिरायैव श्रीमद्भगवद्गीताया विग्रहः, अनासक्तेश्च महादृष्टान्तः। स हि नैकान् नृप-पदमलङ्कारितवान्, परं न स्वयं राजसिंहासनमारूढवान्। यः समग्र-भारतस्यासीन्नेता, यस्य वाक्यान्नृपाः स्वस्वसिंहासनं हेलया त्यक्तुमपि आसन् क्षमाः स्वयं स न कदापि राजसिंहासनमलञ्चकार। बाल्ये गोपीभिः साकं यः क्रीडितवान् स जीवदवस्थायां सर्वदा एवासीत् निर्व्याजः सुन्दरः श्रीकृष्णः।

तज्जीवनस्य स्मर्तव्याध्याय इदानीं मनोमुकुरं मे आयाति यो ह्यतिदुर्बोधः। यावन्न केनचित्पूर्णतया ब्रह्मचर्यमाचर्यते, न च पवित्रताप्यते न तावत्तिद्बोधनेहा विधातव्या। तत्प्रेमकथा स्मर्यते या हि वृन्दावन-

मधुरलीलायां रूपकत्वेनोपवर्णिता। प्रेमामृतपानोन्मत्त एव तद्बोद्धुमर्हः। ननु को वा गोपीप्रेमविरहं बोद्धुं शक्नुयात्, यद्धि प्रेम प्रेम्नश्चरमादर्शभूतम्, वस्त्वन्तरानाकाङ्क्षि, स्वर्गानाकाङ्क्षि, ऐहिकपारलौकिकानाकाङ्क्षि च। भोः बन्धो! अनेन गोपीप्रेम्णैव सगुणनिर्गुणेश्वरविवादसमाधिर्जातः। जानीमो वयं यन्मानवः सगुणेश्वरादुच्छ्रितमननेऽसमर्थाः। वयमेतदपि जानीमो यद्दार्शनिकदृष्ट्या ईश्वरमयजगत्कारणे निर्गुणेश्वरे विश्वासो हि स्वाभाविकः। किञ्च, इच्छत्यस्माकं मनः साकारमेकं वस्तु यद्धि भवेन्नो बुद्धिग्राह्यं, यस्य च पादारविन्दे स्वप्राणानप्यर्पयितुं समर्थाः स्याम। अतः सगुणेश्वर एव मनुष्यमनसश्चरमं मननम्। परं युक्तिस्तु नैतस्मिन् चिन्तने भवति शान्ता। एषोऽतिप्राचीनः प्राचीनतमश्च विवादः, योहि ब्रह्मसूत्रे विचारितः। यमाश्रित्य वनवाससमये द्रौपदी युधिष्ठिरेण साकं विमृष्टवती ईश्वरश्चेत् कश्चन सगुणो दयामयः सर्वशक्तिमान् कथमस्य नरककुण्डसंसारस्य सत्त्वम्? किमर्थं वा स एतत्सृष्टवान्? अथ स कश्चन महापक्षपातीश्वरः। नास्ति अस्य समाधानान्तरम्, केवलं गोपीप्रेमविषयकं यत्पठ्यते शास्त्रे तेनैवास्य समाधानं सम्भवम्। गोप्यः कदापि कृष्णं विशेषितं कर्तुं न प्रभवन्ति। न च ज्ञातुं यतिरे ता यत्स सृष्टिकर्ता, स सर्वशक्तिमान् वेति। ताभिर्ज्ञातं यत्स प्रेममय इति। गोप्यः कृष्णं वृन्दावनकृष्णत्वेनैवागतवत्यः। बहूनां सेनानीनां नेता राजाधिराजः कृष्णस्तेषां समक्षं गोपबालक एवासीत्।

'न धनं न जनं न कवितां सुन्दरीं वा जगदीश कामये।
मम जन्मनि जन्मनीश्वरे भक्तिरहैतुकी त्वयि।।'[७] इति।

—जगदीश, धनं जनः कविता सुन्दरी वा न प्रार्थ्यते मया; ईश्वर, प्रतिजन्म त्वयि मे अहैतुकी भक्तिरस्तु। धर्मस्येतिहासे। अहैतुकी

भक्तिः निष्कामं कर्म चेति नवीनोऽध्यायः। किञ्च मनुजेतिहासे भारतक्षेत्रे प्रशस्यतमस्यावतारस्य कृष्णस्य मुखनिःसृतं सर्वप्रथममेतत् तत्त्वामादृतम्। चिराय महाप्रलोभनधर्मे गतेऽपि नरकभीतेस्तथा स्वर्गसुख-लाभप्रेलोभनस्य सत्वेऽपि अहेतुकी भक्तिः निष्कामकर्म चात्यादर्शयो-रभ्युदयो जातः।

प्रेममहिमवर्णनेनालम्। उक्तवान् वो यद्गोपीप्रेमोपलब्धिर्दुष्करा। अस्मास्ववेम्विधा अपि सन्ति केचन ये अस्याः श्रीकृष्णजीवनलीलायास्तात्पर्यं नावगच्छन्ति। पुनर्वच्मि अहं यदस्मास्वेवम्विधा अपूतचित्ता निर्बोधा अपि विद्यन्ते ये गोपीप्रेममाहात्म्यश्रवणमत्यपूतमित्यपि तर्कयन्ति। तान् प्रति मे वक्तव्यम् आदौ स्वचित्तं शुद्धीकुरुत, एतदपि युष्माभिः स्मर्तव्यं यदेतद्गोपीप्रेम यो वर्णितावान् स नान्यः कोऽपि, स हि व्यासतनय-श्चिरपूतः शुक एव। यावद्धृदि स्वार्थपरता तावदसम्भवं भगवत्प्रेम। तत्तु आपणिककर्म—तुभ्यं किञ्चिद् यच्छामि, प्रभो! त्वं मह्यं किमपि दद्याः। किञ्च, भगवानपि कथयति—नैवमाचरसि चेत्त्वयि प्राप्ते पञ्चत्वे द्रक्ष्यामि। चिराय त्वां दाहयिष्यामि। एषा सकामपुरुषाणामीश्वरविषयिणी धारणा। यावद्बुद्धौ भावा एते राजन्ते तावद्गोपीनां प्रेमजन्या विरहोन्मत्तता कथं बुध्येत लोकैः?

'सुरतवर्धनवर्धनं शोकनाशनं स्वरिततवणुना सुष्ठु चुम्बितम्।
इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम्।।'[८] इति।

—सकृत् सकृन्मात्रं तदधरमधुरचुम्बनं प्राप्यते चेत्, योऽधरस्तया सकृच्चुम्बितः, पिपासा तदीया तुभ्यं बर्धते, दुःखं सकलमवसन्नं तस्य, इतरविषयेभ्यो व्यपगता नस्तदासक्तिः, तदा प्रीतिविषयः केवलस्त्वमेव भवसि।

प्रथमतः — काञ्चनं, नाम, यशः, असत्संसारं प्रति त्यजासक्तिम्। तदैव यूयं गोपीप्रेम अवगमिष्यथ, एतावच्छुद्धं तद्यत्सर्ववस्तुत्यागं विना तज्ज्ञानानुकूलव्यापारो मुधैव। प्रतिमुहूर्तं येषां हृदि कामकाञ्चन-यशोलिप्सानां बुद्बुदः प्रवहन्नस्ति ते हि पुनर्गोपीप्रेम बोद्धुमिच्छन्ति समालोचयन्ति च। कृष्णावतारस्य मुख्योद्देश्यं गोपीप्रेमशिक्षादानम्। किं बहुना, दर्शनशास्त्रशिरोमणिर्गीतापि तदपूर्वप्रेमोन्मत्ततया न तोलनयोग्या। अत्र कारणं गीता साधकाय शनैः शनैश्चरमं लक्ष्यं मुक्तिसाधनमुपदिशति। परमस्मिन् गोपीप्रेम्णि ईश्वररसास्वादोन्मत्तता तथा गभीरप्रेमोन्मत्तता एवास्ति। आचार्यशिष्यौ, शास्त्रोपदेशः, ईश्वरस्वर्गौ इत्येतत्सर्वं तत्र संमिश्रितम्। दरधर्मलिङ्गमपि नास्ति। सर्वमपगतं, प्रेमोन्मत्तता एव वरीवर्ति तस्मिन्। तदा भक्तः सर्वत्र कृष्णमेव पश्यति, नायाति तन्मनसि कृष्णातिरिक्तं सांसारिकमन्यत्किमपि। तदा स सर्वेषु कृष्णं पश्यति, स्वास्यमपि कृष्णास्यमिव पश्यति। किं बहुना, स्वात्मापि कृष्णवर्णरञ्जित इव दृश्यते तेन। महानुभवकृष्णस्यैतद्धि महत्त्वम्।

नापचेयोऽस्माभिः कालो कृष्णजीवनस्य सुतुच्छवृत्तान्तविचारेण। अवलम्बस्व तद्यत् श्रीकृष्णजीवनस्य मुख्यं तत्त्वम्। एतत्सत्यं यच्छ्रीकृष्णस्य जीवनचरिते सन्ति काश्चन ऐतिहासिकविप्रतिपत्तयः, काश्चन मिथ्याकल्पनाश्च। परं नूनमासीत्तस्मिन्नाविर्भूतस्य नूतनभावस्य किमपि बीजम्। यस्य कस्यापि महापुरुषस्य जीवनचरितमालोच्यते चेद्दृश्यते स तत्पूर्ववर्तिभावानां प्रतिध्वनिमात्रम्। पश्यामो वयं यत्सः स्वदेशे तत्समये प्रचलितभावानेव प्रचारितवान्। किं बहुना, आसीत्स महापुरुष उत नेति विषयेऽपि गभीरः

सन्देहः सम्भवेत्। परं श्रीकृष्णोपदेशत्वेन ख्यातं निष्कामकर्म निष्कामप्रेमतत्त्वं जगति अनभिनवमौलिकभाव इति प्रमापयितुं न शक्यते चेत्स्वीकार्यं त्वया यद् ध्रुवं कश्चन जनस्तत्त्वान्येतान्युद्भावितवान्। न चैतानि तत्त्वान्यस्मात् पुरुषात्कस्मादपि गृहीतानीत्यपि न स्वीकर्तुं शक्यते। यतो हि श्रीकृष्णाविर्भावकाले नासन्नेतानि तत्त्वानि नभसि वायौ वा। भगवान् श्रीकृष्ण एवास्य प्रथमः प्रचारकः। तच्छिष्यो वेदव्यास-स्तत्त्वान्येतानि जनेभ्यः प्रचारितवान्। मानवभाषया एव श्रेष्ठोऽयमादर्श आविर्भूतः। यदा प्रविशेदेषोन्मत्ता वो बुद्धौ तदैवावगच्छेत गोपीनां महाभागानां भावम्, प्रेम च कीदृशं वस्तु। युष्माकं दृष्टिमार्गादन्तर्हिते जगति चिन्ताः सर्वा नूनं विलुप्तिं गच्छेयुः। यदा यूयं शुद्धचित्ता स्यात, यदा च न विद्येत युष्माकं लक्ष्यान्तरं, सत्यानुसन्धित्सा, तदैव वो मनसि प्रेमोन्मत्तता समाविर्भवेत्। उपलभ्येत च गोपीनामहैतुकी प्रेमशक्तिः। एतद्धि लक्ष्यम्। लब्धे चैतादृशे प्रेम्णि सर्वमाप्येत युष्माभिः।

वयमिदानीं किञ्चिदधःस्तरमवतीर्य गीताप्रचारकं श्रीकृष्णमालोचयामः। नैकेषामेवम्विधेहा दृश्यते यदश्वानामग्रदेशे शकटसंयोजनव्यापारः। अस्मासु नैकेषामेषा कल्पना यत्कृष्णेन गोपीभिः प्रेमलीला समाचरिता। एषा न किमपि गौरवं धत्ते।

आङ्ग्लेभ्योऽपि नैषा रोचते, अमुकपण्डितेभ्योऽपि नैषा रुचिप्रदा। अतो निक्षिप्यन्तां यमुनावारिणि गोप्यः। कथं वा जीवेत श्रीकृष्ण आङ्ग्लानामनुमतिमन्तरेण? नैव नैव जीवेत्। जीवितुमेव न शक्ष्यति। महाभारते अतिदभ्रमप्रयोजनीयं स्थानं विना न कुत्रापि गोपीनामुल्लेख

आप्यते। यथा द्रौपदीस्तवे तथा शिशुपालभाषणे वृन्दावनस्योल्लेखो दृश्यते।

एते सर्वे हि प्रक्षिप्ताः। आङ्गला यन्नेच्छन्ति तत्सर्वं निक्षिपन्ति। गोपीनां श्रीकृष्णस्य च कथा प्रक्षिप्ता। ये हि आपणिकस्वभावाः, येषां सविधे धर्मादर्श आपणिककर्म तेऽत्र यत्किञ्चित् कर्म संसाध्य स्वर्गं गन्तुं यतन्ते। आपणिकाश्चक्रवृद्ध्या कुशीदमिच्छन्ति। तेऽत्र एवम्विधपुण्य-सञ्चयेन स्वर्गं गत्वा सुखमाप्स्यन्ति। एतद्धर्मादर्शे नास्ति स्थानं गोपीनाम्।

वयमधुना आदर्शप्रेमिकस्य श्रीकृष्णस्य प्रसङ्गं विसृज्य अधःस्तरस्थाः सन्तो गीताप्रचारकस्य श्रीकृष्णस्य कथामालोचयिष्यामः। अत्रापि दृश्यते यत् गीतावन्नास्ति अन्यत्किमपि वेदभाष्यं, न च भविष्यति। भाष्यकृद्भिः सर्वैः स्वमतानुसारं व्याख्यातत्वाच्छ्रुतेरुपनिषदो वा तात्पर्यज्ञानार्जनं सुदुष्करम्। परिशेषे श्रुतिवक्ता स भगवानेव गीताप्रचारकत्वेन समागत्य श्रुत्यर्थं बोधितवान्। इदानीं भारते तथा जगति यथास्य व्याख्यया प्रयोजनं न तथान्येन केनचित्। किं बहुना, गीताव्याख्यानकालेऽपि नैकैर्नावगतं भगवद्वाक्यतात्पर्यम्। किं दृश्यते गीतायाम्? आधुनिकभाष्यकृद्भाष्येषु वा किं दृश्यते? कश्चन अद्वैतवादी भाष्यकार उपनिषद्-व्याख्यायां प्रवृत्तः सन् श्रुतिस्थितानि द्वैतभावात्मकवाक्यानि भित्त्वा छित्त्वा स्वमतानुसारमर्थं प्रतिपादयति। किञ्च, कश्चन द्वैती द्वैतवादी अपि अद्वैतवादप्रख्यापकवाक्यानि भित्त्वा छित्त्वा स्वमतानुसारं द्वैतार्थं निष्पादयति। परं नास्ति गीतायामेवं श्रुत्यर्थविकृतीहा। उवाच च भगवान् एतानि सर्वाणि मतानि एव सत्यानि। जीवात्मा शनैः शनैः स्थूलात्सूक्ष्मं

सूक्ष्मात्सूक्ष्मतरं सोपानमारोहति। एवं क्रमशश्चरमलक्ष्यं पूर्णत्वं प्राप्यते। इत्थं विवृतं वेदतात्पर्यं गीतायाम्। किं बहुना, गीतायां कर्मकाण्डोऽपि उरीकृतः। किञ्च, एतदपि प्रदर्शितं तत्र यदानुषङ्गिकत्वेन कर्मकाण्डो हि मुक्तिसहायः। मूर्तिपूजापि सत्या। सर्वमनुष्ठानादिकं क्रियादिकं च सत्यम्। परं तत्र चित्तशुद्धिविषये सर्वैः सावधानैर्भाव्यम्। हृदयं चेच्छुद्धमकपटं, उपासना च सफला तर्हि नूनं चरमलक्ष्याप्तिर्ध्रुवा। किञ्च, उपासनपद्धतयः सर्वा एव सत्याः। अन्यथा कथमेताः सृष्टाः? केषाञ्चिदाधुनिकानां नये कैश्चिद् दुष्टैः कपटैः विविधा धर्मा सम्प्रदायाश्च प्रवर्तिताः। ते हि अर्थलिप्सया धर्मानेतान् सम्प्रदायान् च ससृजुः। एतत्तत्त्वं सम्पूर्णतयालीकम्। आपातदृष्ट्या तेषामुक्तयो युक्तिरूपा अपि न सत्याः। न ते तथा सृष्टाः। जीवात्मनः स्वभावतः धर्मपिपसाचरितार्थाय विविधसम्प्रदायगतमनुष्याणां तेषामभ्युदयः। तद्विरोधेनालम्। उपगते तत्प्रयोजने तेऽपि विलुप्तिं ध्रुवं गमिष्यन्ति। अतस्तेषां सति असति वा समालोचिते, विहितेऽविहिते वा तद्विरोधे ते तु स्थास्यन्ति। असिना भुशुंडिना रक्तस्त्रोतसाद्रितायामपि धरायां सति प्रयोजने प्रतिमापूजा प्रचलिष्यति एव। विविधा अनुष्ठानपद्धतयो धर्माश्च चिराय स्थास्यन्ति। किञ्च, श्रीकृष्णोपदेशाद्धि एतेषां प्रयोजनं नः समक्षं सुष्ठु प्रतिभाति।

श्रीकृष्णतिरोभावात्परमेव भारतेतिहासे प्रारब्धः कश्चन शोच्योऽध्यायः। गीतायामेव दूरागतध्वनिरिव सम्प्रदायानां मिथो विरोधकोलाहलः कर्णकुहरं प्राविशत्। किञ्च, विरोधं तं निर्वर्त्तयति मध्यस्थः सन् श्रीकृष्णः। स उक्तवान्—'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।' इति।—यथा सूत्रे ग्रथिता मणिगणाः तथैव हि सर्वे प्रोताः।

तत एव शृण्मः साम्प्रदयिकविरोधस्य दूराच्छ्रुतमस्फुटध्वनिम्। भगवदुपदेशेन कञ्चित्कालं विवादे मन्दीभूते समन्वयः शान्तिश्च समागतः, परं पुनरारब्धो विरोधः। न केवलं धर्ममतमाश्रित्य जातिमाधारीकृत्यापि जातोऽयं विवादः। अस्माकं समाजस्य सबलाङ्गयोर्ब्राह्मणक्षत्रिययोर्विवादः प्रारब्धः। सहस्रवर्षाणि यावद्भारते प्रवहतो महतस्तरङ्गस्य सर्वोच्चचूडायां महामहिममयमूर्तिमेकां पश्यामो वयम्। स हि गौतमः शाक्यमुनिः, नान्यः। वयं तमीशावतारत्वेन पूजयामः। आसीत् अदृष्टचरः स निर्भीको नीतितत्त्व-प्रचारकः। स कर्मयोगिनां श्रेष्ठः। एवं प्रतीयते यत्स कृष्ण एव स्वशिष्यत्वेन स्वमतानि कार्यरूपेण परिणमयितुमाविर्भूतः। पुनः सा भगवद्गीतोक्ता वाणी उच्चारिता—'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इति; अस्य धर्मस्यात्यल्पमनुष्ठानमपि महाभयात् रक्षति। 'स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्' इति; स्त्रियो वैश्याः तथा शूद्राः परमगतिं लभन्ते। श्रीकृष्णस्य दम्भोलितुल्या महतीयं वाणी समेषां बन्धनं शृङ्खलमुन्मुमोच, उद्घोषयति च समेषां परमपदलाभाधिकारम्। 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः। निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः।।' इति; येषां मनः साम्ये अवस्थितं तेऽत्रैव संसारं जितवन्तः, ब्रह्मसमभावापन्नाः निर्दुष्टास्ते ब्रह्मणि अवतिष्ठन्ते! 'समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्। न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्।। इति ; परमेश्वरं सर्वत्र समतयाऽनुभवन्नात्मानं न हिनस्ति, आत्महिंसाशून्यः सन् परमगतिं लभते।

गीतोपदेशस्य जीवदुदाहरणमुपस्थापयितुं तथा कार्यरूपेण परिणमयितुं गीतोपदेष्टा एवान्यरूपेण मर्त्यधाम्नि आविर्बभूव। एष हि शाक्यमुनिः।

एष हि दुःखिदरिद्रान् उपदिदेश। सर्वेषां कृते देवभाषां परित्यज्य साधारणभाषया उपदिदेश सः, राजसिंहासनं हित्वा दुःखिदरिद्रभिक्षुकैः उवास, द्वितीयरामवच्च चण्डालं वक्षसि परिषस्वाज।

विदितचरमेवैतद्यत्तस्य चरितं तथा प्रचारकार्यमासीन्महत्। परमासीदस्मिन् प्रचारकार्ये कश्चन महान् प्रमादः। तत्प्रभावोऽद्यापि अस्माभिः अनुभूयते। नास्ति प्रमादो भगवतो बुद्धदेवस्य; स हि महामहिममयः परमः पूतश्च। दुःखविषयोऽयं यद् बौद्धधर्मप्रचारादसभ्या अशिक्षिता जातय आर्यसमाजं प्रविष्टा अपि बुद्धदेवप्रचारितानुत्तमादर्शान् स्वात्मीकर्तुमसमर्थाः। जातय एतास्तासां विविधकुसंस्कारैर्विकृतोपासनापद्धतिभिरार्यसमाजं प्रविष्टाः। कञ्चित्कालं जातयस्ताः सभ्या जाता इवेति मन्यते। किन्तु शताब्द्याः परमेव तत्पूर्वपुरुषप्रचारितां सर्पभूताद्युपासनामाचरितुमारब्धास्ते। एवं समग्रं भारतं कुसंस्कारस्य लीलाक्षेत्रं सञ्जातम्। प्रथमतो बौद्धाः प्राणिहिंसां निन्दन्तो द्विषन्तो वैदिकयज्ञविरुद्धा जाताः। पुरा प्रत्येकं गृहेषु यज्ञा एते अनुष्ठीयमाना आसन्, गृहकोणेषु यज्ञकुण्डे आसीदग्निः प्रोज्ज्वलितः। एष आसीदनुष्ठानाडम्बरः। बौद्धानां प्रचाराद् यज्ञास्ते लुप्ताः। तत्परिवृत्तौ बृहदाकाराणि मन्दिराणि, समृद्धा अनुष्ठानपद्धतयः, आडम्बरप्रियाः पुरोहितास्तथा सम्प्रति दृश्या आचारा नवीने भारते आविर्भूताः। बुद्धविषये पण्डितम्मन्यानां केषाञ्चिद् ग्रन्थेषु पठ्यते आसीद् बुद्धदेवो ब्राह्मणानां प्रतिमाध्वंसकः। न ते जानन्ति यद् बौद्धधर्म एव भारते पौरोहित्यं प्रतिमापूजां च सृष्टवान्।

वर्षाद् वर्षद्वयाद्वा प्राक् केनचिद्रुशीयमहानुभवेन लिखितमेकं पुस्तकं यत्र तेन प्रतिपादितं यदाविष्कृतं तेन ख्रीष्टदेवस्याभिनवं जीवन-

चिरतमेकम्। तत्रोक्तश्च तेन यत् ख्रीष्टदेवो ब्राह्मणेभ्यो धर्मशिक्षार्थं जगन्नाथमन्दिरं जगाम। परं स तेषां संकीर्णतायां मूर्तिपूजायां च निर्विण्णः तिब्बतवास्तव्यलामाख्यान् जनान् उपसृत्य तदुपदेशसिद्धः सन् स्वदेशं प्रत्यागतः। ये भारतेतिहासं लेशमात्रमपि जानन्ति तेषां समीपे प्राग्विवृत्यैतत्प्रमाणितं यत्पुस्तकमेतत् सम्पूर्णतया प्रतारणम्। अत्र कारणं जगन्नाथमन्दिरं तावत्प्राचीनमेकं बौद्धमन्दिरम्। तत्तथान्यानि बौद्धमन्दिराणि अस्माभिर्हिन्दुमन्दिरीकृतानि। एवं बहु कृतमस्माभिः। एष हि जगन्नाथ-मन्दिरेतिहासः। किञ्च, तत्र नासीत् कोऽपि ब्राह्मणः। परमुक्तं तत्र यीशुख्रीष्टस्तत्र ब्राह्मणेभ्य उपदेशादानार्थमागतवान्। अस्माकं रुशीयमहाभागः विशिष्टः कश्चन प्रत्नतात्त्विक एवैतदुक्तवान्।

समाचरितेऽपि सर्वेषु दयाधर्मे, प्रचारितेऽपि नीतितत्त्वे, सत्यपि आत्मा नित्य उत नेति विचारे बौद्धधर्मप्रासादश्चूर्णविचूर्णो जातः। शिष्टभागस्त्वतिवीभत्सः। बौद्धधर्मपतनफलवर्णने नास्ति मे समय इच्छा वा। बौद्धधर्मावनतौ हि वीभत्सका अनुष्ठानपद्धतयः, अतिभयानका असभ्या ग्रन्थग्रामा मनुष्यहस्तान्मनुष्यमस्तिष्काद् बहिरागताः इति कल्पयितुं न पार्यते; अतिभीषणा पाशविका अनुष्ठानपद्धतयो धर्मानाश्रिता अवनत-बौद्धधर्मस्य फलरूपाः।

न च तदापि भारतस्य जीवितशक्तिर्विनष्टा। अत आविर्बभूव स भगवान्। निजगाद यः —

‘यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।।’ इति

—स आविर्भूतः। तदाविर्भावो दाक्षिणात्ये। आसीत्स ब्राह्मणयुवा, यत्सम्बन्धिनी षोडशवर्षदेशीयः स युवा सर्वान् ग्रन्थान् प्रणिनायेति रूढिर्लोकेषु प्रचलति। अनन्यप्रतिभाधरस्य शङ्कराचार्यस्ययामभ्युदयो जातः। षोडशवर्षीयबालकग्रन्थविरचनमद्यापि आधनिकजगति सुतरां विस्मयतामावहति। सोऽपि आसीद्विस्मयजनकः। ईप्सितवान् च स समग्रं भारतं प्राक्कालीनपवित्रभावमुपगमयितुम्। परमवधेयं यदासीत्तत्सुबृहत् सुकठिनश्च कार्यम्। आलोचिता च तदानीन्तनभारतावस्था। यूयं यानि भीमाचरणानि संस्कर्तुं यतमानाः भवथ तानि बौद्धधर्मपतनयुगादेवागतानि। तातार, बेलुचि इत्यादि विकृता जातयस्तज्जातीयाचारसहिता भारत-गत्यास्माभिः सम्मिश्रिताः। एवमस्माकं जातीयजीवनमपि पाशविकाचारैः कलुषितम्। दायत्वेन स ब्राह्मणयुवा बौद्धेभ्य एतदेवाप्तवान्। ततोऽद्यापि भारतेऽवनतबौद्धधर्माद्विदान्तविजयः प्रचलन्नस्ति। न चास्ति तत्समाप्तिः। महान् दार्शनिकः शङ्कराचार्य आविर्भूय दर्शितवान् यद् बौद्धधर्म-वेदान्तयोर्नास्ति कश्चन प्रभेदः। परं तदुपदेशतात्पर्यमनवगम्यैव पति-तास्तच्छिष्याः। किञ्च, आत्मेश्वरसत्तामस्वीकृत्यैव नास्तिका जाता इत्येतत्प्रदर्शितमाचार्यशङ्करेण। तदा बौद्धास्तत्प्राचीनधर्मं प्रत्यागताः। परं तदभ्यस्तनियमानाम् अनुष्ठानपद्धतीनां च का दशा स्यादित्यासीत्प्रश्नः।

तस्मिन् क्षणे समाविर्भूतो महानुभवः रामानुजः। शङ्कर आसीन्महामनीषी। परं नासीत्तद्धृदयं तन्मस्तिष्कानुरूपम्। रामानुज-हृदयमासीच्छङ्कारहृदयादुदारम्। पतितदुःखादुद्विग्नं तद्धृदयम्। अनुभूतश्च प्रतिमर्म तद्दुःखम्। स काले काले प्रचलिता अनुष्ठानपद्धतीः संस्कृत्य

मनुष्याणां प्रयोजनानुसारं तास्तथा नूतना अनुष्ठानपद्धतीरुपासनापद्धतीश्चोपदिदेश। परं तेन ब्राह्मणात् चण्डालं यावत् समेषां कृते उत्तमाध्यात्मिकोपसनामार्ग उपदिष्टः। इत्थमासीद्रामानुजप्रचारकार्यम्। तत्प्रचारप्रभावतरङ्गश्चतुर्दिक्षु विततः सन् आर्यावर्तं स्पृष्टवान्। तत्र केचनाचार्यास्तत्प्रभावप्रभाविताः सन्तः कार्यं कृतवन्तः। एतत्सर्वम् बहुदिनेभ्यः परं महम्मदीयशासनकाले संघटितम्। आधुनिकार्यावर्तवास्तव्यानामाचार्याणां श्रीचैतन्य एव श्रेष्ठः।

रामानुजसमयाद्धि विशेषोऽयं परिलक्ष्यते यत्तत एव सर्वेभ्यो धर्मद्वारमुन्मुक्तम्। आचार्यशङ्करात्पूर्ववर्तिनां तथारामानुजाचार्योत्तर-वर्तिनामासीदयमेव मूलमन्त्रः। शङ्करो हि वर्जनस्वभाव इति केषाञ्चिन्मतम्। परं न तद्ग्रन्थे तथा किमप्याप्यते येन तत्सङ्कीर्णता प्रकाश्यते। भगवतो बुद्धदेवस्योपदेशा यथा विकृतास्तच्छिष्यैस्तथा शङ्करोपदेशानां तच्छिष्याबोध्यत्वात्तत्र दोषा आरोप्यन्ते। परं नास्ति तत्र शङ्करदोषः।

इदानीमुत्तरभारतमहापुरुषं श्रीचैतन्यमाश्रित्य किञ्चिदुक्त्वा विरमिष्यामि। आसीत्स गोपीप्रेमोन्मत्तभावादर्शः। आसीच्चैतन्यदेवः स्वयं ब्राह्मणः। स युक्तिनिष्ठे पण्डितकुले जनिमाप। न्यायाध्यापकः स तर्केण पण्डितान् पराजित्य दिक्षु ख्यातकीर्तिर्जातः। आबाल्यमेव ज्ञातं तेन यद् प्रतिस्पर्धैव जीवितस्य परमश्चरमश्चादर्शः। स्वजीवितञ्च परिवर्तितं कस्यचिन्महापुरुषसंश्रयात्। परितत्याज च वादानुवादं तर्कन्यायाध्यापनाम्। जगतीह भक्तेः श्रेष्ठाचार्याणामन्यतमः प्रेमोन्मत्तः श्रीचैतन्यः। तद्भक्तितरङ्गस्रोतसा प्लावितो वङ्गदेशः; प्रवाहितश्च शान्तिवारि समेषां चेतःसु। अमितमा-

सीत्तत्प्रेम। पुण्यवान्, पापः, हिन्दुः, महम्मदीयः, पवित्रः, अपवित्रः, पतित इत्येते सर्वे आसन् तत्स्नेहप्रापकाः। सर्वांश्च सोऽनुजग्राह। कालप्रभावात्तत्प्रवर्तितसम्प्रदायस्यावनतौ सत्यामपि तत्सम्प्रदायो दरिद्र-दुर्बल-पतित-जातिसमाजच्युतानामाश्रयस्थलम्। परमेतत् स्वीकार्यं यद् दार्शनिकसम्प्रदायेषु एव वयं पश्यामोऽद्भुत उदारभावः। शङ्करानुयायिनां न कोऽप्येतत्स्वीकरोति यद्भारतसम्प्रदायेषु नास्ति कोऽपि प्रभेदः। परं जातिविषये शङ्करस्येष्टो वर्जनभावः। जातिभेदप्रश्ने प्रत्येकं वैष्णवाचार्याणामुपदेशे दृश्यते उदारता। परं धर्मविषयकं तन्मतमतीव सङ्कीर्णम्।

आसीच्छङ्करस्य महन्मस्तिष्कं, रामानुजचैतन्ययोरासीद् बृहद्धृदयम्। तत आसीदपेक्षित एवम्विधमहापुरुषो यस्य हृदयं तथा मस्तिष्कं स्यात् सुबृहत्। आसीद्य एकतः शङ्करस्य महत्या मेधायाश्चैतन्यस्य च बृहतस्तथानन्तस्य हृदयस्य अधिकारी, योऽदर्शयद् यत्सम्प्रदायाः सर्व ईश्वरशक्तिप्रेरिताः, सर्वेषु च राजत ईश्वर इति द्रक्ष्यति यः, यद्धृदयं भारतवास्तव्येभ्यस्तथा तद्बहिःस्थेभ्यः दरिद्र-दुर्बल-पतितेभ्यः क्रन्दति, यन्महती बुद्धिरुद्भावयिष्यति तत्तत्त्वनिचयं, यद्भाविनि भारतानां तद्बहिः-स्थानाञ्च सम्प्रदायानां समन्वयं साधयिष्यति तथा साश्चर्यसमन्वयेन हृन्मस्तिष्कसामञ्जस्यसम्पन्नं सार्वभौमधर्ममेकं प्रकाशयिष्यति च। एतादृक् कश्चन महापुरुषः समाविर्भूतः, तच्चरणयोरुपविश्य च शिक्षादानसौभाग्यं मे जातम्।

एवम्विधपुरुषस्याविर्भावकालः समायातः, आसीच्च तदाविर्भावेन प्रयोजनम्। अद्भुतश्चायं विषयो यत्तज्जीवनवृत्तमेवम्विधं नगरं निकषा

संघटितं यो हि भारतनगरान्तरापेक्षयाधिकतयासीत्पाश्चात्त्यभावोन्मत्तः। नासीत्तस्य ग्रन्थनिष्ठा कापि विद्या, महामनीषी सन्नपि स्वनाम लिखितुमनर्ह आसीत्सः। परं सर्वे अस्माकं विश्वविद्यालयस्योपाधिवन्तो विद्वांसो तं महामनीषित्वेन निर्दिदेश। अद्य रात्रौ वः समीपे नास्ति तद्विषयकं किमपि वक्तव्यम्। अतोऽद्य भारतीयमहापुरुषाणां पूर्णप्रकाशस्वरूपस्य युगाचार्यस्य महात्मनः श्रीरामकृष्णस्य नाममात्रमुल्लिख्य विरतिं लेभे। महापुरुषस्य तस्योपदेशा अद्यत्वे मत्कृते सविशेषं कल्याणप्रदाः। तन्महापुरुषान्तःराजमाना ऐश्वरिकशक्तिरस्माभिर्लक्ष्या। दरिद्रब्राह्मणसूतोऽयं वङ्गदेशस्याज्ञतायामपरिचितायां कस्याञ्चित् पल्ल्यामाविर्बभूव। अद्य तु इउरोपीयप्रदेशे आमेरिकाप्रदेशे च लक्षाधिका जनाः सचन्दनपुष्पैस्तमर्चयन्ति अर्चयिष्यन्ति। कोऽर्हस्तस्येच्छां ज्ञातुम्? हे भ्रातरः! न चेद् दृश्यते विधातृप्रभावोऽत्र नूनं यूयमन्धाः, जन्मान्धा एव। प्राप्ते युष्माभि-रालोचनावसरे यथासमयं वः समक्षं विषयमिमं सविशदं प्रतिपादयिष्यामि। अधुनैषा हि विवक्षा यदेकमपि यथार्थं तत्त्वं मदास्यनिःसृतश्चेत् तत्तस्यैव, तस्यैव वाक्यम्। किञ्च अनृतं भ्रान्तिमत् मनुष्यजातेरशुभं किमपि कथितं चेत् तत्सर्वं ममैव। तदर्थमहमेव पूर्णतयानुयोज्यः।

## पादटीका

१. श्रीमद्भगवद्गीता १०.४१।

२. तैत्तिरीयोपनिषद् २.४।

३. केनोपनिषद् १.३।

४. कठोपनिषद् १.२.२३।

५. तुल्या छान्दोग्योपनिषद् ४.९.२।

६. श्रीमद्भागवत १.३.२८।

७. शिक्षाष्टकम् - श्रीश्रीचैतन्यचरितामृतम्।

८. श्रीमद्भागवत १०.३१.१४।

# पत्रावलिः

५४१ डियारवर्ण एभिनिउ,
शिकागो,
१८९४ आङ्ग्लाब्दे मार्चमासि तृतीये दिवसे

प्रिय किडे,

विश्वासो विस्मयकरोऽन्तर्दृष्टिस्वरूपः स एव जनानां परित्राणाय अलम् इति एतावत् भवता सहमतोऽहमस्मि परन्तु तत्र अग्रगतिप्रतिबन्धकोन्मत्ततोपजननस्य आशङ्का अस्ति।

ज्ञानमतीव समीचीनम्, परन्तु तत्र तस्य नीरसपाण्डित्ये पर्यवसानस्य शङ्का वर्तत एव। प्रेम भक्तिश्च वृहत् महच्च। परन्तु व्यर्थभावावेगे प्रकृतार्थो नाशं गतः। सर्वेष्वेतेषु अविरोधोऽपेक्षितः। एतादृशसमन्वयमूर्त्तिरासीत् रामकृष्णः। किन्तु महापुरुषः एवंविध कदाचित् प्रादुर्भवति। तथापि तस्य जीवनमुपदेशसकलम् आदर्शस्वरूपेण पुरतो निधाय अग्रेसरामो वयम्। अस्मासु कोऽपि स्वतन्त्ररूपेण तथाविधं निरतिशयमुत्कर्षमधिगन्तुं चेत् न शक्नुयात्, तथापि उभयोर्मावविनियमेन भारसाम्यविधानेन सामञ्जस्यसंस्थापनेन अभावपरिपूरणेन च साकल्येन सा पूर्णता चरितार्थाय भवेत्। एतेन प्रत्येकं जीवनेषु समन्वयभावोद्गमो भवितुं नार्हेत्, तथापि कतिपयजनेषु यः समन्वयो जातः स नूनमितरप्रचलितधर्ममतेऽग्रगतिं लभेतेत्यत्र शङ्कालवोऽपि न स्यात्।

एकचित्ततया वृणवाम धर्मस्य साफल्यनयनम्, तथापि सङ्कीर्ण-सम्प्रदाभावनातो दूरं स्थातव्यम्। असाम्प्रदायिकः सम्प्रदाय इत्यस्माभिर्भाव्यम्। सम्प्रदायनिष्ठोपकारा यथा लप्स्यन्ते तथैव पुनः सार्बभोमधर्मगतोदार-भावोऽपि प्राप्स्यते।

यद्यपि ईश्वरः सर्वगतस्तथापि मनुष्यवृत्त्या तस्याभिव्यक्तिर्नेतव्या। श्रीरामकृष्णनिभमेतादृशोन्नतचारित्र्यं कदापि कस्मिन्नपि महापुरुषेऽ-दृष्टचरम्। अतस्तमेव केन्द्रे निधाय वयं संहता भवेम, तथापि प्रत्येकमेव यथामति देवरूपेण परित्राणकर्त्तृरूपेण आचार्यरूपेण आदर्शपुरुषरूपेण महापुरुषरूपेण वा तं वरितुं शक्नुयात्।

न वयं सामाजिकं साम्यमतं वैषम्यमतं वा उपदिशामः; तथापि एतन्निर्दिश्यते यत्, श्रीरामकृष्णसविधे सर्वेषामधिकाराः समाना एव, पुनः तच्छिष्येषु कस्मिन् मते कार्ये च पूर्णा स्वाधीनता प्राप्स्यते तत्रैवाभिनिवेश इति दृष्टम्। स्वभावनया भावयतु समाजः।

न वयम् ईश्वरवादिनं, न वा सर्वेश्वरवादिनं, न बहुदेववादिनं, न वा ब्रह्मैकतत्त्ववादिनं, न वा निरीश्वरवादिनं परिहर्तुमीहामहे। किन्तु औदार्येण तथा गाम्भीर्येणोपगूढं चारित्रं शिष्यत्वस्य केवलं निरूप्यम् इत्यवधेयम्। इतरानिष्टासाधके आचारे व्यवहारे चरित्रसाधने तथा पीतौ अशितौ नैतिकता नाभीप्सिता। स्वविचारणायै आस्था प्रदेयेति केवलमनुरुध्यन्ते जनाः। उन्नतिहानिकरं पतनसाधकं कर्मैव पापमधर्मो वा, अन्यत उन्नतस्य समन्वयभावापन्नस्य च सहायो धर्मः। ततः स्वोपयोगिनः स्वसहायकस्य च मार्गस्य ग्रहणे अनुसरणे च सर्वेभ्यः

स्वातन्त्र्यम् अस्माभिः प्रदीयते; तद्यथा मांसभोजनं कस्मैचिद् उपयुज्यते, कस्मैचित् फलाशनं सङ्गच्छते। स्वातन्त्र्यं सर्वेषाम् अभिनन्दनीयम्। परन्तु एकस्य कर्तव्यमन्येन अनुसरणं क्षतिप्रदम्। न कस्यापि कश्चना-धिकारो यदपरस्मै गालिः दास्यते, स्वमते अपरानयनोद्योगपारम्पर्यं चेति दूरमास्ताम्। पत्नी कस्मैचित् कल्याणाय कल्पते कस्मैचित्तु सा साक्षाद् क्षतिप्रदा। परन्तु विवाहितः शिष्यः भ्रान्त इति कथने नास्यधिकारः अविवाहितशिष्यस्या। सहसा स्वमते तस्यानयनचेष्टा दूरतो गच्छतु।

सर्वे जीवा ब्रह्मस्वरूपा इति नो विश्वासः। प्रत्येकं जीवात्मा मेघावृतः सूर्य्य इव वर्तते। परस्परभेदः सूर्योपरि मेघावरणस्य कुत्रचिद् घनत्वं क्वचित्तनुत्वमिव भासते विदिततयाऽविदिततया वा एष एव भेदः सर्वधर्माणां मूलस्वरूप इति विश्वस्यतेऽस्माभिः। पुनः कायिके मानसे आध्यात्मिके क्षेत्रे वा मनुष्योन्नतेः सामग्रिकेतिहासस्यायं सारः—एक एवात्मा विविधेषु स्तरेषु प्रकाशते स्वयमिति।

अयं सारो वेदानामिति नो विश्वासः। विश्वस्यते ईश्वरभावेन परस्परश्चिन्तनीयस्तथाऽऽचरणीयः, घृणानिन्दानिष्टसाधनेभ्यो दूरं स्थातव्यम्। नैतत् करणीयं केवलं सन्न्यासिनः अपि तु सर्वेषां मनुष्याणामेव।

नात्मनि जातिभेदो लिङ्गभेदो वा वर्तते, न वा अपूर्णता आस्ते। आत्मनि लिङ्गसम्प्रदायजातिभेदोऽस्तीत्यमाम्नातं वेददर्शनपुराणतन्त्रेषु इति नो विश्वासः। एवं ये ब्रुवन्ति समाजसंस्कारविषये धर्मोऽकिञ्चित्करः, तैः सह न ऐकमत्यमिति। परन्तु तेऽपि अस्माभिः सह सहमताः स्युः —सामाजिकविधानप्रदाने जीवेषु वैषम्यप्रदर्शने यथाऽधिकारहीनो धर्मो भवेत् तथैव कल्पनाप्रसूतं भयानकं वैषम्यं स नाशयेदिति। उच्येत चेत्

वैषम्यावलम्बनेनान्तिमे साम्यमैक्यञ्च लप्स्येत तदैवं प्रतिपत्स्यामः—धर्माश्रयेण प्रोक्तानि पूर्वोक्तवचनानि, पौनःपुन्येन स एव धर्मो निर्दिशति 'पङ्केन पङ्कस्य प्रक्षालनमसम्भवि' इति। वैषम्येन साम्यगमनं कथम्—अन्यायेन न्यायसाधनमिव।

अतः सिद्धातितमेवं—धर्मीयानुमोदने सामाजिकविधानानि समाजस्य नानासंघातैरुत्पन्नानि। धर्मीया महती भ्रान्तिः किल—सामाजिकविषयेऽनुप्रवेशं स्वयं संसाध्यानन्तरं चातुर्य्येण तं खण्डयित्वा समाजसंस्कारसाधनं धर्मस्याविषय इति शंसति। सत्यमेतत्। अधुना प्रयोजनमेतत्—समाजसंस्कारं न साधयतु धर्मः, अतो वचनं प्रसरति धर्मो न कदापि समाजविधिप्रदाता भवेत्। अन्याधिकाराद्वीतचिन्तो भव, स्वसीमान्तर्वर्ती विद्यस्व—तदा सर्वं सुसमञ्जसं स्यात्।

धर्मीयानुमोदनसमाश्रयेण अर्थनैतिकपरिस्थितेरानुगत्या समाजविधयः सृष्टाः। सामाजिके विषयेऽनुप्रवेशः धर्मस्य विशेषत्वेन मन्तव्यः। अधुना तु स्वविरोधमुपस्थाप्य धर्मश्चातुर्य्येण कथयति न हि धर्मेण समाजसंस्कारः करणीय इति। सम्यगेतत्। धर्मो न समाजसंस्कारकः स्यादिति अभिप्रेतमस्माकम्। एतदपि वयं ब्रूमः, समाजोऽपि धर्मनीतिविधाने न प्रयतेत। स्वपरिधिर्नातिक्रमणीयः। सर्वं समीचीनं स्यात्।

१. मनुष्येषु अन्तर्निहितपूर्णताया प्रकाश एव शिक्षा।

२. मनुष्येषु सततं विद्यमानस्य ब्रह्मत्वस्य बहिःप्रकाशो धर्मः।

अत उभयत्रैव आचार्यस्य कर्तव्यं मार्गसमुपस्थितविघ्नापहारकत्वेन। यथा अहं सदा वच्मि, अपरस्याधिकारात् पराङ्मुखो भव तदैव सर्वं

समीचीनं भविष्यति। मार्गशुद्धिसम्पादनमेव अस्माकं कर्तव्यम्, अवशिष्टं विधेर्विधानम्।

युष्माभिः पुनःपुनश्चिन्त्यते, धर्म आत्मविषयपर एव, सामाजिको विषयो न तस्य क्षेत्रम् तदा पूर्वकृतापकर्मणा एतत् पूर्णतः प्रयोज्यम् इति भवद्भिः स्मरणीयम् इति। एतद् यथा कश्चन जनः प्रसह्य कस्यापि सम्पदमधिकरोति, वञ्चितो यदा तस्य विषयं पुनरुद्धर्तुं यतते तदा प्रथमो जनः सानुनासिकं घोषयति उच्चैः उपदिशति च मनुष्याधिकारः कियान् पूत इति।

समाजस्य प्रत्येकसूक्ष्मविषये पुरोहितानामन्याकाङ्क्षितविधिप्रदानेन किम्? तद्वशात् अधुनापि क्लिष्टा जायन्ते लक्षशो जनाः।

अपि भवद्भिः मांसाशिनः क्षत्रिया प्रसज्यन्ते? मांसाशिनो न वा, हिन्दुधर्मे यत् किमपि महत् सुन्दरञ्च विद्यते क्षत्रिया एव तस्य स्रष्टार आसन्। के तावद् आसन् उपनिषदः द्रष्टारः? क आसीद् रामः? को वा आसीत् कृष्णः? कश्चासीद् बुद्धः? के वासन् जैनतीर्थङ्कराः? यदा क्षत्रिया आसन् धर्मस्य उपदेष्टारस्तदा ते जातिवर्णनिर्विशेषतया सर्वेभ्यः इमं ददुः। यदा पुनर्ब्राह्मणेन किमपि लिखितं तदा अन्ये सर्वविधाधिकारेभ्यो वञ्चिताः। निर्बोध, गीतां व्याससूत्राञ्चाधीष्व, अथवाऽ-न्यस्मात् श्रोतुमर्हसि। गीतायां सर्वजनानां सर्वनारीणां सर्वजातीनां सर्ववर्णानाञ्च कृते मार्गाः उन्मोचिताः। व्यासस्तु वेदानां तथा स्वकपोलकल्पितव्याख्यानञ्चकार येन भाग्यहताः शूद्रा वञ्चिताः। किमीश्वरः युष्मादृशो भीतो मूर्खश्च येन मांसखण्डमात्रेण तस्य कृपातटिनीप्रवाहः

शुष्येत्? तथात्वे तस्य मूल्यं किमपि नास्ति। आस्तां लघ्वी कथा। कया रीत्या युष्माकं चिन्ता नियमिता भवेत्, दत्तकतिपयसङ्केतमेतत् पत्रम्।

मत्तो न किमपि आशास्व। परन्तु यथा अहं त्वां लिखितवान् आख्यातवांश्च, मम दृढ़विश्वासः भारतं भारतीयेनैव रक्षितव्यमिति। अतो वच्मि, हे मातृभूमेः युवानः, युष्मासु कतिपयजना किमस्मिन् नवीने भगवद्रामकृष्णादर्शे उन्मत्तप्राया भवितुं शक्यन्ते? ध्यायत, उपादानानि समाहृत्य रामकृष्णस्य जीवनचरितमेकं लिखत। सावधानतावलम्बनीया, सर्वविधम् अलौकिकत्वं परिहाय तेन प्रदत्तानामुपदेशानां निदर्शनरूपेण तस्य जीवनचरितं लेखनीयम्। जीवनचरितं तस्यैव भवतु, न तु तत्र मम अपरस्य वा कस्यचन जीवितस्य कथा संयोजनीया। तदीयोपदेशानां मूर्त्तरूपतया तस्य जीवनस्य जगज्जनसकाशे उपस्थापनमेव मूलं लक्ष्यं भवतु। तज्जीवनस्य घटनान्तराणि न साधारणैः सेव्यानि। यद्यपि अयोग्योऽहमस्मि, तथापि मम किमपि करणीयं वर्तते। तच्च मयि न्यस्तो रत्नाधारो युष्मभ्यमत्रानीय मया दातव्य इति। कथं युष्मभ्यमेव। निकृतिपरा ईर्ष्यान्विता दासभावापन्ना भीरुचित्ता वस्तुतान्त्रिका न कदापि किमपि कर्तुमलम्। ईर्ष्या च अस्माकं दासोचितजातीयचरित्रस्य कलङ्कभूता। ईर्ष्यापराणस्य कृते सर्वशक्तिमतेश्वरेण किमपि साधयितुं नालम्।

समाप्तसर्वकर्माणं मां जानीत। सर्वं कर्म एव युष्माकं स्कन्धे स्थापितमिति भावयत। हे मातृभूमेः युवानः, यूयमेवास्मै कर्मणे विधिनिर्दिष्टा इति चिन्तयत। अस्मिन् कर्मणि स्वात्मानं नियोजयत, ईश्वरस्य

आशीर्वचनपूता भवत। मां जहीत, मां विस्मरत, प्रचारयत केवलं, रामकृष्णस्योपदेशं तज्जीवनचरितञ्च। न कस्यापि प्रतिकूलं कस्या अपि रीतेः विप्रतीपं किमपि शिक्षयत। जातिभेदस्य स्वपक्षे विपक्षे किमपि न कथयत, अथवा सामाजिकपापस्य विपक्षे किमपि न ब्रूत। भाषध्वं केवलं—आग्रहातिशयेन कस्यापि अधिकारे दृक्पातो न करणीय इति, तदा सर्वं समीचीनं स्यात्।

मम साहसिनः दृढ़निष्ठाः प्रेमिका युवानः! युष्मासु वर्षतु मम आशीर्वादः।

युष्माकं

विवेकानन्द।

१८९४ आङ्ग्लाब्दे जुनमासि
त्रयोविंशदिवसे

महाराज,

श्रीनारायणो भवतो भवत्परिवारवर्गस्य च कल्याणं करोतु। भवतः सानुग्रहसाहाय्येनैव अहमिमं देशमागन्तुं शक्तः। ततः प्रभृति अहमस्मिन् देशे सुविदितोऽस्मि। अस्य देशस्यातिथिवत्सलैर्जनैर्मम सर्वे अभावा अपनीताः। नानाविषयेषु देशस्यास्याद्भुतत्वं तथा जातेर्विस्मयत्वं प्रतिभाति। प्रथमतो जगति कर्मशालानामुन्नतिसाधने सातिशयकुशलेयं जातिः। नानाविधा प्रयुक्तिर्यथाऽत्रस्थै र्जनैः समाश्रियते, नान्यत्र दृश्यतेतराम्— अत्र केवलं यन्त्रालयसमाचारः। पश्यतु भवान् पुनः, एतेषां संख्या समग्रजगद्वासिनामेकविंशतिभागान् स्पृशति, परन्तु जगतः सकलसम्पद एकषष्ठांशस्तैरधिकृत एव। असीमस्तेषामैश्वर्यविलासः, तथाप्यत्र वस्तुसकलं सातिशयदुर्मूल्यमेव। तत्र श्रमिकैः सर्वाधिकं वेतनं जगति लभ्यते। तथापि चलति नियतनिरोधः श्रमिकधनिकेषु।

तत आमेरिकादेशीयनारीणामवस्था प्रेक्षाणीयाऽनतिक्लेशेन। पृथिव्यां नान्यत्र भूयानधिकारो नारीणां दृश्यते यथात्र। शनैः शनैः ताः सर्वमेव अधिकुर्वन्ति। विस्मयकरमेतत् पुरुषापेक्षया नार्यस्तत्र अधिकसंख्यया शिक्षिताः। महती प्रतिभा त्ववश्यमेव समधिकतया पुरुषेषु एव प्रकाशमाना आस्ते। एतावतोद्गीर्णः शुभपक्षः। अधुना दोषः प्रोच्यते तेषाम्। आदौ धर्मप्रचारकाः भारतवर्षे तद्देशीयानां जनानां धर्म-

प्रवणताविषये यावद्वैरूप्यमालोचयन्तु, प्रकृत्यैतद्देशीयत्रिंशल्लक्षोर्ध्वषट्-कोटिसंख्यकेषु जनेषु नवतिलक्षोर्ध्वैककोटिपरिमिता जनाः स्वल्पतया-ऽऽचरन्ति धर्मम्, अन्ये तु पानभोजनानि सम्पदर्जनञ्च व्यतिरिच्य नान्यत्र किमपि चिन्तयन्ति। अस्मदीयजातिभेदविषया-स्तीव्रतया यावता वैमत्येन मृश्यन्ते पाश्चात्यैः, तेषां पुनरस्मत्तो जघन्यजातिभेदोऽनुसृतः — अर्थगतजातिभेद इति। आमेरिकावासिभिर्मन्यते, यत् मुद्रा, डलार इति भाषा किल सर्वशक्तिमयी यया सर्वं साध्यत एव।

अपरत्र निःस्वा दरिद्राः पुनः। प्रायेण दक्षिणांशनिवासिनां निग्रोसंज्ञकानां जनानां कृते एतेषां व्यवहारः पैशाच एव। अपराधसामान्ये विचार-कर्मानासाद्य जीवद्दशायां ते छिन्नचर्माणः सन्तो हन्यन्ते। यदिह देशे भूयांस्यनुशासनानि सन्ति नान्यत्र तावन्ति विद्यन्ते। पुनरत्रस्था जना अनुशासनानि यथासम्भवं गर्हिततया नीतवन्तो नान्यस्मिन् देशेऽदृष्ट-चरत्वं नाम। सामग्रिकतया अस्माकं दरिद्रा हिन्दुधर्मावलम्बिनो जना निश्चिततया एतेभ्यः पाश्चात्त्येभ्यः आधिक्येन नीतिपरायणाः। धर्मविषये एते (पाश्चात्याः) बाह्याडम्बरमनुशीलयन्ति, धर्मान्धतां वा समाश्रयन्ति। नास्तिका विद्वांसः; पुनर्ये कथञ्चित् स्थितधियः सुचिन्तकास्ते कुसंस्काराच्छन्नेषु नीतिविहीनेषु धर्मेषु विरक्ताः सन्ति; नवीनालोक-लाभाय भारतवर्षं प्रति ते प्रेक्षामाणा वर्तन्ते। महाराज, विना चाक्षुषं भवतोपलब्धुं न शक्येत यदेतैः कीदृशेनाग्रहातिशयेन पवित्रवेदगत-महच्चिन्तायाः कणामात्रमपि ग्रहीतुं पार्यते; यत आधुनिकविज्ञाने धर्मः पुनपुनः प्राबल्यने आक्रम्यते वेद एव तत् प्रतिहन्तुमलम्, किञ्च धर्मेण साकं विज्ञानस्य सामञ्जस्यं साधयितुं समर्थः। एतेषां शून्यात् सृष्टिः, सृष्ट

आत्मा, स्वर्गलोके सिंहासनारूढः अत्याचारी ईश्वरः, अनिर्वाणो नरकाग्निरित्यादीनि तत्त्वानि शिक्षितानां जनानां विरागमुत्पादयन्ति। किञ्च सृष्टेस्तथा आत्मनो नित्यत्वे आत्मपरमात्मनोस्तादात्म्यमिति महती वैदिकी भावना कथञ्चित् द्रुततया तैः स्वीक्रियते।

आगामिनि पञ्चाशद्वर्षमध्ये जगतः सर्वे शिक्षिताः जनाः सृष्टेस्तथात्मनः पवित्रवेदोपदिष्टेऽनादित्वे विश्वसिष्यन्ति; किञ्चास्माकमेव सर्वोन्नता परिपूर्णावस्था ईश्वर इति गणयिष्यन्ति। अधुनातनतः तेषां विज्ञा याजकाः बाइब्ल्ग्रन्थं तथाविधं व्याचक्षते। भारतवर्षे ये धर्मप्रचारका दृश्यन्ते ते प्रकृत्या ख्रीष्टधर्मस्य न प्रतिनिधिकल्पाः। राद्धान्तितमेतन्मे, पाश्चात्त्यानां कृते आधिक्येन धर्मशिक्षाप्रयोजनं, अन्यतश्च वैषयिकर्द्धिरनल्पतयाऽस्माकं सेव्येति।

भारतवर्षे सर्वविधस्य दुर्दैवस्य मूलं जनानां दारिद्र्यम्। पाश्चात्त्यदेशे दरिद्राः पिशाचभावसन्नद्धाः, तदपेक्षयाऽस्मद्देशीयाः दरिद्रा देवभावसम्पन्नाः। एतेनास्मद्देशीयानां दरिद्राणाम् उन्नयनमस्माकं सहजसाध्यम्। अस्मद्देशीयनिम्नश्रेणीभूतानां नष्टप्रायव्यक्तित्वप्रबोधनं तेभ्यश्च शिक्षा-प्रदानमेवेति वोऽन्यतमकर्तव्यत्वेन निर्दिष्टम्। अस्माकं जनानां राजन्यानां च पुरतः एतदेव महत्तया विहितं कर्त्तव्यमस्ति। अद्यावधि तद्विषये न किमपि साधितम्। पुरोहितानां प्रभावस्तथा पराधीनता बहुशताब्दीः यावत् तान् निष्पेषितवन्तौ, अन्ते मनुष्यत्वनिर्णये ते सन्दिग्धा आसन्। महती भावना तेभ्यः प्रदेया। मुक्तनेत्रास्ते सन्तु यथा जगति कुत्र किं संघटत इति ज्ञातुमलम्। ततस्ते आत्मन उद्धरिष्यन्ति। प्रत्येकं जातिः प्रत्येकं जनाः आत्मन उद्धरेयुः। कतिपयोच्चभावैस्ते नेतव्या इति

सहायतामात्रं करणीयम्। परिशेषे तत्फलं स्वयमागमिष्यति। अस्माभी रासायनिकोपादानानि समाहरणीयानि, एकीभावस्तु भविष्यति प्रकृते-र्नियमनेनैव। तेषां शिरःसु कपियभावा प्रवेशयितव्या अवशिष्टास्तु स्वयं प्रवेश्या इति नः कर्तव्यम्। भारते सविशेषं काणीयमेतत्। दीर्घकालं यावन्मे मनसि एषा एव भावना विद्यते। भारतवर्षे असम्पादितस्यैतस्य साधनायात्र देशे ममागमनम्। दरिद्राणां प्रशिक्षणप्रक्रियायाम् अयमेव महान् बाधकः। कल्प्यताम्, अत्रभवता प्रतिग्राममेकैकः अवैतनिको विद्यालयः संस्थापितः तथापि नैष कल्याणाय कल्प्यते। भारते दारिद्र्यम् एवम्विधं तीव्रं यदत्र दरिद्रा बालकास्तेषां पितॄणां सहायतासम्पादनाय क्षेत्रं यास्यन्ति तथा अन्यथा जीविकानिर्वाहाय प्रयतमानाः स्थास्यन्ति न तु विद्यालयं गमिष्यन्ति। अस्तु, पर्वतो यदि महम्मदसमीपं न गच्छेत्, महम्मद एव पर्वतं निकषा व्रजेत्; तथैव दरिद्रा बाला शिक्षालयं चेन्न गच्छेयुस्तदा शिक्षा स्वयं तान् भजेत। अस्माकं देशे सन्ति सहस्रशः दृढचित्ताः स्वार्थत्यागिनः सन्न्यासिनः ये ग्रामाद् ग्रामान्तरं पर्यटन्तो जनेभ्यो धर्मोपदेशं प्रयच्छन्ति। यदि तेषां भागविशेषो व्यवहारिक-शिक्षाप्रदानाय नियुक्ताः स्युस्तर्हि स्थानात् स्थानान्तरं द्वाराद् द्वारान्तरं व्रजन्तस्तेऽधुना न केवलं धर्मोपदेशं दास्यन्ति अपि तु तेन साकं व्यवहारिकोपदेशञ्च दास्यन्ति। मन्यताम् एतेषु जनेषु द्वौ आलोक-चित्रयन्त्रं भूगोलकं मानचित्रञ्च गृहीत्वा कमपि ग्रामं गच्छतः तदा अज्ञान् ज्योतिर्विद्यां तथा भूगोलविद्यां बहुशः अध्यापयितुं शक्नुतः। विविधदेशसमाश्रयेण कथाः श्रावयित्वा तेभ्यो दरिद्रेभ्यस्तथाविधं

श्रवणजन्यं ज्ञानं दातुं क्षमेते यत् ते आजीवनप्रयासेनापि पुस्तकेभ्यो लब्धुं न शक्नुवन्ति। एतदर्थं संघसाधनेन प्रयोजनमस्ति, संघसाधनार्थञ्च धनेन प्रयोजनम्। अस्याः परिकल्पनायाः परिपूरणे प्रयोजनीयाः पर्याप्ता जना भारतवर्षे सन्ति। परन्तु धनाभावः! चक्रघूर्णनमादावतीव दुष्करम्। परन्तु एकदा घूर्णनम् आरभ्येत चेद् वर्धमानेन वेगेन तच्चलत्येव। निजदेशे साहाय्यभिक्षा यथेष्टमासादिता किन्तु धनिकुलात् वैमुख्यं संप्राप्तम्। महामान्यस्य महाराजस्य सहायेनाधुना समागतोऽत्र। भारतीया दरिद्रा जीवन्तु म्रियन्तां वा, आमेरिकावासिनां तत्र चिन्तालेशोऽपि नास्ति। किञ्च आमेरिकावासिनः कथं चिन्तयेयुर्यदा अस्माकं देशवासिनः स्वार्थं विहाय किमपि न साधयन्ति।

मम महामनो राजन्! जीवनं नातिदीर्घम्। जगति धनमानादिकं क्षणिकम्। ते प्रकृत्या जीवन्ति ये परार्थभाविनः। अपरे तु न जीविताः मृता एव। भवादृशः समुन्नतमनाः महाप्राणः भारतीयराजकुलसम्भूतः भारतं पुनरपि स्वनिर्भरतां प्रापयितुं क्षमते, येन भाविनि काले भवदीयैर्वंशधरैर्भवतः कीर्तिः स्मर्य्येत।

भवतो महच्चित्तम् अज्ञाननिमज्जितानां कोटिकोटिदरिद्राणां दुःखम् अनुभवतु इति ईश्वरसविधे प्रार्थना क्रियत इति।

विवेकानन्दस्य।

५४ पश्चिमे ३३ मार्ग,

निउइयर्क,

१८९४ आङ्गलाब्दे फेब्रुयारीमासि प्रथमे दिवसे

प्रियभगिनि,

अधुनैव तवापूर्वं पत्रं प्राप्तम्। मुख्यख्रीष्टोपासनालयानुष्ठितैकतानवादनेऽनागमनं भवत्याः निशम्यातीवदुःखित आसम्। निष्कामकर्मसाधनमतिबाध्यतया क्रियमाणमपि कदाचित् उत्तममास्ते, यद्यपि तत्र स्वसाधितकर्मफलभोगवञ्चना जायते। जोसेफाइन-लक्संज्ञकभगिन्याऽपूर्वमेकं पत्रं लिखितम्। तव सम्यगालोचनेन अहमतीव प्रसन्नो न तु मनागपि दुःखितः। अपरेद्युः थार्सविमहोदयाया गृहे केनचित् ख्रीष्टोपासनालयगतयाजकीयशासनतन्त्रसमर्थकेन मम तुमुलस्तर्को जातः। महाशयः अतीव उत्तप्तः क्रुद्धः परुषवचःस्रावी चासीत्। अस्तु, अनन्तरमेतदर्थं बुलमहोदययाऽहमतीव भर्त्सित आसम्, यत एतादृशो विषयो मम कर्म प्रतिबध्नातीति। मन्ये, तवापि अभिमतमेतदेव भविष्यति।

त्वया यथासमयं पत्रं प्रेषितमेतदुपलक्ष्येत्यानन्दप्रदम्, यतोऽस्मिन् विषये मया बहुधा चिन्तितम्। प्रथमत एतदर्थमहं न कथमपि दुःखितः। जाने, एतेन त्वं खिन्ना भवेरिति नासङ्गतमेव। अहं परिपूर्णतया जानामि यत् पार्थिवसमृद्धये मधुरभाषणमतीव प्रयोजनीयम्। मधुरालापी भवितुमहं सर्वथा यते। अपि तु अन्तःस्थितेन सत्येन सह यदा दारुणः कोऽपि सद्भाव उदेति, तदाहं विरमामि। नाहं विनम्र-दीनतायां विश्वसिमि—समदर्शित्वे साधुरहम्।

ईश्वररूपसमाजस्य आदेशानुसरणमेव साधारणानां जनानां कर्त्तव्यम्; परन्तु ज्योतिस्तनयाः कदापि एवं न कुर्वन्ति। एष शाश्वतो नियमः। कश्चिदात्मानं परिवेष्टनेन तथा सामाजिकभावनया सह योजयति, सर्वशुभप्रदातुः समाजादेव सर्वाणि शुभानि अश्नुते। अपरस्तु एकाकी अवतिष्ठमानः समाजं स्वानुगं करोति। सामञ्जस्यस्थापनकारी जनः कुसुमाकीर्णं पन्थानं प्राप्नोति, पुनरसमञ्जसो जनः कण्टकाकीर्णं मार्गमवाप्नोति। ये तावद् लोकमतमनुसरन्ति मुहूर्त्तेनैव ते विनश्यन्ति। सत्यस्य तनयाश्चिरं जीवन्ति। सत्येन सह अनन्तशक्तिसम्पन्नः कश्चन जारकपदार्थो मया उपमीयते। यत्रैव एतत् पतति क्षणेनैन तत् चलनमार्गं विरचयति, कोमले वस्तुनि त्वरया, कठिने ग्रानाइटप्रस्तरे च विलम्बेन च विरच्यते, मार्गस्तु रच्यत एव। यल्लिखितं तल्लिखितम्। भगिनि! अहमतीव दुःखितो यदहं मधुरालापपूर्वकतया प्रबल-मिथ्याचारेण सह सद्भावं रचयितुं न शक्नोमि। एतदर्थं जीवने प्रभूतं दुःखमाप्नोमि तथाप्यहं तन्निवारणाक्षमः। प्रचेष्टाबाहुल्येऽपि वैफल्यं जातम्। ईश्वरो महान्, तदाश्रये मे कपटवृत्तिर्नोदेति। परित्यक्ता कपटवृत्तिः। अन्तरे यद्वर्ततेऽधुना तत् प्रकाशयतु। न मया तथाविधो मार्गो दृष्टो येन सर्वे तुष्यन्ति। यदेव मे स्वकीयं रूपं तथैवाहमस्मि, अन्तरात्मनः सविधे शुद्धः स्याम्। यौवनं क्षणिकं, रूपं क्षणिकं, जीवनं क्षणिकं, धनं क्षणस्थायि, नाम न चिरं तिष्ठति, यशश्च वर्तते क्षणमात्रं, पर्वतोऽपि धूलिकणायां पर्यवस्यति, सख्यस्य तथा प्रणयस्यापि स्थायित्वं क्षणमात्रं व्याप्नोति। सत्यमेव केवलं तिष्ठति चिरम्। सत्यरूपेश्वर!

त्वमेव मम निर्देशको भव। अतिवयस्कतया नाहमधुना मधुरभाषित्वेन स्थातुं शक्यः। यथाहमस्मि तथैवावतिष्ठे। सन्न्यासिन्! भीतिं परित्यज्य परितोषणं विहाय मित्रं शत्रुं चोपेक्ष्य सत्ये दृढप्रतिष्ठो भव। एतस्मादेव क्षणादिहामुत्रफलभोगविरागी भवामि—ऐहिकान् पारत्रिकान् च असारभोगान् परिहरेति। सत्यं, मम नियन्त्रणकर्तृत्वं त्वय्येवास्तु। न मे धनाय नाम्ने यशसे भोगाय वा अभिलाषोऽस्ति। भगिनि, एतानि त्वतितुच्छानीति मन्ये। भ्रातॄणां सेवा मम अभिलषिता आसीत्। धनार्जनस्य कौशलं न मे विदितमिति धन्यवादार्ह ईश्वरः। मम हृदयस्थां सत्यस्य वाणीमनिशम्य कथं मया बहिःस्थानां जनानामिच्छानुसारेण गमनं काङ्क्षितं स्यात्? भगिनि, मम चेतः अधुनापि दुर्बलम्। बाह्यजगतः सहायतायां समागतायाम् अभ्यासवशादेव तत्राकृष्टो भवामि। न त्वहं भीतोऽस्मि। भयमेव महत्तमं पापमिति धर्मस्य शिक्षा। याजकेन सह मम कलहः तदनन्तरञ्च बुलमहोदयया सह सुदीर्घस्तर्कः स्वच्छप्रभया मां प्रदर्शयति सन्न्यासिनं प्रति मनोर्वचनम्—एकस्तिष्ठतु, एकश्चलतु इति। सर्वा बन्धुताः, सर्वाः प्रीतयः सीमिता एव। बन्धुत्वं विशेषतस्तद् यदि स्त्रीभिः स्यात् तर्हि कदापि स्वार्थशून्यं तन्न स्यात्। महान्तः साधवः! सम्यगुक्तं भवद्भिः। परेषु निर्भरशीलः सत्यरूपेश्वरं समुपासितुं न शक्नोति। मम अन्तरात्मन्! शान्तो भव। एकाकी भव। त्वया सह ईश्वरोऽस्तीत्यनुभूयते। जीवितम् अकिञ्चित्करम्। मरणं मोहमात्रम्। एतत् सर्वं न तत्त्वम्। ईश्वर एवास्ति। मम हृदय! मा बिभीहि, निःसङ्गं भव। भगिनि! दीर्घः पन्थाः, कालः सीमितः, सन्ध्या आसन्ना। शीघ्रमेव

मया गृहं गमनीयम्। आचारसंस्कारशिक्षामात्रे कालावसरो नास्ति मे। मम वार्ताप्रसारणप्रसङ्गोऽस्तमितः। त्वं महीयसी, दयावती च। अहं त्वदर्थं सर्वं साधयामि; परन्तु कुपिता मा भव। अहं वः सर्वान् शिशुकल्पान् मन्ये।

नाधिकं दर्शय मे स्वप्नं हृदय! नाधिकं दर्शय। प्रकृत्या पृथिवीं प्रति ममैका वार्तास्ति। मनःसौहार्द्यं साधयितुं मम अवसरो नास्ति। तथैव प्रयासे क्रियमाणेऽहं कपटो भवामि। अहं सहस्रकृत्वो मरिष्यामि न तु मेरुदण्डरहिततया मूर्खस्य जगतः सर्वविधं प्रयोजनं पूरयितुमलम्—तन्मे स्वदेशे, विदेशे वा भवतु। मदीयं विशिष्टं करणीयं विद्यत इति बुलमहोदयया सदृशं त्वयापि चिन्त्यते चेत् तदा भ्रान्ताऽसि, पूर्णतया भ्रान्ताऽसि। अस्मिन् जगति अन्यत्र वा न मे विशिष्टं कार्यं किमपि वर्तते। यदेव वक्तव्यं मे तन्निजभावेन परिस्फुटनीयम्—न हिन्दुधर्मभावेन, न ख्रीष्टधर्मभावेन न केनापि भावेन, अपि तु स्वकीयेन भावेन इत्येतावन्मात्रम्। मुक्तिरेव केवलो मे धर्मः; पुनर्यच्च तद्बाधकं स्यात् तद्वर्जनीयम्—संग्रामेण पलायनेन वा वर्जनं भवेत्। अपि मन्यसे, अहं पुरोहितान् शमयितुं यतिष्ये? भगिनि! अयथार्थतया मामवगम्य दुःखं मा अवाप्नुहि। यूयं सर्वाः शिशुकल्पाः। शिशवः पराधीनाः सन्तः शिक्षां ग्रहीतुं प्रस्तुताः स्युः। एतावत् तस्य प्रवाहस्य स्वादो युष्माभिर्न लब्धः। तेन 'युक्तिरयुक्तितया परिणम्यते, मर्त्त्योऽमर्त्त्यरूपेण कल्प्यते, जगच्छून्यत्वेन पर्यवस्यते, मनुष्यो

देवभावत्वेन चर्य्यत' इति। लोकैर्यदेतज्जगदित्यभिधीयते, तत्र सामर्थ्यं चेत् तन्मूर्खजालाद्बहिरेहि, तदा प्रकृत्या शक्तिमयी मुक्ता भविष्यसि। ये किलाभिजात्यमण्डितमनृतमीश्वरं विचूर्णयन्तस्तस्य चरमं कापट्यं दलयन्ति पादैः, तेभ्य उत्साहप्रदानेऽसमर्था चेत्तदा विरमस्व, किन्तु सौहार्द्यमनस्तोषणाख्यमृषामूर्खतापाशेन तान् बन्धुं नोत्सहस्व।

मया घृणितमेतज्जगत्—इमं स्वप्नं, उत्कटं दुःस्वप्नं, ख्रीष्टोपासनालयं तत्प्रवञ्चनाजालं च, तस्य शास्त्रं दौर्वृत्तानि च, तस्य सुन्दरं मुखं तथा कपटं हृदयं, तस्य धर्मध्वजितास्फालनं तथाऽन्तःसारशून्यतां—सर्वोपरि धर्मसंज्ञया आपणिकवृत्तिं प्रति जुगुप्सा मे सदा तिष्ठति। किमेतत्, संसारक्रीतदासभाषणैर्मे हृदयं विचार्य्यते? धिक् भगिनि! सन्न्यासी न परिचीयते। सन्न्यासी वेदशीर्षत्वेन मन्त्रितः श्रुतिषु; यतोऽसौ ख्रीष्टोपासनालय-धर्ममत-र्षि-शास्त्रप्रभृतीन् न गणयति। ख्रीष्टधर्मयाजकानामथवेतरेषां यथासाध्यं चित्काराक्रमणानि न मां विचालयन्ति। भर्तृहरिणा प्रोक्तं वैराग्यशतके—

चण्डालः किमयं द्विजातिरथवा शूद्रोऽयं किं तापसः
किंवा तत्त्वविवेकपेशलमतिर्योगीश्वरः कोऽपि किम्।
इत्युत्पन्नविकल्पजल्पमुखरैः सम्भाष्यमाणा जनै-
र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः।। इति(९४)।

अर्थात्—असौ किं चण्डालो वा, द्विजातिर्वा, शूद्रो वा, तपस्वी वा, तत्त्वविचारकुशली योगीश्वरो वा इति जनैर्बहुधालोचिताः सन्तोऽपि योगिनो न रुष्टास्तुष्टा वा सन्ति, ते भ्रमन्ति स्वमनसेति।

तुलसीदासेनापि भणितम् —

'हाती चले वाजारमे कुत्ता भोँके हाजार
साधुओँका दुर्भाव नही जव् निन्दे संसार।' इति।

अर्थात्,

अटति विपणभूमौ वारणो धीरचित्तैः
शुनकरवसहस्रैः खिद्यमानः स भूयः।
न विचलति कदाचिद्यथा साधुः स्वभावै-
रविरतजनवादैर्दुष्यमाणस्तथापि।।

अहमवतिष्ठे ल्याण्डसवार्गगेहे। असौ शक्तिमान् महांश्च। तस्मिन् वर्षतु कृपा ईश्वरस्य। कदाचिच्छयनं गार्नसिगेहे घटते। सदेश्वरकृपा युष्मासु वर्षतु। आशु जगदाख्यातिकपटताया युष्मानुद्धरतु तत्रभवान्। यूयं यथा कदापि जगदाख्यजराजीर्णडाकिनीकुहकं नाश्रयत। सहायो युवां भवतु शङ्करः। उमा युष्माकं पुरतः सत्यस्य द्वारमुद्घाटयतु, सकल-मोहानपसारयतु।

स्नेहाशीर्वादपरिपूतो युष्माकं
विवेकानन्द।

# नैनितालवासिनं महम्मदसर्फराजहोसेनं प्रति

आल्मोड़ा,

१८९८ आङ्ग्लाब्दे जुनमासि दशमदिवसे

प्रीतिभाजनेषु,

पत्रतात्पर्यं सविशेषमुपलब्धं भवतां, किञ्च तदवगम्यैतादृश आनन्दो जातो यद् ईश्वरस्तूष्णीं मातृभूमेः कृते अपूर्वं व्यवस्थापनं कुर्वन्नास्त इति।

वयमेतं वेदान्तवादं ब्रूमः, अन्यं वा किमपि ब्रूमः, सत्यं तावदिदमेव, अद्वैतवाद एव धर्मस्य तथा चिन्तनस्य अन्तिमं तत्त्वम्। अद्वैतप्रस्थानादेव केवलाद् मनुष्यैः सर्वे धर्मास्तथा सम्प्रदायाः प्रीत्या अवलोकयितुं शक्यन्ते। आगामिनि काले शिक्षासमुज्ज्वलमनुष्याणामयमेव धर्मः स्यादिति विश्वासो मे। हिन्दुधर्मीया अपरजात्यपेक्षया द्रुतमत्र संप्राप्तेः गौरवमवाप्तुं शक्ष्यन्ति, हिब्रुजातेरथवा आरवजातेरपेक्षया तेषां प्राचीनत्त्वात्। अपि तु प्रायोगिकवेदान्तः, येन सर्वे मनुष्या आत्मत्वेन प्रतीयन्ते व्यवह्रियन्ते च, स व्यवहारः सर्वेषु हिन्दुषु सर्वजनीनतया न परिपुष्टिमापन्नः।

अपरपक्षे अस्माकं प्रतीत्यनुसारं यदि कदापि कस्यचन धर्मस्यानुसारिणः प्रात्यहिकव्यवहारिकजीवने एतस्य साम्यस्य नैकट्यमाप्नुयुस्तदा ते केवलम् इसलामधर्मावलम्बिनः। परन्तु अस्याचरणस्य अन्तर्निहितो योऽर्थो वर्तते तथा चास्योपजीव्यत्वेन यानि तत्त्वानि सन्ति तद्विषये हिन्दूनां चिन्तनं स्पष्टमेव। इसलामधर्मीयाः सामान्येन तत्र अनवहिताः।

अत एव व्यावहारिकस्य इसलामधर्मस्य सहायतां विना वेदान्तस्य तत्त्वानि सूक्ष्माण्यपि अभिनवान्यपि विशालं मनुष्यकुलं प्रति पूर्णतया अपार्थानीति नो निश्चयः। मनुष्यान् तत्र भूमौ नेतुं वयं यतामहे यत्र वेदा न सन्ति, बाइब्लो नास्ति, कोराणोऽपि नास्ति, तथापि वेदबाइब्लकोराणानां समन्वयेनैव एकत्वं साधनीयम्। मनुष्येभ्य एतद् विज्ञापनीयं—सर्वे धर्मास्तस्य एकत्वधर्मस्य विचित्राः प्रकाशा एव। अतो यस्मिन् यो मार्गो भूयिष्ठमुपयुज्यते, तेन स एव मार्गोऽवलम्बनीयः।

अस्माकं मातृभूमेः कृते मतद्वयस्य अर्थात् हिन्दोस्तथा इसलामस्य समन्वयो विधेयः। वैदान्तिकं मस्तिष्कं तथा इसलामीयं शरीरमित्येव केवलम् अस्माकम् आशंसास्थानम्।

मानसनेत्रेणाहं पश्यामि विवादविशृङ्खला निराकृत्य भावि परिपूर्णं भारतवर्षं वैदान्तिकमस्तिष्केण तथा इसलामीयदेहेन महता यशसा अदमनीयतया च उदेति। मनुष्याणां विशेषतः अतिदरिद्रमातृभूमेः कल्याणार्थमीश्वरोऽत्रभवन्तं महदुपकरणस्वरूपं निर्मायतामिति सदा प्रार्थये।

स्नेहबद्धो भवदीयो

विवेकानन्दः।

# श्रीमतीं मृणालिनीवसुं प्रति लिखितम्

## ओँ नमो भगवते रामकृष्णाय

देवघर, वैद्यनाथ,

१८९९ आङ्गलाब्दे, जानुयारिमासि तृतीयदिवसे

मातः,

तव पत्रे केचिद् गुरुतरा प्रश्नाः समुत्थापिताः। एकेन क्षुद्रपत्रेण समीचीनतया सर्वेषां प्रश्नानां प्रत्युत्तरं न सम्भवति। तथापि यथासम्भवं संक्षेपेण उत्तरं दास्यामि।

(१) न ऋषिर्न मुनिर्न वा देवता सामाजिकनियमं प्रवर्त्तयितुं क्षमते। यदा समाजस्य तात्कालिकप्रयोजनीयताया वेगोऽनुभूयते तदानीम् आत्मरक्षार्थं समाजः स्वत एव आचारविशेषान् गृह्णाति। ऋषिभिस्तु ते आचाराः केवलम् अभिलिखिताः। आत्मरक्षार्थं यथा मनुष्यः अनेकदा तात्कालिकरक्षोपयोगिनं परिणामे अनिष्टकरम् उपायम् अवलम्बते, समाजोऽपि तथा बहुकालं यावत् तत्कालतः त्रायते। परन्तु आत्मरक्षार्थं गृहीताः तात्कालिका उपाया परिणामे भयावहा भवन्ति। उदाहरणं यथा—अस्माकं देशे विधवाविवाहप्रतिषेधः। ऋषयः दुष्टजना वा एतद्विषयाणां विधीनां प्रवर्त्तयितार इति मा विचिन्त्यताम्। पुरुषाः स्त्रियः स्वायत्तीकर्तुमभिलषन्तीति सत्यं तथापि तत्कालिकसामाजिक-सहायताव्यतिरेकेण तेषामभिलाषो न सफलताम् अश्नुते।

अस्य आचारस्याङ्गद्वयं विशेषतो द्रष्टव्यम्—

(क) निम्नजातिषु विधवाविवाहः प्रचलितो वर्तते।

(ख) उच्चजातिषु पुरुषाणां संख्यातः स्त्रीणां संख्या अधिका।

सर्वा कन्या उद्वाहनीयेति चेत् तर्हि प्रतिकन्याजनस्य कृते वरलाभ एव कठिनः स्यात्, एकैकस्याः कन्याया द्वित्राः वराः कथं लभ्येरन्। अत एव समाजे एकपक्षस्य हानिः साधिता अर्थाद् या विवाहिता न तस्यै पुनरपि पतिः प्रदत्तः। प्रदीयेत चेत् तर्हि एका कुमारी पतिं न प्राप्स्यति। यासु जातिषु संख्यया स्त्रियः न्यूनाः, तासु पूर्वोक्तबाधाभावात् विधवाविवाहः संघटते। जातिभेदविषये तथा विविधेषु आचारेषु एषा एव रीतिः। पाश्चात्त्यदेशेऽपि तेन प्रकारेण कुमारीणां पतिलाभो दुष्करः।

अत एव तथाविधस्य सामाजिकस्य आचारस्य परिवर्त्तनं साधयितव्यं चेद् आचारस्य मूले विद्यमानं प्रयोजनं प्रथमं निरूपणीयम्। तस्य अन्यथाकरणेन स आचारः स्वत एव विनंक्ष्यति। तद्व्यतिरेकेण निन्दया स्तुत्या वा कार्यं न साधितं भविष्यति।

(२) अधुनेयं जिज्ञासा समुदेति, समाजः यान् नियमान् प्रवर्त्तयति, येन च समाजः निर्मीयते तस्य सर्वस्य मूलं किं सर्वलोकस्य सामाजिक-कल्याणाय? अनेके सम्मतिसूचकं प्रतिवचनं कुर्वन्ति, अपरे तु वदेयुः न तथेति। केचित् शक्तिमन्तः सन्तः मन्दं मन्दम् अपरान् सर्वान् स्वायत्तान् कुर्वन्ति। निकृत्या, बलेन कौशलेन वा स्वाभिलाषं पूरयन्ति। एतदेव सत्यं चेद् अज्ञजनेभ्यः स्वाधीनताप्रदाने भयमस्तीत्यस्य कोऽर्थः? स्वाधीनता इत्यनेन वा किं बुध्यते?

मम तव वा धनादीनाम् अपहरणे बाधाभाव एव न स्वाधीनता। अपि तु अनिष्टं विहाय मम शरीरस्य बुद्धेस्तथा धनस्य यथामति व्यवहारसाधनक्षमता एव। एष मे स्वभावजातः अधिकारः। किञ्चोक्तधनस्य विद्यायास्तथा ज्ञानार्जनस्यावकाशः समाजान्तर्गतानां सर्वेषां जनानां समान एव स्यात्। द्वितीयतः ये तावद् वदन्ति अज्ञाय दरिद्राय वा स्वाधीनताप्रदाने, तेषां शरीरं धनञ्च प्रति पूर्णे अधिकारे विहिते, तेषां सन्तानानां धनिनाम् उच्चपदस्थानां वा सन्तानवद् ज्ञानार्जनस्य तथा स्वीयदशायाः समुन्नतिसाधनाय समाने अवसरे प्रदत्ते ते शृङ्खलाम् अति-लङ्घितुं यतिष्यन्त इति, ते किं समाजस्य हिताय एतद् वदन्ति अथवा स्वार्थान्धाः सन्त एवं वदन्ति? इंलण्डेऽपि एवं श्रुतम्, निम्नश्रेणीभुक्ताः शिक्षिताः स्युश्चेत् के तावद् अस्माकं सेवापराः स्युः?

कतिपयधनिनां भोगसुखार्थं बहुलक्षं नराः नार्यश्च अज्ञतायाः तमसि, दारिद्र्यस्य नरके निमज्जिता भवेयुः तेषां धनिकत्वेन विद्यावत्त्वेन च समाजः शृङ्खलामतिलङ्घयेत्।

कस्तावत् समाजः? ते बहुलक्षसंख्यकाः? उत त्वमहञ्चेत्येकीकृत्य उच्चजातीया कतिसंख्यकाः। तदेव सत्यं चेत् तथापि तव मम वा कीदृशोऽहङ्कारो येन सर्वेषां पथिप्रदर्शनम् अस्माभिः स्यात्। किं वयं सर्वज्ञाः?

'उद्धरेदात्मनात्मानम्' इति स्व एव स्वम् उद्धरतु। सर्वे स्वात्मानम् उद्धरन्तु। सर्वविषये स्वाधीनता अर्थाद् मुक्तिं प्रति अग्रगतिरेव पुरुषार्थः। यैः सामाजिकविधिभिः अस्याः स्वाधीनतायाः प्रकाशो व्याहन्यते, ते अहितं साधयन्ति; तेषां शीघ्रं विनाशो यथा संघटेत तथा

प्रयतेरन्। यैर्विधिभिः जीवाः स्वाधीनतामभिलक्ष्य प्रचलन्ति तान् प्रति आनुकूल्यं विधेयम्। यथाऽपरे शारीरिक-मानसिकाऽऽ-ध्यात्मिक-स्वाधीनतां प्रत्यग्रेसरन्ति, तद्विषयाय सहायतादानं तथा स्वीयाग्रगामितैव परमपुरुषार्थः।

(३) अस्मिन् जन्मनि सहसा दर्शनमात्रम् असाधारणगुणैरनन्वितमपि कश्चिद् व्यक्तिविशेषं प्रति आन्तरिकं प्रेम उपजायते, अस्मद्देशीया विद्वज्जनाः पूर्वजन्मजनितमेव तदिति निर्णयं कुर्वन्ति।

(४) इच्छाशक्तिमवलम्ब्य तव जिज्ञासा अतीव समीचीना, अनुधावन-योग्या च। सर्वधर्माणां सारभूतमेतत् तत्त्वं—वासनाया विनाशः, अत एव युगपद् इच्छाया निश्चितनाशो यतो वासना इच्छाविशेषश्चेति अनर्थान्तरम्। तर्हि पुनरपि जगता किम्। कथं वा इच्छाया विकाशः। केचिद् धर्मा ब्रुवन्ति असदिच्छाया एव नाशो भवेद् न तु सदिच्छायाः। इहलोके वासनापरिहारः परलोके भोगेन परिपूरितः स्यात्। अस्मिन् प्रतिवचने विद्वांसो न तृप्तिमवापुः। अपरतो बौद्धा वदन्ति वासना दुःखमूलम्। तस्याः नाश एव श्रेयान्। मशकनिधनाय मनुष्यनिधनवद् बौद्धमतेन दुःखं नाशयितुं स्वस्य विनाश एव तेषामभिमत आसीत्।

अयं राद्धान्तः, यां वयम् इच्छेति ब्रूमः सा ततोऽपि उच्चतरदशाया निम्नः परिणाम एव। निष्काम इत्यनेन इच्छाशक्तिरूपस्य निम्नपरिणामस्य परित्यागस्तथा उच्चपरिणामस्याविर्भाव एव बुध्येते। तादृशी दशा मनसस्तथा बुद्धेरगोचरा। स्वर्णमुद्रा अपरमुद्रातः दृश्यतः अत्यन्तभिन्नाऽपि वयं निश्चितं जानीमः, स्वर्णमुद्रा एतदपेक्ष्य महत्तमा। एवम् उच्चतमा दशा मुक्तिर्वेति

निर्वाणो वा यथा तथा वा उच्यताम्, मनोबुद्ध्यगोचरत्वेऽपि इच्छादिसर्वविधशक्त्यपेक्षया महत्तमा। यद्यपि सा न शक्तिः तथापि शक्तिस्तस्याः परिणामः। एतस्मात् सा बृहत्तमा। यद्यपि सा नेच्छा, इच्छा तस्या निम्नपरिणाम एतस्मात् सा बृहत्तमा। अधुना अवगम्यताम्। सकामं निष्कामं वा समीचीनतया इच्छाशक्तेः परिचालनस्य फलमेतद् यदेतेन इच्छाशक्तिस्तदपेक्ष्य प्रभूताम् उन्नतदशाम् अवाप्स्यति।

(५) प्रथमतस्तावद् गुरुमूर्त्तिरनुध्यातव्या ततश्च तस्या लयेन इष्टमूर्त्तिरुपस्थापयितव्या। अत्र प्रीतिपात्रमेवेष्टरूपेण ग्रहणीयम्।

मनुष्ये ईश्वरस्यारोपः अतीव कठिनः। तथापि यतमानः सफलतामश्नुते। प्रतिमनुष्यमस्ति ईश्वरः, मनुष्यः जानीयान्न वा। तव भक्तिवशाद् ईश्वरत्वस्योदयस्तस्मिन् भविष्यत्येव।

सततं ते कल्याणाकाङ्क्षी

विवेकानन्दः।

# स्वामिनम् अखण्डानन्दं प्रति लिखितं पत्रम्

क्यालिफोर्णिया,
१९०० आङ्गलाब्दे फेब्रुयारीमासि
एकविंशदिवसे

कल्याणवरेषु,

तव पत्रात् सकलं समाचारमवाप्य परमं प्रसादं प्राप्तः। विद्या बुद्धिश्चेति तत्त्वद्वयं बहिरङ्गम्, बहिः विराजितं द्युतिरूपमेव। धीरेव शक्तेराधारभूता। ज्ञानशक्तिक्रियासमन्वित आत्मा हृदि एव आहितो न तु मस्तिष्के। हृदये एकाधिकशतसंख्यका नाड्यः सन्ति। सिम्प्याथे-टिक्ग्याङलियन् इत्यभिहितं हृदयसमीपस्थं नाडीनां यन्मूलकेन्द्रं तदेव आत्मन आधारः। हृदयस्य प्रसारं यावत् प्रदर्शयितुं शक्ष्यसि तावदेव जयमवाप्स्यसि। मस्तिष्कस्य भाषा कैश्चिदनुभूयते। हृदयस्य अभिप्रायस्तु आ ब्रह्मणः स्तम्बपर्यन्तं सर्वेषामेव बोध्यः। अयन्तु अस्माकं देशे मृतस्य प्राणसञ्चार इव। सुचिरं कालस्तत्र अपेक्षितः। अपारः अध्यवसायस्तथा धैर्यबलं स्यातां चेत् साफल्यं ध्रुवमेव, न तत्र संशयलेशोऽपि।

कस्तावद् आङ्गलदेशीयानां राजपुरुषाणां दोषः? कस्यचित् परिवारस्य असाधारणीं निर्दयतामधिकृत्य यत् त्वं लिखितवान् तत् किं भारतवर्षस्यासाधारणं साधारणं वा निदर्शनम्? समग्रदेश एव एवं

संघटते। एवं तर्हि अस्माकं देशे एवंविधं स्वार्थान्वेषणं नहि मन्दबुद्धिप्रसूतमेव। बहुशताब्दीः यावद् अधिगतं यद् वैफल्यं निर्यातनञ्च तत एव प्रसूते पाशविकं स्वार्थान्वेषणमेतत्। नैषा प्रकृतस्वार्थपरता, गभीरं नैराश्यन्तु एतत्। लेशमात्रसाफल्यदर्शनेनैव एषा स्वार्थपरता अपगमिष्यति। आङ्गलराजपुरुषा एतामेव सर्वतः परिलोकयन्ति। अत आदावेव कथं विश्वास उपजनिष्यते तेषु। अपि तु ब्रूहि तावद् यथार्थकर्मदर्शने कीदृशाः सहानुभूतिशीलास्ते परिदृश्यन्ते! देशीयराजपुरुषाः किं तथाविधम् आचरन्ति? ब्रूहि तीव्रदुर्भिक्षपीडिते वन्याकवलिते रोगमहामारीजर्जरिते काले कंग्रेसगोष्ठानां के कुत्र सन्ति? अस्मभ्यं राज्यशासनस्य भारः समर्प्यताम् इति कथनेनैव सर्वं सिध्यति किम्? के वावहिताः सन्तः शृण्वन्ति तेषां प्रार्थनाम्। मनुष्यैः कर्म क्रियते चेद् तत्र वाक्प्रसारणेन किम्? विविधे संस्थाने त्वादृशाः द्विसहस्रं जनाः कर्म कुर्वन्तः सन्ति चेत् आङ्गलदेशीयाः वः समाहूय मन्त्रणां करिष्यन्ति। स्वकार्यमुद्धरेत् प्राज्ञः इति। 'अ' इत्यभिधेयाय केन्द्रोन्मोचनस्य अनुमोदनं न दत्तम्। तेन किमायाति? किं किषणगडाय अनुमोदनं न दत्तम्? तूष्णीं स कर्म प्रदर्शयतु, वचनेन विवादेन वालम्। महामायाया अस्मिन् कर्मणि यः सहायो भविष्यति स एव तस्याः कृपाधन्यो भविष्यति, यश्च प्रतिबन्धकतां करिष्यति सः अकारणवैरिताम् अवाप्स्यति। 'अकारणाविष्कृतवैरदारुणः' इति स्मरणात् निजचरणं कुठारदीर्णं करिष्यति। शनैः पन्था इत्यादि सर्वकाल एव भवति। क्षुद्रं क्षुद्रं वस्तु महत् किमपि साधयति।

यदा महत् कर्म भवति, मूलं स्थाप्यते, मार्गः प्रस्तूयते, अमानुषेण बलेन प्रयोजनमनुभूयते तदा कतिपया असाधारणा जना विविधेषु विघ्नेषु सत्स्वपि नीरवं कार्यं सम्पादयन्ति। यदा सहस्रसहस्रजना उप-कृता भवन्ति, तदा महद् वाद्यं वाद्यते, सर्वे देशवासिनः प्रशंसन्ति। तदा यन्त्रं सचलं वर्तते, बालोऽपि कर्म कर्तुं शक्नोति, मूर्खोऽपि यन्त्रे वेगं सञ्चारयितुं क्षमते। एतद् अवबोधयतु। ग्रामाणाम् एकस्मिन् द्वयोर्वा दशानां विंशतेर्वा अनाथबालकानां कृते निर्मितः अनाथाश्रमः, यत्र दश विंशतिर्वा कर्मिणः स्युः। अक्षयो वज्रबीजस्वरूपः स कार्य-सहायको भविष्यति। एतस्मादेव भविष्यति, लक्षलक्षजना उपकारम् अवाप्स्यन्ति। अधुना द्वाभ्यां दशभिर्वा सिंहैः प्रयोजनमस्ति ततः शत-शतशृगाला अपि सम्यक् कर्म कर्तुं शक्ष्यन्ति।

अनाथा बालिका आश्रयं याचमानाः अवलोक्यन्ते चेत् सर्वाग्रे तासां भारो ग्रहणीयः। अन्यथा ख्रीष्टधर्मावलम्बिनः ताः नेष्यन्ति। अधुना सम्यग् व्यवस्थापनं नास्ति, तेन किम्? मातुरिच्छया सर्वविधा व्यवस्था भविष्यति। अश्वो यदि स्यात् तर्हि तस्य कशापि प्राप्स्यते। अधुना बालकाः बालिकाश्च एकत्रैव पालनीयाः। कापि पृथक्त्वेन दासी नियोज्या। सा बालिकानां परिचर्यां करिष्यति। ताः समीपे गृहीत्वा शयिष्यते। अतः परं स्वयमेव व्यवस्थापनं भविष्यति। यदेव प्राप्स्यते तदेव ग्रहणीयम्। भेदाभेदौ अधुना न साधनीयौ। परस्तात् सर्वं सुगमं भविष्यति। सर्वेषु कार्येषु आदौ विविधा विघ्ना विद्यन्ते। अनन्तरं तु ऋजुः मार्गः दृश्यते।

आङ्गलराजपुरुषाय मम साधुवादं ज्ञापय, निर्भयं कर्म कुरु! प्रशंसामर्हसि त्वम्! साधु! साधु! साधु!

भागलपुरे केन्द्रस्थापनस्य समाचारस्त्वया लिखितः। विद्यालय-बालकप्रभृतिभ्यः शिक्षाप्रदानस्येयं भावना समीचीना। अत्र नास्ति संशयलेशोऽपि। परन्तु अस्माकं कार्यं तावद् अनाथदरिद्रमूर्खकृषकाणां श्रमिकाणां च कृते। प्रथमतः तेषां सेवा करणीया। तदनन्तरञ्च अवकाशः स्यात् चेत् उच्चश्रेणीसम्भूतानां कृते किञ्चित् करणीयम्। कृषकाः श्रमिकाश्च प्रीत्या प्रभाविता भविष्यन्ति। अनन्तरं त एव स्वल्पमपि अर्थं संगृह्य स्वेषां ग्रामेषु आश्रमं प्रतिष्ठापयिष्यन्ति। क्रमेण तेष्वेव कश्चित् शिक्षको भविष्यति। कृषकाणां कतिपयपुत्रकन्यानां कथञ्चिद् लेखने पाठने च आत्मानं नियोजय। बहुविधाः भावनास्तेषां मस्तिष्केषु प्रवेशय। ततश्च ग्रामस्य कृषकाः सर्वेभ्यः अर्थं संगृह्य तेषु एकैकं स्वस्वग्रामे परिपालयिष्यन्ति। *उद्धरेदात्मनात्मानम्* (स्व एव स्वं रक्षेत्)—एतच्च सर्वथा सत्यम्। यथा ते आत्मभिरेव आत्मनां कार्यं कर्तुं शक्नुवन्ति तथा वयं तेषां सहायतां करिष्यामः। अस्मभ्यं ते कृषकाः प्रतिदिनम् अन्नं प्रददति। एतदेव प्रकृतं कर्म। यदा ते तेषां दशाम् अवगमिष्यन्ति उपलप्स्यन्ते च सहायतायास्तथा उन्नतेः प्रयोजनीयतां तदैव ज्ञास्यसि तव कर्म सफलमिति। धनिनः दयापरवशाः सन्तो दरिद्रान् यद् उपकरिष्यन्ति तन्न स्थायित्वमाप्नोति, तेन च परिणामे उभयोरेवापकारो जायते। कृषकाः श्रमिकाश्च मृतप्रायाः। धनिनस्तान् जागरयन्तु इति एतन्मात्रमेव काङ्क्षितम्। ततश्च कृषकाः स्वेषां कल्याणं

स्वयमेव अधिगच्छन्तु पश्यन्तु कुर्वन्तु च। अवहितो भव कथमपि धनिभिः कृषकाणां श्रमिकाणाञ्च विवादो यथा तेन न संघटेत। धनिनः मा अपवदत। स्वकार्यमुद्धरेत् प्राज्ञः। विज्ञजनः स्वकार्यमुद्धरेत्।

जय गुरो, जय जगदम्बे। भयेन किम्? अवकाशः प्रयोगः प्रतिविधानञ्च स्वयमेव आगमिष्यन्ति। न जाने सुफलं कुफलं वा किञ्चन। यदि यूयं किञ्चित् कार्यं कुरुथ तदा अहं सुखी भवामि। वाक्कलहः शास्त्रवचनं नीतितत्त्वञ्च मम एतस्मिन् परिणतवयसि विषवत् प्रतीयन्ते। यः कर्म करिष्यति स एव मम शिरसि मणिरूपेण स्थास्यतीति निश्चितम्। मिथ्यावाग्विन्यासेन कलहेन च कालः विनश्यति, आयुः क्षिणोति, लोकहितन्तु न किञ्चिदपि अग्रेसरति। मा भैषीः। साधु! गुरुदेवः तव हृदये उपविशतु जगदम्बा तव हस्ते अधिष्ठिता भवतु।

इति

विवेकानन्दः।

गलिततिमिरमालः शुभ्रतेजःप्रकाशः

धवलकमलशोभः ज्ञानपुञ्जाट्टहासः ।

यमिजनहृदिगम्यो निष्कलो ध्यायमानः

प्रणतमवतु मां सः मानसो राजहंसः ।।

दुरितदलनदक्षं दक्षजादत्तदोषं

कलितकलिकलङ्कं कम्रकह्लारकान्तम् ।

परहितकरणाय प्राणप्रच्छेदप्रीतं

नतनयननियुक्तं नीलकण्ठं नमामः ।।

— स्वामी विवेकानन्द



RAMAKRISHNA MISSION INSTITUTE OF CULTURE

*Order for books may be placed at*
*Website :* www.sriramakrishna.org
*Email* : rmic@vsnl.com


ISBN 978-93-81325-38-4

www.sriramakrishna.org